॥ श्रीः ॥

जयकृष्णदास-कृष्णदास प्राच्यविद्या ग्रन्थमाला

५



॥ श्रीः ॥

# कालिकापुराणम्

सम्पादकः

**श्रीविश्वनारायणशास्त्री, संसदसदस्यः**

*साहित्य-व्याकरण-मीमांसाशास्त्रि-काव्यतीर्थः*

प्रस्तावना लेखक

**आचार्य बलदेव उपाध्याय**

*भू० पू० संचालक, अनुसन्धान संस्थान*

*वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी*




**चौखम्भा संस्कृत संस्थान**

भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा विक्रेता

**पो० आ० चौखम्भा, पो० बा० नं० १३९**

**जड़ाव भवन के. ३७/११६, गोपाल मन्दिर लेन**

**वाराणसी ( भारत )**

॥ श्री ॥

चौखम्बा सुरभारती ग्रंथमाला

१



# पुराणपर्यालोचनम्

( गवेषणात्मको भागः )

लेखक

डॉ० श्रीकृष्णमणित्रिपाठी

( आचार्य, एम० ए० पी-एच्० डी० )

लब्धावकाशप्राध्यापक , पुराणेतिहास-भूगोल-संस्कृतिविभागाध्यक्षश्च

वाराणसेय श्रीसम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य



सम्पादक

डॉ० विश्वनाथपाण्डेयः

स० कालेज, काशी हिन्दूविश्वविद्यालये

वाराणस्याम् ।




चौखम्बा सुरभारती प्रकाशन

वाराणसी ।

१९७८

प्रकाशक :

**चौखम्बा सुरभारती प्रकाशन**

के. ३७/११७, गोपालमन्दिर लेन, पो० बा० १२९,

वाराणसी–२२१००१



प्रथम संस्करण १९७६

मूल्य ३०–००

अपर च प्राप्तिस्थानम्

**चौखम्बा विद्याभवन**

पो० बा० ६९, ( बनारस स्टेट बैंक भवन के पीछे )

चौक, वाराणसी–२२१००१

मुद्रक :

चौखम्बा मुद्रणालय

वाराणसी–२२१००१

THE

CHAUKHAMBA SURBHARATI GRANTHAMALA

1



# PURĀṆA-PARYĀLOCANAM

*( Gaveshanatmako Bhagah )*

By

**Dr. Srikrishnamani Tripathi**

Acharya, M. A., Ph. D., Sahityaratna

*Retired Prof. & Head of the Deptt. of Puranetihas, Geography & Culture Shri Sampurnananda Sanskrit Vishwavidyalaya,*

VARANASI

*Edited by*

**Dr. Vishwanath Pandey**

Banaras Hindu University, Varanasi



THE

CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI

1976



श्रीमानयं रामयशास्त्रिपाठी महाशयत्वेन गतः प्रसिद्धिम् ।
सन्यासमादाय ततः सुधीशः श्रीराघवेन्द्राख्यसरस्वती सः ।।



# समर्पणम्

श्रुतिस्मृतिपुराणप्रतिपादितसनातनधर्मानुकूलमर्यादाप्रतिपालकाना भारतीयसस्कृति-
सस्कृतान्त करणाना नयविनयशीलसौजन्यदयादाक्षिण्यादिगुणगणालङ्कृताना
शिक्षणकलाकौशलप्रख्यातकीर्तीना सौम्यमूर्तीना सुरभारतीसमुपासना-
समासक्तचेतसा सचेतसा स्वनामधन्याना विद्धन्मूर्धन्याना महाशयजीति
नाम्ना प्रसिद्धानां तुरीयाश्रमे श्रीराघवेन्द्रानन्द सरस्वतीनामधेयाना
परमश्रद्धास्पदप्रात स्मरणीयपूज्यपादानागुरुवराणा सर्व-
तन्त्रस्वतन्त्राणा श्रीमता प० रामयशस्त्रिपाठिमहो-
दयाना पुण्यस्मृतौ ( त्वदीय वस्तु गोविन्द !
तुभ्यमेव समर्पये ) इति धिया श्रद्धया
प्रस्तुतोऽय पुराणपर्यालोचनस्य
गवेषणात्मको भाग. ।

विनीत –

**श्रीकृष्णमणित्रिपाठी**

# विषय-सूची

युग्म-त्रि-व्योम-नेत्राब्दे वैक्रमीये शुभङ्करे ।
फाल्गुनस्यासिते पक्षे शिवरात्र्या शनौ दिने ।।
त्रिपाठ्युपाह्व-श्रीकृष्णमणिशास्त्री सतां मुदे ।
पर्यालोचनमेतद्धि पुराणाना व्यधादिदम् ।।





वेदान्त-साङ्ख्य-साहित्य-पुराणाचार्यपारगः ।
त्रिपाठ्युपाह्व श्रीकृष्णमणिशास्त्री विराजते ॥

# प्राक्कथनम्

> वेदेभ्य उद्धृत्य समस्त धर्मान्
> योऽयं पुराणेषु जगाद देवः ।
> व्यासस्वरूपेण जगद्धिताय
> वन्दे तमेनं करुणासमेतम् ॥

नह्यविदितचरमस्ति केषाञ्चिदपि विपश्चिता यज् जगदिदानीं यदभिमुखं दृश्यते तद् आगमिष्यन्त्या. विभीषिकातो रक्षितुमल चेत् किञ्चित्तर्हि भारतीया संस्कृतिरेव। सा च वेदप्राणा, वेदाना सम्यगवगतये यावन्ति सन्ति साधनानि तेषा मूर्धन्यता पुराणानामेव। तेषु हि विद्यते वेदोक्त-सूक्ष्मतत्त्वाना सविस्तर व्याख्यानमेवेति निश्चवचम् ।

भारतीयार्यसंस्कृते सम्यक् परिशीलनार्थ वेदाना तन्मूलकस्मृतितन्त्राणां च समीक्षणमावश्यक तथा वेदोपवृहकाणामितिहासपुराणानां परिज्ञानम्। साम्प्रतं वैदिकशैल्या कर्मोपास्तिसंवित्तरीणामुच्छिन्नतयाऽगाधाचरससारार्णवमुत्तरीतुमशक्नुवतामुद्धाराय च श्रुतिस्मृत्यप्रतिकूलम् आयाससाध्यप्रचुरवस्त्वनपक्षपौराणिकवर्त्मैव परमं श्रेयस्करम्। पुराणमहोदधाववगाहननिपुणतायै विचाराणां प्रामाणिकतायै च वेदानामनुशीलन नितान्तमावश्यकम्। अतएव निखिलशास्त्रपारावारपारदृश्वभिः वेद-वाङ्मय-गुणगौरवाकृष्टहृदयै सहृदयैः प्रेक्षावद्भिरनिवार्यतया वेदानामध्ययने वलं दत्तमस्ति—"**ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च**,"।

भारतीयसंस्कृतेमूलमाधार सन्ति वेदा, यतो हि वेदानामक्षुण्णा विचारधारा एव भारतीयसस्कृतिद्वारा नित्य निरन्तर प्रवाहिता भवति। वेदाना व्यापकप्रभावादेवानेकैराक्रमणै. सद्भिरपि अद्यत्वेऽपि भारतीया सस्कृतिः अवाधगत्या पूर्ववत् प्रचलति। अतएव प्राचीनेषु वाङ्मयेषु वेदाना महत्त्वं विविधैः प्रकारै. गीतमस्ति। वेदानामनुशीलनेन प्राणिनो लौकिकं पारलौकिक च अभ्युदय सम्पादयन्त. स्व स्वं जीवन समुन्नतिशील विधातुं शक्नुवन्ति। मानवजीवने ये ये विभिन्ना प्रसङ्गाः

उपतिष्ठन्ते, तेषा तेषा मार्गप्रदर्शनस्य क्षमता वैदिकविचारधाराया एकं वैशिष्ट्य विद्यते।

मानवजीवनस्य कर्तव्यविषये वैदिकविचारधाराया दृष्टयो न सन्ति एकाङ्गिन्यः, अपितु ता. सन्ति सार्वभौमा। परम्पराप्राप्तभारतीय-दृष्ट्या वेदा. सन्ति, भ्रमप्रमादविप्रलिप्साकर्णापाटवादिपुन्दोषशङ्का-कलङ्कपङ्करहितत्वेन अपौरुषेया अनादयो नित्याश्च। अतएव **'वेदोऽखिलं धर्ममूलम्'** ( २।६ )। इतिमनूक्त्यनुसारं वेदमूलको धर्मोऽपि सनातनः, अपरिवर्तनशीलश्चास्ति। अतो धर्माचरणस्य मूलमाधारो वेद एवाभिमतोऽस्ति। वेदमूलकत्वादेव मनूक्तेरपि प्रामाण्यमङ्गीक्रियते[1]। तत्सम्बन्धे कस्यापि क्रमिकविकासस्य ह्रासस्य विचारस्य च कृते नास्ति किमपि स्थानम्, किन्तु वैज्ञानिकदृष्ट्यनुसारमितरमानवीयविचारधारावद् वैदिकविचारधाराऽपि अस्माकमन्वेषणस्यास्ति विषयः[2]।

प्राचीने काले वैदिकविचारधाराया भव्यभावना मानवजीवनस्य कर्तव्यविषयेषु आसीदतिव्यापिका। अत्र नास्ति कश्चन सन्देहलेशो यदुत्तरकालिकाभिः विभिन्नधाराभिरपि भारतीयसंस्कृतेः समये समये महानुपकारो जातः। अथापि मानवीयजीवननिमित्तं लौकिकाभ्युदयो-पयोगिशिक्षाऽऽदर्शदृष्ट्या वैदिकविचारधाराया व्यापकं क्षेत्रं न केवलं भारतीयानामेव कृतो गौरवस्यास्ति विषयः, प्रत्युत विदेशीयानामपि कृते गर्वस्यास्ति वस्तु। वैदिकविचारधाराया व्यापकं क्षेत्र समस्ताया जातेः, सार्वभौमस्य सार्वकालिकस्य आदर्शमयस्य सन्देशस्य चोपस्थापक-मस्ति।

वैदिकविचारधाराया मानवीयः पक्षो विश्वशान्तेः विश्ववन्धुत्वस्य चोदात्तया भावनया संवलितो वर्तते। वैदिकमन्त्रेषु स्थले स्थले मानव-मात्रस्य कृते परस्परं सौहार्दस्य साहाय्यस्य मित्रतायाश्च भावनाना-मुदात्त उपदेशो विद्यते। यथा ऋग्वेदे **'पुमान् पुमांसं परिमातु विश्वतः'** ( ६।७५।१४ ) अर्थात्—एकेन पुंसा द्वितीयस्य पुंसः संरक्षण मानव-

---

१ यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥ ( मनुस्मृति २।७ )

२. यच्चापि लौकिकं वस्तु संस्था आचारपद्धति।
भावैः संप्रेरितस्यैव मानवस्येह सा कृतिः॥ ( रश्मिमाला २८।२ )

मात्रस्यास्ति पुनीत कर्तव्यम् । यजुर्वेदे-**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे** ( ३६।१८ ) अर्थादह न केवल मानवमात्रम्, अपितु समस्तान् प्राणिनो मित्रदृष्ट्या पश्येयम् । एवमथर्ववेदेऽपि—**कृण्मो ब्रह्म वो गृहे संज्ञानां पुरुषेभ्य.** ( ३।३०।४ ) अर्थात्—भो जनाः ! सर्वे वयं मिलित्वा एवं प्रार्थना कुर्यामो येन मनुष्येषु सुमतेः सद्भावनायाश्च विस्तारः स्यात् । इत्थ मानवमात्रं प्रति कल्याणभावनायाः सद्भावनायाः सौहार्दस्य च समुद्बोधका अनेके मन्त्रा वेदवाङ्मये समुपलभ्यन्ते ।

एवमुत्कृष्टमानवीयपक्षेण सहैव वैदिकी विचारधारा उदात्तानामादर्शाना रक्षायै वीरोचितैः सघर्षैः युद्धस्यावश्यकताभिश्चापरिचिता नास्ति । **"सत्यं वै देवा अनृतं मनुष्याः"** सिद्धान्तानुसार देवा वास्तविकताया अनुगामिनो भवन्ति, मनुष्याश्च स्वभावतस्तत्प्रतिकूलमप्याचरन्तीति मनुष्याणा व्यवहार प्राय आदर्शवादतो दूरे तिष्ठति । एवम्विधाया परिस्थितौ विश्वशान्ते विश्वबन्धुत्वस्य च मार्गे गन्तुमीहमानैः महापुरुषैः स्वकीयोत्कृष्टानामादर्शानां रक्षायै आत्मनो रक्षायै च विरोधिभिः सह संघर्षस्य तेषां दमनस्य, बाधकैः शत्रुभिः साकं युद्धस्यचावलम्बनं नितरामपेक्षितं जायत इति तथ्योऽभिप्रायो वैदिकविचारधारया अप्रच्छन्नो नास्ति । अतो वैदिकमन्त्रेषु स्पष्टतया प्रतिपादितमस्ति यत्त्वया नूनमवधेय यत् तव वास्तविकसमुन्नते बाधकाः शत्रवः त्वयि विजयं प्राप्तु न शक्नुयुः **"मा त्वा परिपन्थिनो विदन्** ( य० वे० ४।३४ ) यो हि निष्कारणमस्मान् द्वेष्टि, अतः तं वयमपि स्वद्वेष्यं मन्यामहे, तं वयं सर्वदा विश्वकल्याणकारिणीभ्यः शक्तिभ्यः समर्पयामः, यतस्ताः तं सहरेयुः—**"योऽस्मान् द्वेष्टि यं वयं द्विष्मः तं वो जम्भे दध्मः** ( अ० वे० ७।९३ ) । एवं प्रकारिकाया आदर्शरक्षाया आत्मरक्षायाश्च वीरौचितभावनया परिपूर्णा हृदयस्पर्शिनो बहवो वेदमन्त्रा ऋग्वेदस्यदशमे मण्डले अथर्ववेदस्य च सौमनस्यसूक्ते समुपलभ्यन्ते ।

वैदिकविचारधारायाः सामाजिकमपि जीवनम् अत्यन्तं व्यापकं विद्यते । स्वभावतो वैयक्तिकेषु स्वार्थेषु लिप्ताना मानवाना समक्षे समाजस्योन्नतये आत्मरक्षायै च समष्टिभावनोपस्थापनाय वेदेषु बहवो मन्त्रा निर्दिष्टा. सन्ति, यत्र समष्टिभावनायाः समुद्बोधनमस्ति यत्—अरे मानवाः ! भवन्तः समष्टिभावनया सहैव कार्येषु प्रवृत्ता भवन्तु, ऐक्यमत्येन तिष्ठन्तु, परस्परं सद्भावेन च व्यवहरन्तु—

**(क) संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।**
**देवा भागं यथापूर्वे संजानाना उपासते ।।**
**( ऋ० वे० १०।१९१।२ )**

**(ख) अग्ने नय सुपथा राय अस्मान् । ( य० वे० ४०।१६ )**

**(ग) भद्र कर्णेभि. श्रुणुयाम देवाः । ( य० वे० २५।२१ )**

वैदिकधारायाः सामाजिकजीवनस्य सुव्यवस्थायै वर्णाश्रमव्यवस्थायामपि वलं दत्तमस्ति । चतुर्ष्वपि वेदेषु विश्वव्यापिनो विराट्पुरुषस्य वर्णनप्रसङ्गे ब्राह्मणः विराट्पुरुषस्य मुखस्थानीय, क्षत्रियो वाहुस्थानीय', वैश्य ऊरुस्थानीयः शूद्रश्च पादस्थानीयः प्रोक्तो विद्यते—

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्य कृतः ।**
**ऊरू तदस्य यद्वैश्य. पद्भ्या शूद्रो अजायत ।।**
**( ऋग्वेदे १० । ९० । १२ )**

मन्त्रोऽयमालङ्कारिकप्रक्रियाद्वारा ब्राह्मणादिषु चतुर्षु वर्णेषु परस्परमङ्गाङ्गिभावं सम्बन्धमभिव्यञ्जयति । यथा शरीरे मुखतः पादपर्यन्तं सर्वेषु अङ्गेषु परस्परमङ्गाङ्गिभावस्यान्योन्यमाश्रयाश्रितभावसम्वन्धो भवति तथैव समाजरूपिणि शरीरे चतुर्णामपि वर्णाना परस्पर दृढतरः सम्वन्धोऽस्ति । शरीरे किमप्यङ्गमन्यमङ्ग नोपेक्षते । एकस्याङ्गस्य पीडाया सर्वाण्यङ्गानि व्यकुलीभवन्ति, नापि किमप्यङ्ग स्वार्थम्, अपि तु अन्येषामङ्गाना हितार्थमेव कार्यं कुरुते । वस्तुत' कस्यापि समुन्नतस्य समाजस्य विभिन्नानामङ्गाना परस्पर सम्बन्धविषये इतोऽन्यद् दृष्टान्तं भवितु नार्हति ।

एवमयं मन्त्रः स्पष्टतया सभ्यसमुन्नतसमाजस्य विभिन्नानि अङ्गानि चतुर्षु वर्गेषु विभज्य तेषु परस्पर घनिष्ठस्याङ्गाङ्गिभावस्यादर्शमय सम्वन्धं प्रतिपादयति । सम्बन्धोऽय पारस्परिकसहयोगस्य सामञ्जस्यस्य चाधारेण भवितुमर्हति, नान्यथा । अत्रेषदपि संघर्षभावना त सम्वन्धं समूल नष्टुं पर्याप्ता भवितुमर्हति । समाजस्यैवंविध चित्रणं वैदिकविचारधाराया व्यापिकाया वैज्ञानिकदृष्टे' एक समुज्वलं निदर्शनस्ति ।

एव चतुर्णां ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासाश्रमाणामपि विवेचनेन साक द्वयो ब्रह्मचर्य-गृहस्थाश्रमायोः सम्बन्धे वेदमन्त्रेषु यो भव्य उत्कृष्टश्च विचारो व्यक्तीकृतोऽस्ति, स भारतीयसंस्कृतेः अमूल्यो निधिरस्ति ।

राजनीतिकस्यादर्शस्य सम्वन्धेऽपि वैदिकविचारधाराया व्यापिका दृष्टिरस्ति। वैदिकविचारधारायाः सर्वतो वैशिष्ट्य तद्व्यापकदृष्टौ निहितमस्ति। तस्या उद्देश्यमिदमेवास्ति यद् मानव चतुर्णामपि पुरुषार्थानां धर्मार्थकाममोक्षाणामभ्युदयस्य निःश्रेयसस्य च प्राप्ति नूनं कुर्यादिति। इत्थं वैदिकविचारधाराया व्यापिका दृष्टिः सर्वोन्नतस्य राष्ट्रस्य कृते एक सुन्दर निदर्शन वर्तते।

एवविधाना सर्वजनहिकारिणामुत्कृष्टविचाराणां भावनया ओत-प्रोत-वेदानामुपवृंहणार्थमितिहासस्य पुराणस्य च निर्माणं जातमस्ति। तत्र मनोमुग्धकारिणो ज्ञानस्य विज्ञानस्य च पर्याप्ता चर्चा कृताऽस्ति। महर्षिणा व्यासेनालौकिक्या तपस्यया परमात्मनोऽनुकम्पया वेदाना यथार्थमर्थ-मवगत्य तत्प्रचार-प्रसारयोरावश्यकतामनुभूय पुराणेतिहासयो प्रणयनं कृतम्। वेदेषु ये विषया गूढतया सूक्ष्मरूपेण निर्दिष्टाः सन्ति तेषामेव पुराणेतिहासयोः प्रपञ्च. कृतोऽस्ति। अत एव इतिहासपुराणद्वारा वेदानामुपवृहणस्य सङ्केतः कृतो वर्तते[1]।

पुराणेन साकमितिहासस्यास्ति घनिष्टतम सम्बन्ध.। प्राचीन-ग्रन्थेषु द्वयो र्नाम सम्मिलितरूपेण सहैवोपलभ्यते यथा छान्दोग्योपनिषदि **इतिहासपुराणं पञ्चमं वेदानां वेदम्** (७।१।२) वात्स्यायनेन न्यायभाष्ये विषयभेदेन साहित्यस्य त्रयो भेदाः कृता सन्ति-यज्ञो लोक-चरित व्यवहारव्यवस्थापनं च। तत्र यज्ञो मन्त्रब्राह्मणात्मकस्य वेदस्यास्ति विषय, लोकचरितमितिहासपुराणस्य विषयः तथा व्यवहारव्यवस्थापनं धर्मशास्त्रस्यास्ति विषयः। तत स्कन्दपुराणेन लोकप्रसिद्ध्या तद् भिन्नत्वेनाङ्गीकृतम्[2]। अत एव शुक्रनीतौ तयोर्लक्षणं भिन्न भिन्न कृतम्[3]। निरुक्तेऽपि यास्काचार्येण भिन्न भिन्न लक्षणमभिहितम्[4]।

---

१. **इतिहासपुराणाभ्यां वेद समुपवृंहयेत्।**
**बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति॥ ( म० भा० आ० प० १।२६७ )**

२. **इतिहासपुराणानि भिद्यन्ते लोकगौरवात्। ( कु० ख० ४०।१९८ )**

३. (क) **प्राग्वृत्तकथनं चैव राज्यकृत्यमिषादित।**
**यस्मिन् स इतिहासः स्यात् पुरावृत्तं स एव हि॥ ( ४।९२ )**
(ख) **सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं यस्मिन् पुराणं तद्धि कीर्तितम्॥ ( ४।९३ )**

४ **पुराभवं पुराणम्। इति ह आस इतिहासः।**

अत्र पुराणशब्दस्य तात्पर्यमस्ति यत् पुराणं सदपि नवीनमस्ति। अर्थात् यत् शास्त्रं पुरातनघटनाना वर्णन विदधान सदपि वर्तमाना भविष्यन्ती च घटना वर्णयति तदस्ति पुराणम्, यच्च शास्त्रं केवलं प्राचीनानामेव घटनाना वर्णन करोति सोऽस्ति इतिहासः।

एवमनेकस्थलेषु इतिहासपुराणशब्दौ सहैव पृथक् पृथग्वा प्रयुक्तौ-स्त। अत एव विद्वद्भि एक द्वितीयस्य पूरकमङ्गीकृतमस्ति। एव-मितिहासपुराणशब्दौ कदाचन भिन्नभिन्नयोरर्थयो प्रयुक्तौ स्तः कदाचिदे-कस्मिन्नवार्थे प्रयुक्तौ स्त। अतएव अमरकोषेऽमरसिहेन यल्लक्षणमितिहास्य कृत तदेव लक्षण नीलकण्ठेन महाभारतटीकाया पुराणस्य कृत विद्यते। **इतिहास. पुरावृत्तम्"** (अ को १।५) **"पुराण पुरावृत्तम्"** (१।५।१)।

एवं पुराणे इतिहासशब्दस्य इतिहासे च पुराणशब्दस्यापि प्रयोगो दृश्यते यथा मत्स्यपुराणे—**अत्राप्युदाहन्तीममितिहासं पुरातनम्** (१७।६) महाभारते च—**द्वैपायनेन यत् प्रोक्तं पुराण परमर्षिणा** (१।१।१७)।

यज्ञवल्क्यानुसारं तु इतिहासापेक्षया पुराणस्य क्षेत्र विस्तृत विद्यते। तेन याज्ञवल्क्यस्मृतौ चतुर्दशविद्याना गणनाप्रसङ्गे[1] केवल पुराणस्यैव गणना कृताऽस्ति नेतिहासस्यापि, किन्तु तत्र विद्वद्भि पुराणमितिहासस्यो-पलक्षक मत्वा पुराणे इतिहासस्यान्तर्भाव विधाय तस्यापि विद्यात्व-मङ्गीकृतम्। राजशेखरो हीतिहासं पुराणप्रभेद मनुते।

ब्रह्मवैवर्तपुरणोयश्रीकृष्णजन्खण्डानुसार महाभारतमितिहासः, बाल्मीकिरामायण च काव्यमुच्यते[2], परन्तु काव्यमीमासाया कविवरेण राजशेखरेण इतिहासस्य द्वौ भेदौ कृतौ स्तः-परिक्रिया, पुराकल्पश्च, तदनुसारमेकनायिका कथा परिक्रिया तथा अनेकनायिका कथा पुराकल्पः प्रोच्यते[3]। तथाचानेकनायककथाविशिष्टत्वेन महाभारतस्य, एकनायक-कथासनाथत्वेन रामायणस्य च ग्रहणादितिहासपदेनोभयोरपि ग्रहणाद्-उभयमपीतिहासत्वेन गृह्यते विद्वत्समाजे।

---

**१. पुराण-न्याय-मीमांसा-धर्मशाङ्गमिश्रिता।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ (१।३)**

**२. इतिहासो भारतं च वाल्मीकं काव्यमेव च (१३१।२३)**

**३. परिक्रिया पुराकल्प इतिहासगति द्विधा।**
**स्यादेकनायिका पूर्वा द्वितीया बहुनायिका॥ (का. मी. २)**

कौटिल्येन तु स्वकीयेऽर्थशास्त्रे पुराणाना गणना इतिहासाभ्यन्तरे कृताऽस्ति। तस्य दृष्टौ इतिहासस्य क्षेत्रं पुराणापेक्षयातिविस्तृमस्ति। तेन पुराणम्, इतिवृत्तम्, आख्यानम्, उदाहरणम्, धर्मशास्त्रं च इतिहासान्तर्गतं स्वीकृतमस्ति-**पुराणमितिवृतमाख्यायिकोदाहरणं धर्मशास्त्रं चेतिहासः** ( ५।१४ )

यथा पुराण मुख्यतया सर्गादीना पञ्चाना विषयाणा वर्णनेन सह धर्म-दान-व्रत-तीर्थ-भक्ति-अवतारादीनामपि पर्याप्तमात्रया वर्णनं करोति तथैवे-तिहासोऽपि सस्कृतसाहित्ये न केवलं प्राचीनाना घटनानामेव वर्णनं विधत्ते, प्रत्युत विभिन्नव्यावहारिकविषयाणामपि शिक्षां प्रदाय मानव-हृदयस्य मोहान्धकारमपि निरस्यति, यस्य सङ्केतो महाभारते उप-लभ्यते[1]। अत एव महर्षिणा व्यासेन तत्र प्रतिज्ञातं यद् धमार्थकाम-मोक्षाणा विषयेऽत्र न वर्णितम् अस्ति, तदन्यत्र नोपलभ्यते यदिहास्ति वर्णित तदेवान्यत्रापि वार्णिमुपलभ्यते[2]।

अत एव महाभारतसमालोचकानामपि सुनिश्चित मतमस्ति यत् **'यन्न भारते तन्न भारते'**। अतो हि महाभारत संस्कृतसाहित्यस्य सर्वाङ्गपूर्णः सर्वमान्यश्च एकोऽद्भुत. इतिहासग्रन्थोऽस्तीति निर्विवादम्।

सब्रह्मचर्यं तपसा सर्वरहस्यमासाद्य वेदविभागानन्तरं प्रतिदिनं प्रातरुत्थाय कृताह्निककृत्य. सत्यवतीनन्दनो भगवान् कृष्णद्वैपायनो महर्षि. वेदव्यासोऽतिविशालकलेवरं महाभारतनामकमितिहासग्रन्थं त्रिभिः वर्षैरपूरयत्[3]।

वेदविभाजन-महाभारतनिर्माणानन्तरं भगवता वेदव्यासेनाष्टादश-पुराणानि प्रणीतानि। तत्र प्रथमं ब्रह्मपुराणम्, द्वितीयं पद्मपुराणम्,

---

१. इतिहासप्रदीपेन मोहवारणघातिना।
लोकगर्भगृह कृत्स्नं यथावत् संप्रकाशितम्॥ १।१।८७

२. धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ!
यदिहास्तितदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ ६२।५३

३. तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः॥ १।१।५४
त्रिभिर्वर्षैरिदं पूर्णं कृष्णद्वैपायनः प्रभुः।
अखिलं भारतं चेदं चकार भगवान् मुनिः॥ १४।५।४८

तृतीय विष्णुपुराणम्, चतुर्थं शिवपुराणम्, पञ्चम श्रीमद्भागवतम्, षष्ठं नारदीयपुराणम्, सप्तम मार्कण्डेयपुराणम्, अष्टमम् अग्निपुराणम्, नवमं भविष्यपुराणम्, दशमं ब्रह्मवैवर्तपुराणम्, एकादशं लिङ्गपुराणम्, द्वादशं वाराहपुराणम्, त्रयोदश स्कन्दपुराणम्, चतुर्दशं वामनपुराणम्, पञ्चदशं कूर्मपुराणम्, षोडशं मत्स्यपुराणम्, सप्तदश गरुडपुराणम्, अष्टादशं च ब्रह्माण्डपुराणम्। एवमादौ म–अक्षरे पुराणद्वयम्, भ–अक्षरे पुराणद्वयम्, ब्र–अक्षरे पुराणत्रयम्, व–अक्षरे पुराणचतुष्टयम्, अ–अक्षरे एक पुराणम्, ना–अक्षरे पुराणमेकम्, प–अक्षरे पुराणमेकम्, लि–अक्षरे पुराणमेकम्, ग–अक्षरे पुराणमेकम्, कू–अक्षरे पुराणमेकम्, स्क–अक्षरे च पुराणमेकम्। सङ्कलनया इमानि सन्ति अष्टादशपुराणानि । तथा चोक्तं देवीभागवते[1]। वैदिकरहस्यमयज्ञानानामनुशीलननिमित्तं पुराणसाहित्यं नितान्तमुपादेयमस्तीति वेदेषु सूक्ष्मरूपेण वर्णिताना विषयाणमवगतये आख्यानोपाख्यानगाथाकल्पशुद्धयादिभि पुराणाना प्रणयन जातम्। तथा चोक्त विष्णुपुराणे[2]। इत्थ गूढतया निर्दिष्टाना वेदविषयाणां भाष्यरूपेण विस्तारार्थ सरलतमभाषाया माध्यमेन भागवान् व्यासदेवोऽष्टदश पुराणानि विरचयां चकार[3]।

आनन्दकन्द सच्चिदानन्दो व्रजेन्द्रनन्दनन्दनो गोपगोपीजनवल्लभो राधाविलासरसिको लीलापुरुषोत्तम· पूर्णषोडशकलावतारो भगवान् श्रीकृष्णचन्द्रो दिव्य चक्षुः प्रयच्छन् अनन्यसखायं भक्तप्रवरमर्जुनं यद्विश्वरूपमदर्शयत्, तदेव भगवता वेदव्यासेन पुराणात्मना आवालवृद्धं स्त्री-पुरुषाणा कृते सुलभमकारि। यतो हि पुराणेषु भगवतो विराट्रूपं वर्णयत्ता तेन विश्वस्य सर्वे विषया उपस्थापिता सन्ति। विश्वस्मिन् नैतादृक् किञ्चित् तत्त्वमवशिष्ट यत् किल महर्षिव्यासप्रणीतेषु पुराणेषु नोट्टङ्कित स्यात्। अनया विशेषतया विवेकिनो विद्वास· कथयन्ति यद्·**व्यासोच्छिष्टं जगत् सर्वम्**। यथा परमकारुणिकेन महर्षिणा

---

१. मद्वय भद्वयं चैव ब्रत्रय वचतुष्टयम्।
अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते ॥ १।२।३

२. आख्यानैश्चाप्युपाख्यानै गाथाभिः कल्पशुद्धिभि।
पुराणसंहितां चक्रे पुराणार्थविशारदः ॥ ३।६।१५

३. विस्ताराय च वेदानां स्वयं नारायणः प्रभुः।
व्यासरूपेण कृतवान् पुराणानि महीतले ॥

पतञ्जलिना प्रणीतस्य योगशास्त्रस्य अय सिद्धान्तोऽस्ति यत् समाधिना निरुद्धासु चित्तवृत्तिषु स्वयमेव सर्वद्रष्टा परमात्मा साधकस्य अन्तः करणे प्रकाशते[१] तथैव पुराणानुसारम् अनन्यया भक्त्या भक्तस्य हृदये परमेश्वरपदोपलब्धिः स्वभाविकी ।

पुराणेषु सर्वाभीष्टफलप्रदायकाना देवानां देवीना च लीलामय्यो गाथा गीताः सन्ति । तप पूतान्त करणानामृषीणा मुनीनाञ्चाख्यानो-पाख्यानानि प्रोक्तानि, प्रख्यातकीर्तीना प्रजापालकाना धार्मिकाणामुदा-रात्मनां पुण्यश्लोकाना नृपतीना समुज्ज्वलानि जीवनचरितानि च वर्णितानि सन्ति । एव तत्र-इतिहास काव्य कला राजनीतिः अध्यात्म-ज्ञानं व्यवहारज्ञान सर्वविधा विद्याश्च वर्णिता वर्तन्ते । पुराणेभ्यः सामान्यवर्गमारभ्य परमोच्चतमान् यावत् समेषा जानानां यथाधिकार लाभो भवितुमर्हति । पुराणेषु वर्णित तत्त्वज्ञान सातिशय सुगमञ्चास्ते, प्रसादगुणश्च सर्वत्र परिपूर्णो विद्यते । अनेकश पठितेष्वपि पुराण-ग्रन्थेषु पाठकाना पुनः पुन पुराणपाठेऽभिरुचि वर्द्धते एव, न तेपा चिते कदाचिदपि तत्रारूचिर्जायते ।

किञ्च चिन्ताशीलैः पाठकैरेतन्निर्विवाद मन्यते यादन्यग्रन्थाना-मेकवारं द्विवारं वाऽध्ययनेन पुनस्तान् पठितु पाठकाना चित्त विरस जायते, किन्तु न जाने पुराणेषु कीदृगलौकिकत्वं निहितमस्ति यद् याव-द्वारमेषा पाठो विधीयते । तावदेवाधिकतरमेतेषा माधुर्यमेधमान पाठ-काना मनासि मोहयत्येव । परः सहस्रवर्षेभ्योऽपि कालेभ्यो जना पुराणपाठं प्रकुर्वते, एकव्यक्तिरपि बहुवारं पुराणमधीते, शृणोति च पर तेषा नूतनत्व दैनन्दिन विवर्द्धते एव । सदा पल्लविता कल्पलतेव प्राचीनाऽपि पुराणग्रन्थमाला नवीनेवानुभूयते, नैव पुराणत्वमुपगन्तु-मीहते पुराणानां सर्वग्राहकत्वमनुपममस्ति । सनातनधर्मस्य श्रुतिः स्मृतिः पुराणमिति त्रीणि प्रमाणिकानि ग्रन्थरत्नानि समाम्नायन्ते । तत्र श्रुतीना परब्रह्मणः साक्षान्निःश्वासभूतत्वात् तासा रहस्य न सर्वैः सहसाऽवगन्तु शक्यमस्ति, किन्तु वेदे कृतभूरिपरिश्रमा एव वेदाना यथामर्थमवगन्तु शक्नुवन्ति ।

---

१. ( क ) योगश्चित्तवृत्तिनिरोधः ॥ यो सू. १।२

( ख ) तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ यो. सू. १।३

पूज्यपादैः धर्मरहस्यविज्ञ महर्षिभिः श्रुत्याश्रयाद् विधिनिषेध-वाक्यद्वारा या स्मृतय स्मृतास्ता स्मृतिपदवाच्या. सर्वा अपि स्मृतयो विधिनिषेधात्मकतया दुर्बोधत्वेन जटिलत्वमापद्यन्ते स्म। तेषामपि रह-स्यं त एवाधिकारसम्पन्ना महापुरुषः अवगच्छेयु, यैः धर्मस्य यथार्थं स्वरूप सम्यगवगम्यते, किन्तु पौराणिकी स्थिति र्न तथा। पुराणेषु तत्त्व-ज्ञानैः सह मनोरञ्जककथानकोपकथाख्यानोपाख्यानादिरोचकता सद्-भावात् तानि सर्वविधानामधिकारिणा चिन्तान्याकर्षयन्ति।

यदि बालवृन्द पुराण पठेत्, तदा तस्य सौजन्यवृद्धिपुर सरं भाविजीवनस्य पुण्यमये मार्गे नून प्रवृत्ति· प्रसरेत्। यदि युवानो वृद्धा वा पुराणाना स्वाध्याय विदधीरन् तदा तेषा कर्त्तव्यनिष्ठा विवर्द्धेत। पुराणपाठप्रभावात् स्त्रीणा हृदयेषु गुहिणीधर्मस्योदयो भवेत्, पातिव्रत्य-धर्मस्य च मूल दृढमुपजायेत। यदि पुराणेषु राजनीतिकी परिस्थितिः परिशील्येत तर्हि सर्वदेशीया. सामान्या सिद्धान्ता नून लोचनगोचरता-मापद्येरन्। अपि च प्राचीना अर्वाचीना वा सामाजिकविज्ञानस्य सर्वे मूलसिद्धान्ता पुराणेषु सगौरवं गुम्फिता विद्यन्ते। आदर्शसमाज-व्यवस्थाया विवेचनं पुराणसाहित्याद् अन्यत्र दुर्लभमस्ति। सर्वज्ञान-मयाना वेदाना भाष्यरूपत्वात् पुराणानि आध्यात्मिकै ज्ञनै परिपूर्णानि सन्ति। अतएवस्कन्द-पुराणस्य रेवाखण्डे पुराणस्य तदर्थानुगामित्व तदर्थ-प्रकाशकत्वं च प्रोक्तमस्ति।[1]

त्रिकात्मदर्शिभि र्महर्षिभिः संसारिकदु खान्यवलोक्य मुक्तिरेव मानव-जीवनस्यान्तिमं लक्ष्य निर्द्धारितम्। यतो हि मुक्ति विना नात्यन्तिकः सुखलाभो भवितुमर्हति। सर्वे प्राणिनः सुखार्थमेव प्रयतमाना दरीदृश्यन्ते न कदाचिदपि दुःखार्थं केषाञ्चिद्भवति कुत्रापि प्रवृतिः।[2] अतो भारतीया

---

१ (क) यच्च दृष्टं हि वेदेषु तद् दृष्टं स्मृतिभिः किल।
उभाभ्यां यत्तु दृष्टं हि तत् पुराणेषु गीयते॥
(ख) श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्।
एतत् त्रयोक्त एव स्याद्धर्मो नान्यत्र कुत्रचित्॥ १.१४, २३

२. (क) चराचरे जगत्यस्मिन् सर्वो वाञ्छति मानवः।
सुखी स्यां न तु दु खीति कृत्वा मनसि कल्पनाम्॥
(ख) दु खादुद्विजते जन्तुः सर्वस्य सुखमीप्सितम्।
(महाभारते शा. प. १३९.६१)

निसर्गतो निःश्रेयसमेवान्तिम लक्ष्यमभिप्रेत्य कस्मिन्नपि कर्मणि प्रवर्तन्ते । एष पुराणानामेव महनीयो महिमाऽवगन्तव्य ।

तस्मादिह ससारे सुख मे शाश्वतं स्याद् दु·खं च कदाचन माभूदिति बुद्धया दु खं हातु सुख चोपलब्धु सततमभिलषति प्राणिमात्रम् । न हि कोऽपि विवेकी स्वल्प सुखमीहते; अपि तु सर्वोऽपि प्राणी उत्तरोत्तरमधिकमेव वाञ्छति । सुखान्वेषणे शती, सहस्रमिच्छति सहस्री लक्ष लक्षी च कोटिपति र्भवितुमभिलषति, कोटीशश्चार्बुदपतित्वमभिलषति, स हि राज्यमभिप्रैति, राजा च साम्राज्यमाकाङ्क्षति, सम्राट् चेन्द्रपदमीहते, इन्द्रोऽपि ब्राह्म पद ब्रह्मापि विष्णुपदं विष्णुरपि शिवपदममिलषतीति तृष्णाया उत्तरोत्तरवर्द्धनात् कामनारहितस्य पुस. सुखान्वेषणबुद्धेरन्तं भवितु नार्हति । तथा चाह योगीश्वरो राजा भतृहरि ।[1]

गरुडपुराणस्य प्रेतकल्पेऽपि अयमेवार्थ सक्षेपतो व्यक्तीकृतोऽस्ति ।[2] अत एवोद्घोपित भगवता श्रीकृष्णेन गीतायाम् ।[3] एव जीवो यावदनन्त सुख न लभते तावत् प्रयतमान एव तिष्ठति । तथा चाह भगवती छान्दोग्यश्रुति —**यो वै भूमा तत् सुखम्, नाल्पे सुखमस्ति** ( ७ २३.१ ) ।

एवञ्च भगवत्स्वरूपसाक्षात्कार एवात्यन्तिकमनन्तं च सुखं जीवस्य वास्तविक लक्ष्यम्, चरममुद्देश्यम्, मानवशरीरलाभस्य च फलमस्ति । आत्यन्तिक निरतिशय सुखमेव मोक्षः, मुक्तिः, अपवर्ग, कैवल्यम्, निर्वाणम्, नि श्रेयसम्, परमपुरुषार्थचोच्यते । एष एव सुखस्य चरमा सीमा परमा च गतिरस्ति । एतदेव लब्ध्वा मानवो मृत्युमुखात् प्रमुच्यते । तथाचोक्त श्वेताश्वरोपनिषदि—**तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय** ( ३ । ८ ) श्रीमद्भगवद्गीताऽपि यल्लाभादपरः

---

१. **निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपः**
**लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशतां वाञ्छति ।**
**चक्रेशः पुनरिन्द्रतां सुरपतिः ब्राह्म पदं याचते ।**
**ब्रह्मा विष्णुपदं हरिः शिवपद तृष्णावधिं को गतः ।।**

२. **इच्छति शती सहस्रं सहस्री लक्षमीहते ।**
**लक्षी कोटिं च कोटीश क्रमशः सर्वमीहते ।। २।४**

३. **बहुशाखा ह्यनन्ताश्च बुद्धयो व्यवसायिनाम् । २।४१**

कश्चन लाभ श्रेष्ठो नास्ति, तल्लब्ध्वा मानव ईपदपि दु खेन नाभिभूयते इति स्पष्टमुद्घोषयति ।[1]

विश्वस्मिन्नन्यजातोया यत्र लौकिकमभ्युदयमुपेत्य मदगर्विता भवन्ति तत्र भारतवर्षीया स्वस्वरूपमवाप्यैवात्मकल्याण कामयन्ते । ऐहिक-पारलौकिकाभ्युदयस्य तदन्ते नि श्रेयसप्राप्तेश्च यदि किञ्चित् सुलभं साधनं सम्भवेत्तर्हि तत् पुराणशास्त्रावलम्वनमेवास्ति । आर्यजातौ जीवनशक्तिसंचारकार्यं पुराणैरेव सम्पादितम् ।

पुराणाना सर्वाधिक वैलक्षण्य भक्तिरसास्वादनमेव विद्यते, येनाशु प्रसीदति भगवान् नारायण. । यथा देवासुरैर्मथ्यमानात् समुद्राद् विभिन्नानि रत्नानि निर्गतानि तथैव पुराणसागरमन्थनाद् हालाहल गरलम्, सुरा, अमरकारकममृतमपि नि सर्तुमर्हति, तत सुधासुधाशू अपि निर्गन्तुमर्हत: । अपि च ततो लक्ष्मीरपि समुद्भवितुमर्हति, शङ्खोऽपि प्रकटितो भवितुमर्हति, परन्तु पुराणपाठकैर्नूनमवधेय यत् पुराण प्रतिपादयता भगवता व्यासेन तत्र त्रिविधा: समाधि-लौकिक-परकीयाभाषा: प्रयुक्ता: सन्ति[2] । तदरहस्यमज्ञात्वा स्थूलदृष्ट्या पुराणपाठ प्रकुर्वाणै र्जनै र्यत् पुराणेपु विविधमाक्षेपवाक्यकदम्वकमुत्क्षिप्यते तेषा पुराणपयोधिविलोडनेन केवलं सुरा, गरल, शङ्खो वा पाणौ प्रयातुमर्हन्ति, किन्तु सुधा, सुधाशु र्लक्ष्मी र्वा ततो वहुदूरतरमेवावतिष्ठन्ते । अत सर्वमङ्गलमयपुराणाना प्रवचनादिकामै: सावधानतया व्यवहर्त्तव्यम् ।

विद्वासो वेदाना रहस्यं पुराणाना गूढविज्ञानं चावगत्य कृतकृत्या: भवन्ति । पुराणपाठेन ब्राह्मणा ब्रह्मविद्या लभन्ते, कर्मकाण्डिन: स्वधर्मपालने प्रवृत्ता भवन्ति, प्रवृत्तिमार्गाधिकारिणो गृहिणो कर्त्तव्यनिष्ठा जायन्ते, निवृत्तिमार्गावलम्विन: सन्यासिन: औपनिषदतत्त्वान्युपलभन्ते, सर्ववर्गीयाश्चोपासका उपासनाया रहस्यमनायासेनावबोद्धु-

---

१. यं लब्ध्वा चापरं लाभ मन्यते नाधिकं तत: ।
यस्मिन् स्थितो न दु:खेन गुरुणापि विचाल्यते ।। ६ ।।

२. श्रुतौ पुराणे तन्त्रे च त्रिधा वर्णनरीतय: ।
समाधिभाषा प्रथमा लौकिकी च तत: परा ।।
तृतीया परकीयेति शास्त्रभाषा त्रिधा मता ।।

मीशते। अत एव सर्वविद्याधिकारिणां कल्याणनिमित्त पुराणसहित्यमिति निर्विवादम्।

याज्ञवल्क्यस्मृत्यादौ चतुर्दशसु विद्यासु पुराणस्य गणना विद्यते[१]। छन्दोग्योपनिषदि नारदसनत्कुमारप्रश्नोत्तरप्रसङ्गे पुराणस्य कृते पञ्चमवेदत्वप्रतिपादनमुपलभ्यते[२]। श्रीमद्भागवतेऽपि पुराण पञ्चमो वेदः प्रोक्तोऽस्ति[३]। मत्स्यपुराणेप्येवमेव पुराणस्य ब्रह्मणो मुखनिर्गतत्वं श्रूयते।[४] पुराणमहत्त्व प्रतिपादयता महाभारतेनापि स्फूटमेवोद्गोतं पुराणस्य वेदानुग्राहकत्वम्। एवं सर्वशास्त्रसस्तुतस्य पुराणसाहित्यस्य माहात्म्य केन निराकर्त्तुं शक्यते।

अष्टादशभेदैर्विभक्तेषु पुराणेषु श्रीमता व्यासेन पुराणलक्षणनिर्देशपूर्वक सर्ग-प्रतिसर्ग-वंश वशानुचरित-मन्वन्तरवर्णनम्, अवतारतत्त्वस्य-समीक्षा, भक्तिरहस्यस्यमीमासा, इहलौकिक-पारलौकिकसुखसाधनविवेचनम्, प्राणिमात्रस्य कल्याणकामनाय विविधाभ्युदयस्य मार्गप्रदर्शनम्, आदर्शमानवचरित्रचित्रणम्, सर्वधर्मरहस्यसकीर्त्तनम्, वर्णाश्रमधर्मप्रतिपादनम् विभिन्नप्रकारकोपसनाप्रदर्शनपूर्वक परमात्मप्राप्त्युपायोद्बोधनम्, सर्वदर्शनसिद्धान्तनिरूपणम्, ससारसागरसन्तरणोपायजात विवेचितमस्ति। कि बहुना सर्वोपयोगिनो धर्मार्थकाममोक्षादयो विविधा ज्ञातव्याः विषया पुराणेषु सम्यग् विवेचिताः सन्ति। अतो भारतीयहिन्दुसंस्कृतेः हृदयमेव पुराणमित्यभिधाने नास्त्यतिशयोक्तिलेशः। अतएव महाभारतस्यानुशासनपर्वणि पुराणस्य भगवदाज्ञारूपत्वमङ्गीकृत्य कुतर्कैस्तस्य हेयत्वं निषिद्धमस्ति[५]

पुराणेषु श्रद्धाजुषा पुसा पुराणरहस्यस्फुटावगतये पुराणस्यानर्घरत्न-

---

१. अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्याश्चैताश्चतुर्दश॥

२. इतिहासपुराण पञ्चमं वेदानां वेदम्॥ ७।१।२

३. इतिहासः पुराणञ्च पञ्चमो वेद उच्यते॥ १।४।२०

४. पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनर्गता॥ ५३-३

५. पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि सर्वाणि न हातव्यानि हेतुभिः॥

जिग्राहयिषया प्राणवत् प्रियस्य सर्वाभ्यर्हितस्य सर्वैः धार्मिकशिरोमणिभिर्मानवमणिभि. सर्वथा समादृतस्य सर्वदर्शनसिद्धान्तसम्वलितस्य सर्वोपासना - सर्वसम्प्रदायाविरोधिनोऽत्यलौकिक - विविभावगुम्फितस्य पूज्यपादेन त्रिकालदर्शिना महर्षिणा वेदव्यासेन प्रणीतस्य पुराणसमूहस्य भाषा तु एव मञ्जुलतरा प्रसादगुणगुम्फिता भावमयो हृदयग्राहिणी मधुरमयी च विद्यते, यया वाला अपि स्वल्पप्रयासेन तदध्ययनात् तद्रहस्यमर्मज्ञा भवितुमर्हन्ति। अत. सरलतया भाषासौष्ठवेन च अनायासेन बोधगम्याना पुराणानामनुशीलनमस्ति नितान्तमावश्यकम् ।

स्वसरलतया भाषासौष्ठवेन च समेषामनायासेन बोधगम्येषु महोपकर्तृषु पुराणेषु साम्प्रतं कालप्रभावाद्वहूना कुतर्ककरिणा विद्यते वैमत्यम् । विधर्मिणा तु कथैव का हिन्दुष्वपि कियता तत्र न दृश्यते तादृशी आस्था, यथाऽपेक्षिता । वहूना च तत्र दृढाऽश्रद्धैव दृष्टिगोत्ररतामायाति तर्कप्रियाणां पुराणेष्वश्रद्दालूनाम् । इयं दुरत्यया कालगति· ।

## पुराणभेदविवरणम्

पुराणानां पञ्च भेदाः कल्पिताः सन्ति महापुराणानि, पुराणानि, उपपुराणानि, पुराणसहिता, इतिहासश्चेति । तत्र महाभारतन्तु इतिहासलक्षणोपेतमपि कर्मोपासना ज्ञानात्मककाण्डत्रयरहस्यपूर्णत्वात् सर्वाङ्गपूर्णं पुराणमङ्गीक्रियते । पुराणानि न लौकिकेतिहासरूपाणि नापि कल्पितगाथापूर्णानि । वस्तुत· पुराणानि ज्ञानमयस्य त्रिकालदर्शिनो वेदस्य भाष्यरूपाणि । यदि पुराणानि लौकिकेतिहासपूर्णानि अभविष्यंस्तदा तत्रैकस्यैव पुंसश्चरितानि एकेनैव महापुरुषेण लिखितानि तत्तपुराणेषु पुराणान्तरेषु वा भिन्नप्रकाराणि नाभविष्यन् । देवीभागवते प्रकाशिताच्छुकदेवचरिताच्छ्रीमद्भागवते प्रकाशिते शुकदेवचरिते रात्रिन्दिनवन्महद्वैषम्यं नैवाभविष्यत् । अतश्च पुराणादिषु निवद्धानि महापुराषाणां जीवनचरितादीनि न लौकिकगाथावद्विज्ञेयानि, नापि तेषा चरिताना लौकिकवदुपयोगो विधेय, किन्तु तानि चरितानि भगवता वेदव्यासेन महर्षिणा स्वकीयाद्भुतालौकिकयोगशक्तिशालिनोऽन्त· करणस्यामोघया स्मृतिशक्त्यानेककल्पकल्पान्तराश्रितानि स्मृत्वा लोकहिताय वेदरहस्यचिख्यापयिषया प्रकटीकृतानि । इत्यस्मादेव हेतोः पुराणान्यपि 'स्मृति' शब्दवाच्यानि भवन्ति ।

## भाषाभावत्रैविध्यम्

पुराणेषु वेदवद् भाषात्रयं भावत्रयं गुणाधिकारत्रयं च विद्यते। यथा वेदार्थरहस्यविज्ञाने काठिन्यं तथैव पुराणार्थरहस्यावबोधनेऽपि तद् वेदनीयम्। पुराणेषु यत्र केवलं समाधिगम्यविषयाणामेव वर्णनं विद्यते सैव समाधिभाषेति निगद्यते। यथा—आत्मस्वरूपविवेचनम्, ब्रह्म-प्रकृति-स्वरूपवर्णनम्। दुर्ज्ञेयकर्मरहस्यप्रतिपादनम्। समाधिभाषा तु सर्वत्रैव पुराणेष्वेकविधैवोपलभ्यते, नास्ति तत्र किमपि केषाञ्चिद् वैमत्यम्। यया वर्णनपद्धत्या समाधिगम्यं विषयं लौकिकरीत्या विव्रियते सा हि लौकिकी भाषा प्रतिपाद्यते। यथा—ब्रह्म-प्रकृतिरूपयोः शिव-पार्वत्योर्विवाहवर्णनम्। अनाद्यनन्तचिन्मय-शिव-लिङ्गवर्णनम्, रासलीलारहस्यवर्णनम्। यत्र च समाधिगम्यविषयाणा परिपुष्ट्यै अनेककल्पसङ्घटिताना घटनावलीना समाधिवलेन संस्मृत्य विस्तरशो वर्णनम् क्रियते सा परकीया भाषा कथ्यते। भ्रमप्रमादवशतः प्राकृतिका मानवा इमामेव वर्णनशैली लौकिकेतिहासरूपतोऽवगच्छन्ति। अस्या भाषात्रयपद्धतेः स्वरूपावगतिं विना यथा वेदार्थरहस्यज्ञानं दुस्तरं तथा पौराणिकार्थपरिचयोऽपि दुर्गम एव। इत्थञ्च यथा भगवान् ब्रह्मेशविराट्रूपतस्त्रिभावात्मकः तथैव वेदाः पुराणानि शास्त्राणि च अध्यात्माधिदैवाधिभौतिकरूपतो भावत्रय-बोधकानि परिचेयानि।

अत एव वेदानां सर्वे मन्त्राः पुराणानाञ्च सर्वेऽपि विषया. प्रायः भाव-त्रितयात्मकाः। एतद्रहस्यपरिज्ञानाय द्विविधमुदाहरणमत्रोपन्यस्यते। श्रीमद्भगवतो विष्णो र्भावत्रितयात्मक स्वरूपत्रय विद्यते। तत्र प्रथमम् अध्यात्मरूपम् आकाशतत्त्वतोऽपि परं विद्यते। इत्यत एव आकाशबोधकानन्तशय्याऽपि तद्रूपम्, फलतः सर्वतत्त्वातीतम्। धर्मार्थकाममोक्षाणा चतुर्णामपि फलानां स दातेति गदा-शङ्ख-चक्र-पद्मधारी निगद्यते। माया तद्वशे विराजत इति लक्ष्मीः तत्पादप्रसेविका प्रख्याप्यते। भगवतो विष्णोर्गोलोकपीठादारभ्य सत्त्वगुणव्यापिनी याऽधिष्ठात्री सत्ता विद्यते, सा तस्य भगवतोऽधिदैवस्वरूपम्। या सगुणमूर्त्तिः समये समये स्वभक्तानुग्रहार्थमाविरास्ते सा तस्याधिभौतिकी स्थितिः।

अपि च—नेत्रेन्द्रियस्याध्यात्मरूप तन्मात्रा, अधिदैवरूपं विश्वतश्चक्षूरूपः सूर्य्यदेवः। स्थूलमधिभूतरूपञ्च शरीरस्थ नेत्रेन्द्रियगोलकम्।

अतश्च वेदे तत्सदृशपुराणादिषु च क्वचनाध्यात्मपुरुषस्याध्यात्मविषयस्य च वर्णनमासाद्यते। कुत्रचनाधिदेवव्यक्तेरधिदैवविषयस्योपनिबन्धनमुपलभ्यते। कुत्रचिदधिभूतभावविशिष्टस्य पुंसोऽधिभूतविषयस्य च विवरणं विद्यते। येषामवगतये भाषात्रितयात्मिकाया विचारशक्तेरावश्यकत्वम्। एवं सति पुराणव्याख्यातुः शक्तिर्यदिभावत्रयरहस्यज्ञानार्हा न स्यात्तर्हि तस्य व्याख्यानेन पुराणविषये शङ्कोद्गमस्य पदे पदे सम्भवस्तु स्यादेव, प्रत्युत सर्वं पुराणशास्त्रमेवासम्बद्धं प्रतीयेत।

इत्यस्मादेव हेतोः पुराणादिषु सत्त्वरजस्तमोरूपत्रिगुणात्मिका बहुशोवर्णनपद्धतयः समुपलभ्यन्ते। यदनुकूलमेव पुराणव्याख्यानमावश्यकम्। नित्यर्षि र्व्यासावतारो महर्षिः कृष्णद्वैपायनो वेदव्यासोऽनेकपुराणेतिहासादिप्रणयनानन्तरमन्ते श्रीमन्तमन्तर्यामिणं सर्वेश्वरं सर्वशक्तिमन्तमीश्वरमेवमधोनिर्दिष्टविधया तुष्टाव[1] क्षमायै च प्रार्थितवान्।

अतो हि पुराणानां वेदार्थोपबृंहणत्व-वेदरहस्यप्रतिपादकत्वं वेदभाष्यस्वरूपत्वञ्चेति निर्विवादः पन्थाः। यथा सूत्रभाष्ययोः[2]—

परस्परं लक्षणभेदस्तथैव वेदपुराणयोरपि परस्परं भेदः। वेदाः सूत्रस्थानीयाः पुराणानि च तद्भाष्यभूतानि सन्तीति हृदयम्। तथाच वेदोपबृंहणपूर्वकं गूढवेदार्थरहस्यप्रकाशनद्वारा। बहुशः सुहृत्सम्मितोपदेशयुञ्जि पुराणानि जनमनोरञ्जनकर्तॄणि गाथाजातानि बिभ्रतीति नुतरां तानि लोकरुचिकरं सारल्यं दधति। **भा० पु०**

अतएव भारतीया धार्मिकविचाराणामवगतये पुराणानि समाश्रयन्ति, श्रद्दधते तदनुकूलं च कर्तुं मनसा वाचा कर्मणा प्रयतन्ते। भारतीयजनतायाः कल्याणार्थं पुराणप्रवचनादिद्वारा धार्मिकसामाजिकसांस्कृतिककार्याणां प्रवृत्तौ पर्याप्तं प्रेरणमवाप्यते।

---

१. रूपं रूपविवर्जितस्य भवतो ध्यानेन यत् कल्पितम्
स्तुत्या निर्वचनीयताऽखिलगुरो दूरीकृता यन्मया।
व्यापित्वञ्च निराकृतं भगवतो यत्तीर्थयात्रादिना
क्षन्तव्यं जगदीश! तद्विकलता-दोषत्रयं मत्कृतम्॥

२. अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥
सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

## भुवनकोशविवरणम्

पुराणेषु भुवनकोशवर्णनप्रसङ्गे श्रीमतो भगवतो विराड्रूपस्य नाभिप्रदेशतः ऊर्ध्व सप्ताना भू र्भुवः स्व र्महर्जनतप. सत्यनामकानां लोकानाम्, अधोभागे च अतल-वितल-सुतल-तलातल-महातल-पताल-रसातलाख्याना सप्ताना लोकाना सुव्यवस्थिता कल्पना कृताऽस्ति। तत्र अद्यस्तनाः सप्त लोकास्तमोगुणवहुला विद्यन्ते, यत्रासुरा एव केवलं निवसन्ति। उर्ध्वस्थाश्च सप्त लोकाः सत्त्वमयाः सन्ति, यत्र देवगणास्तिष्ठन्ति। भूलोकश्चायमस्माकं सप्तोर्ध्वलोकान्यतमोऽस्ति।

ऊर्ध्वलोकेषु भगवतश्चित्कलाया ज्ञानानन्दयोश्च उत्तरोत्तरं क्रमशो विकाश', सप्तमे ऊर्ध्वलोके पूर्णत्वमृच्छति। षष्ठ-सप्तमयो र्लोकयोर्मध्ये उपासनालोकसमूहाना स्थितिरभ्युपेयते। यतश्च कदाचित् पुनरावृत्तिरपि सम्भाव्यते, किन्तु सप्तमाच्चरमलोकान्न पुनरावृत्त`राशङ्का, वरीवर्ति। स एव लोकः सूर्य्यगतीनामन्तिम स्थानम्। एतदर्थमेव **'न स पुनरावर्तते, न स पुनरावर्तते** इति श्रुते, **'यद्गत्वा न निवर्तन्ते तद्धाम परमं** मम (१५। ६)। इति गीतायाश्च डिण्डिमः उद्घोषोऽस्ति।

गतागतचक्रस्य स्थिरीकरणाय अयं भूलोकान्तवर्ती मृत्युलोक एव प्रधानं केन्द्रम्। एष चास्माक मृत्युलोकः सप्तानामूर्ध्वलोकाना सप्तानाञ्चाधोलोकाना मध्ये मध्याकर्षणशक्तिरूपेण निवेशितो विद्यते। भूलोकस्य सन्ति चत्वारो विभागाः, एकः पितृलोको यत्र धर्मराजापरनाम्नो यमस्य राजधानी सयमनी नाम। पुण्यात्मानो हि जीवा यमराजधान्या समुपेता धर्मराजस्यातिमनोहर रूप पश्यन्ति। यच्च रूपं कठोपनिषदनुसार सशरीरं यमलोकमुपेतो नचिकेताः द्रष्टु समर्थो बभूव। एनमेव धर्मराज विपश्चितो यमराजमपि वदन्ति। एष हि सर्वेषा जीवाना धर्माधर्मफलप्रदः परलोकशासकश्चोच्यते। तथाचायं कर्मफलभोगदानेन जीवाना नियामकोऽस्ति।

द्वितीयो नरकलोकः, तृतीय. प्रेतलोकश्चतुर्थश्चायं मृत्युलोक एव। अत्रत्या जीवा. मातृगर्भात् सम्भवन्ति मृत्युमपि प्राप्नुवन्तीत्यतोऽयं लोको मृत्युलोकः इत्याख्या भजते। किञ्च मृत्युलोकादन्यत्र न मातृगर्भतो जीवा जायन्ते, अपितु मृत्युलोकप्रभवाः प्राणिनो निजकर्मपारवश्यतो मृत्योरनन्तरम् जायमानेन आतिवाहिकेन देहेन तत्र तत्र लोके दैवसाहाय्याद् व्रजन्ति। ये जीवाः ससारिकमद-मोहासक्ताः पुत्र-कलत्रादिविषयवासना-

पाशवद्धा भवन्ति, ते हि पाञ्चभौतिकशरीरत्यागानन्तरं प्रायशोऽल्पस्य कालस्य कृते प्रेतलोके निवसन्ति, ततश्चनरलोकातिथयो भवन्ति। येषामल्प पुण्य भवति ते प्रथमं पितृलोकमुपयन्ति पश्चात् स्वोपार्जितनरकलोकम्। यस्य च पापमेवाल्पं भवति स प्रथमं विविधक्लेशकारक नरकलोकमेवोपसर्पति? तत स्वपुण्योपार्जितं पितृलोकम्। तदनन्तरं तेऽदृष्टानुसारमन्यलोकेपु प्रहीयन्ते। सर्वमिद धर्मराजस्यैव शासनाधीनम्। तदाज्ञया तत्कर्मचारिणः तत् सर्व कार्यजातं साधयन्ति। भगवत इन्द्रस्य अमरावती नाम राजधानी मर्त्यलोकादूर्ध्वं स्वर्गलोकेऽस्ति। तत्र पुण्यात्मन उन्नतसुखभोक्तारो जीवाः प्रेत्य गच्छन्ति, यावत्पुण्यञ्च विविधं स्वर्गीय सुखं भुञ्जाना पुनर्मर्त्यलोके जनि लभन्ते। अतएवोक्त गीतायामपि—

**ते तं भुङ्क्त्वा स्वर्गलोकं विशाल क्षीणे पुण्ये मर्त्यलोके विशान्ति।**
**(९।२१)**

मृत्युलोकमपहाय अपरे सर्वे लोका देवलोकाः कथ्यन्ते। देवलोकेषु च तेषु देवपिण्डधारिणो देवा निवसन्ति। मानवपिण्डधारिणो जीवा देवपिण्डधारिणो न दृष्टिपथमानेतु प्रभवेयुः। यदि देवानामनुग्रहो भवेत्तदा तान् द्रष्टु शक्नुयुः। देवलोकोऽस्माकीनपार्थिवलोकादतिसूक्ष्मोऽतीतश्च। तत्र यथा देवा देवपिण्ड दधति तथैवासुरा अपि देवपिण्डं दधति। तत्रैतावानेव भेदोऽस्ति यद् आत्मोन्मुखवृत्तिप्रधाना देवाः, असुरा. किल इन्दियोन्मुखवृतिप्रमुखा भवन्ति। तस्मादेव तत्र देवासुरसङ्ग्राम. प्रवर्तते। तत्रोन्नताधिकारिणो देवा न कदाचिदसुराणा राज्यमपहर्तुमिच्छन्ति। ते तु स्वायत्तलेकेषु एव सर्वथा सन्तुष्यन्ति, पर विषयलोलुपा असुरास्तु सर्वदैव दैवराज्यमात्मसात्कर्तु प्रयतमाना सन्तिष्ठन्ते। एतदेव मौलिक देवासुरसङ्ग्रामस्य कारणम् भवति।

अस्माक शरीराणि पृथ्वीतत्त्वप्रधानानि। अतो पार्थिवेऽस्मिन् जगत्येव तेषा विनियोगः। नहि तदीया गतिः प्रेत-पितृ-नरक-स्वर्लोकादिषु सभवति। ते लोका तत्त्वान्तरप्रधानाः। अतो हेतो. वय पार्थिवप्रधानदेहेन्द्रियादिसाधनैः तत्तल्लोकान् तत्र स्थितान् जीवानपि न प्रत्यक्षीकर्तुं समर्थाः, किन्तु योगशक्तिशालिनामृषिमहर्षीणा तदनुभवो वोभूयते।

सूक्ष्माणा प्रेत-पितृ-नरकलोकाना स्थूलमर्त्यलोकेन सह साक्षात्

सम्बन्धोऽस्ति। इत्थं भभूर्वस्वर्लोका यथाक्रममुपरि वर्तन्ते। अपरे च चत्वारोऽप्यूर्ध्वलोकाः उत्तरोत्तरमुन्नताः सन्तः सूर्यलोकस्य सान्निध्यभोजः सन्ति। तत्र द्वौ ऊर्ध्वलोकौ उपासनाज्ञानयोः क्रमेण दिव्यलोकौ कथ्येते। सूर्यलोकस्य तपोलोकोऽन्तिमः सीमा; ततः परं सत्यलोको विद्यते। एवं चतुर्दशभुवनाना समाष्टिरेकं ब्रह्माण्डमुच्यते। अनन्तानि सन्ति ब्रह्माण्डानि तत्र प्रतिब्रह्माण्ड सगुणात्मना ब्रह्मविष्णुमहेशाना व्यवस्थाऽस्ति। निखिल ब्रह्माण्डाना नियामक आदिनारायण एव विद्यते। अत सोऽनन्तकोटि-ब्रह्माण्डनायकत्वेन पुराणादौ संस्तूयते।

अस्मिन् मृत्युलोक एव मातृगर्भतो जीवा जायन्ते, अन्यत्र लोकेषु तु अयोनिजा एव जीवा उपलभ्यन्ते। अस्य मृत्युलोकस्य गतागतचक्रकेन्द्र-स्थानत्वात् पुत्रैषणा-वित्तैषणा-लोकैषणेत्येषणात्रयासक्तत्वेन जीवा पितृ-प्रेत-नरकात्मकेषु लोकत्रयेषु भूयो भूयो बभ्रम्यमाणा पुनरत्रैव मृत्यु-लोके जनि लभन्ते।

यावज्जीवेऽस्येषणात्रयस्य तीव्रता तिष्ठति तावदेव मर्त्यलोकात्-पितृ लोकावधि तस्य गतागतचक्र भ्रमति। एषणात्रयसयुक्तो जीवो यद्युन्न-तोऽपि स्यात्तदापि भूर्भुव स्वरिति लोकत्रयादूर्ध्वं नैव गन्तुमर्हति। एषणात्रयस्य जेतारः धन्यतमाः पूतात्मानो महात्मान एव तस्माल्लोक-त्रयादूर्ध्वलोकेषु गतागतमाचरन्ति। अत एव सन्यासाश्रमिणा मन्त्रेषु प्रथमलोकत्रयकर्मकसन्यासस्योल्लेख उपलभ्यते। आश्रमेषु तुरीया-श्रमे सन्यासे भूर्भुव. स्वरित्यस्य व्याहृतित्रयगम्यस्य लोकत्रयस्य त्यागा-देव ज्ञानिना सन्यासिना सर्वस्वत्याग स्वीक्रियते।

सत्कर्मणा निर्मलेऽन्तः करणे एव जगदीश्वरस्यानुभूति पञ्चतत्त्वा-नामन्तिमस्याकाशतत्त्वस्याऽप्यूर्ध्वं भवति। आकाशतत्त्वं हि अनन्त-शब्दवाच्यमित्यत एव श्रीमद्भगवतो विष्णोः शय्याधिष्ठानमनन्तः शेषापरपर्य्यायो गीयते। अनन्तशय्यामधितिष्ठतः श्रीमद्भगवतो विष्णो-श्चिन्मयरूपस्य समाधिना दर्शनं योगिराजाना प्रमुखं लक्ष्य वर्तते, समाधिना निरूद्धासु चित्तवृत्तिषु स्वयमेव सर्वद्रष्टा परमात्मा योगिना-नन्तः करणे स्व-स्वरूपेण प्रकाशते इत्यत्र परम कारुणिको महर्षि र्भगवान् पतञ्जलिरेवास्ति प्रमाणम्, तदीय योगसूत्रं च।

यो हि जीवः पशुतुल्य इन्द्रियाश्वधीन इन्द्रियारामः, यस्यान्त करण-प्रवृत्तयः केवलमिन्द्रियसेवामुद्दिश्यैव परिस्फुरन्ति, स कथमपि नर-शब्द-

वाच्यो भवितुं नार्हति, किन्तु यः भाग्यशाली पुमान् भगवद्भावासक्त-चेताः स एव नरलोके धन्यो नरशब्दवाच्यश्च भवितुमर्हति। यस्तु महापुरुष सर्वदा भगवद् भाव सम्पन्नचेता स तु नरोत्तम शब्दवाच्यः, यश्चावतारी पूर्णावयव सर्वशक्तिशाली निग्रहानुग्रहसमर्थोऽनन्तकोटि-ब्रह्माण्डनेता सर्वान्तर्यामी स भगवान् नारायणशब्दाभिधेयो ज्ञेयः।

श्रीमतो भगवतो नारायणस्य भागवती शक्तिः "अहं ममेतिवत्" ततोऽभिन्नापि शास्त्रकारैर्द्विविधा विभक्ता। एकाऽज्ञानजननी अविद्येत्युच्यते, द्वितीया च ज्ञानजननी विद्येत्यभिधीयते अविद्या हि जीवान् मोहजालेऽ-ज्ञानान्धे तमसि पातयित्वा गतागतचक्रं दृढीकरोति। विद्या तु आत्म-ज्ञानप्रदानेन तद्बन्धनतो मोचने कारणं भवति। सा ज्ञानप्रदायिनी मुक्तिदात्री विद्यैव मार्कण्डेयपुराणे सरस्वती शब्दाभिधेया। कूर्म-पुराणस्य पूर्वार्द्धे तु सैव पराशक्तिः ब्रह्मरूपिणी अनन्ता च प्रोक्ताऽस्ति—

**इयं सा परमा शक्ति र्मन्मयी ब्रह्मरूपिणी।**
**माया मम प्रियाऽनन्ता ययेदं धार्यते जगत्॥ १।३४**

देवीभागवतेऽपि तस्या विभिन्नानि नामानि प्रतिपादितानि सन्ति—

**केचित्तां तप इत्याहु स्तमः केचिज्जड परे।**
**ज्ञानं मायां प्रधानं च प्रकृतिं शक्तिमप्यजाम्॥ १।२७**

आत्मविवेके भगवान् शङ्कराचार्योऽपि—

**सा विद्येत्यभिधीयते श्रुतिपथे शक्तिः सदाद्या परा**
**सर्वज्ञा भवबन्धछित्तिनिपुणा सर्वाश्रये संस्थिता।**

देवीभागवत-मार्कण्डेयपुराण-कालिकादिपुराणानुसारम् अवाङ्मनस-गोचरी सर्वव्यापिका निर्गुणापि ब्रह्मशक्तिः भक्तानां कल्याणाभिवृद्धये सामष्टिक जगत् कल्याणं वा वितनितुं दिव्यालौकिकरूपेण समाविरास्ते। सर्वशक्तिमय्याः किं नामाशक्यं भवेत्, न तस्याः किमप्यसम्भवम्।

त्रिगुणमयी ब्रह्मशक्तिः स्वतमोगुणप्रभावाद् अविद्यारूपेण जीवान् बन्धनदशां नयति पुनरियमेव सत्त्वगुणमयी सती विद्यारूपमादधाना जीवान् मुक्तिपदं प्रतिष्ठापयति। अथासौ कारणशक्तिरूपिणी भूत्वा ब्रह्मविष्णुमहेशात्मकान् त्रिदेवान् प्रतिब्रह्माण्ड सृष्टिस्थितिलयसम्पाद-नाय प्रसूते।

ब्रह्ममयी ब्रह्मशक्तिः स्थूल सूक्ष्म तुरीय च रूपमाश्रयते। तन्नैमित्तिकं रूप जगतो भक्ताना च कल्याणाभिवृद्धये स्थूले सूक्ष्मे च जगति किमपि निमित्तमवलम्बयित्वैव यथा कालमाविर्भवति। भक्तनिमित्तमाविर्भावो यथा—राज्ञः सुरथस्य, समाधिनाम्नो वैश्यस्य च कृते प्रादुरभूत्। जगत्कल्याणार्थ प्रादुर्भावो यथा मार्कण्डेयपुराणस्य सप्तशतीभागे प्रथमं रूपं मधुकैटभवधाय, द्वितीय रूप महिषासुरनिधनाय, तृतीयं रूपं च शुम्भनिशुम्भविनाशाय अजायत।

यदा भगवान् विष्णुर्मधुकैटभनामकमसुरद्वय जघान तदा तदीयशवमेदरूपपरिणमनेन पृथ्वी समजनि। तस्माद्धेतोः पृथिवीय मेदिनीतिकथ्यते। सर्वशक्तिमय्या महामायाया अनुकम्पा विना भगवतो विष्णो र्योगनिद्राभङ्गोऽशक्य आसीत्।

एव जगज्जननी ब्रह्ममयी महामाया अविद्यारूपतो बुद्धिमावृणोति सैव पुनर्विद्यारूपमादधाना तदावरणमपनोद्य प्रकृतिस्थान् मुक्तान् विधत्ते।

धर्म एव सृष्टिधारक', धर्म एव च मानवेभ्योऽभ्युदय-नि.श्रेयसौ साधयन् क्रमशः उन्नतिपथं प्रापयतीत्यतो धर्माधर्मयोः फलदात्री जगद्धात्री धर्मरूपिणी सैव सरस्वती देवीह गीयते। अतस्तदुपासनया सर्वे साधका वास्तविकं स्वं श्रेयः साधयितु क्षमन्ते।

## कर्मरहस्यविवेचनम्

साधारणत' उद्भिज्ज-स्वेदज-अण्डज-जरायुजात्मकाः चतुर्विधा अपि भूतसङ्घाः कर्मणैव सञ्चाल्यन्ते इति नास्ति तेषा कृते नवीनप्रारब्ध कर्मनिर्माणस्यावश्यकत्वम्, किन्तु तास्वेव योनिषु ये जीवा दण्डिता' सन्त. आगच्छन्ति ते सर्वेऽपि पूर्वप्ररब्धानुरूपमेव सञ्चाल्यन्ते। पूर्वावयवानां मानवपिण्डाना जीवाना पूर्वजन्मार्जितसस्कारात्मककर्म वीजमध्यतो यानि कर्मवीजानि अङ्कुरितानि भोगपिण्डं कल्पयन्ति तान्येव प्रारब्धकर्मशब्दतोऽभिधीयन्ते। कर्मवीजं हि संस्कार इत्युच्यते। यथाहि वीजाद् वीजोत्पत्ति र्भवति तथैव सस्स्कारतो जात्युर्भोगप्रापकराणि पिण्डान्युत्पद्यन्ते।

सस्कारात्मकानि कर्मवोजानि च श्रेणित्रये विभक्तानि सन्ति, तेषु वीजानां महान् कोशो हि सञ्चितः सस्कारः कथ्यते, नवीनश्च संस्काराशिः

क्रियमाण. शब्दभाग् भवति, यतश्च शरीरपिण्डमुद्भवति तदेव प्रारब्धं कर्म निगद्यते। एतदेव प्रारब्ध कर्म भवितव्यतेति गीयते, यत् प्राणिभिरनिवार्यतया भोग्य भवति। अवश्यभोग्यमेतदेव प्रारब्ध कर्म निर्दिश्य शास्त्रेणु प्रतिपादितमस्ति—

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि॥

इष्टप्राप्ति हि जीवाना हर्षनिदानम्, अनिष्टाधिगमश्च शोकहेतुः इत्येदेव प्राणिना सुखदुःभयोः कारणम्, किन्तु विवेकिन आत्मज्ञानिनः एतौ तज्जन्यसुखदु खे च तत्त्वज्ञानसाधनेन पदार्थजात केवल प्राकृतिकमवगच्छन्तो हर्षशोकातिगा भूत्वा मोमुद्यन्ते सर्वदा। मूलतो हर्षशोकौ न तान् महापुरुषान् विचालयितुमर्हत ।

## देवत्रयतात्पर्यम्

अनन्तकोटिपु ब्रह्माण्डेपु प्रतिब्रह्माण्ड भूर्भुवःस्वरादयः सप्त ऊर्ध्वलोका अतलवितलादय सप्त अधोलोकाश्च वर्तन्ते। सप्तोर्ध्वलोकेपु देवा अधोलेकेपु च सप्तसु असुराः सन्तिष्ठन्ते। प्रतिब्रह्माण्ड सृष्टिःस्थितिलयात्मककार्यसम्पादनाय सगुणब्रह्मस्वरूपेण ब्रह्म-विष्णुमहेश्वराख्या' त्रयो देवा विद्यन्ते, तेपु प्रथमः सर्जनकर्तृत्वात् स्रष्टा ब्रह्मा कथ्यते, द्वितीय सर्वत्र व्यापकत्वात् स्थिते' कारण विष्णुर्निगद्यते, तृतीयो हि दु.खवहुलात् ससारादुच्छेदकत्वेन सहारकर्ता शिवः प्रोच्यते। इमे देवशब्दवाच्या अपि न साधारणदेवयोनिगाः, किन्तु निर्गुणस्य परमात्मनः सन्ति सगुणमूर्तयः। एतेषु सृष्टिरक्षाया विष्णुना सह सम्बन्धाद् विश्वपालने तस्यैवास्ति प्राधान्यम्।

## ब्रह्मणः निर्गुणसगुणस्वरूपरहस्यम्

वेदादिशास्त्रेपु परमात्मा हि परत्वेन त्रिगुणातीतात्वेन एकत्वेन, अद्वितीयत्वेन सर्वशक्तिमत्वेन जीवाना मनोबुद्धिविषयातीत्वेन च वर्णितोऽस्ति, किन्तु जिज्ञासूना भक्ताना मनस्तृप्तये भावत्रयविशिष्टत्वेनाभिपरिलक्षितो विद्यते। तथाहि ब्रह्म, ईश , विराट् चतर्थोऽवतारश्च यो हि लीलाविग्रहशब्दभागपि निगद्यते।

तत्र निर्गुणस्य, निष्क्रियस्य, सृष्टितोऽतीतस्याध्यात्मरूपस्य भगवतः

एव ब्रह्मेतिनाम निगद्यते। तस्यैव सगुणं स्वरूप सृष्टेर्दष्टृमात्रमुच्यते। यस्य योगदर्शने पुरुषविशेष इति संज्ञोच्यते। तच्चाधिदैवस्वरूपमीश्वर इत्युच्यते। अनन्तकोटिब्रह्माण्डोपेतं यत्तदीयं महत् स्थूलमधिभौतिकं स्वरूपं विद्यते तदेव विराडित्युच्यते। जीवशरीराश्रयेण या भगवतो विशिष्टा शक्तिः कलारूपेणाविर्भवति सैव तस्यावतारस्वरूपमुच्यते[1]। एतदेव भगवत स्वरूपस्य चतुर्व्यूहसम्बन्धिना भावस्य रहस्यम्। अस्यैव विज्ञानस्याश्रयेण ब्रह्म-विष्णु-महेशप्रभृतीनां सर्वेषामेव स्वरूप-स्यावगतिः सम्भाव्यते।

## पञ्चदेवोपासनारहस्यम्

पञ्चदेवोपासनाया ब्रह्मविष्णुमहेशात्मकमूर्तित्रयत केवलं भगवतो विष्णुशिवयोरेव नामोपलभ्यते, ब्रह्मणो रजोऽधिष्ठातृत्वेन रजोगुण-सम्बन्धात् तस्येश्वरत्वेऽङ्गीकृतेऽपि न तस्योपासनासम्बन्धत. प्राधान्य-मुपेयते, विपश्चिद्भि सामान्यतो गीताप्रभृतिशास्त्रेषु ज्ञानयोग-कर्म-योगात्मके साधनपद्धती द्विविधे एव निर्दिष्टे स्तः। श्रीमतो भगवतः परब्रह्मण चिद्भावसम्बन्धात् साख्ययोग, सद्भावसम्बन्धाच्च कर्मयोगः इति द्विविधे अपि निष्ठे स्वभावसिद्धे स्त। अतएव केवल विष्णुशिव-योरेव सगुणोपासना शास्त्रेषूपलभ्यते।

अपि च यत् पञ्चोपासनात्मकं सगुणोपासनं वेदतत्सम्मतशास्त्रेषू-पलभ्यते, तत्र पञ्चानां सगुणब्रह्मोपासनानां भावो निर्दिष्टोऽस्ति। तत्तुलनात्मकपर्यालोचनया योगतन्त्रादिरहस्यपर्यवेक्षणेन चैतदुपलभ्यते यद् विष्णूपासनाया भगवतश्चिद्भावस्य, शिवोपासनायां सद्भावस्य, देव्युपासनाया शक्तिभावस्य, गणपत्युपापासनाया ज्ञानमयभावस्य, सूर्योपासनाया च स्वाकर्षणरूपस्य तेजोभावस्य प्रकाशो विद्यते। इत्येवं पञ्चाना स्वतन्त्रभावानामवलम्बनेन पञ्चापि स्वतन्त्राः

---

१. नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः।
(श्री० भा० १०।२९।१४)

स देवो भगवान् सर्वं व्याप्य नारायणो विभु.।
चतुर्धा संस्थितो ब्रह्मा सगुणो निर्गुणस्तथा ।।
(म० भा० शा० प० २७५।२७)

सगुणब्रह्मोपासना प्रकारा· पुराणादिषु पार्थक्येन वर्णिता उपलभ्यन्ते। तासा पञ्चानामपि उपासनानां दार्शनिकं रहस्य पृथगेव निर्दिष्टमस्ति।

इत्थं च भगवान् विष्णुर्यदा सृष्टिरक्षाभिप्रायेण स्वकीयचिन्मय-कलाया स्वशक्तेश्च प्रकाश कस्यचन जीवस्याश्रयेण जगति प्रकाशयति तदा सैव लीलाविग्रहरूपा तस्य सर्वप्रत्यक्षावस्था अवतारशब्दवाच्या ज्ञेया। जीवेषु प्रथमकलातोऽष्टमी कलां यावत् जीवत्वद्योतिकाः कला निगद्यते। नव कलातः षोडशकलापर्यन्तं विविधश्रेणिकानामवतारणां कला समाम्नायते। भगवति श्रीकृष्णे तु षोडशानामपि कलाना पूर्णतै-वासीत्। तथा चोक्तं श्रीमद्भागवते गर्गसंहितायां गोलोकखण्डे च—

**अन्ये चांशकला पुंस श्रीकृष्णस्तु भगवान् स्वयम्।**
**इन्द्रारिव्याकुलं लेके मृडयन्ति युगे युगे॥**
(श्री० भा० १।३।२७)

**परिपूर्णतमः साक्षात् श्रीकृष्णो नान्य एव हि।**
**एक कार्यार्थमागत्य कोटि कार्यं चकार हि॥**
(ग० सं० गो० ख० १।२६)

## देवासुरशक्तिरहस्यम्

इहान्तर्जगति शक्तिद्वयं विद्यते-एका दैवी शक्ति· द्वितीया च आसुरी शक्तिः। तत्रोभयोः शक्त्योः पृथक् पृथक् विभिन्नावेवाधिष्ठातारौ स्तः। दैव्याः शक्तेः आधिष्ठातारो देवेष्वेव केचन भवन्ति, ये सिद्धे धर्मस्य च प्राप्तौ सहायका भवन्ति। विरुद्धशक्तीना विघ्नाकरिणीना शक्तीनाम् अधिष्ठातारोऽसुरा भवन्ति, ये चासुरलोकेषु निवसन्ति। मानवानान्तः-करणमेव तेषामुभयेषा देवासुराणामपि कार्यभूमि निगद्यते। यदा तेषा यथावसरः समायाति तदा तत्र ते स्वाधिकार यथावसरमासादयन्ति। इदमेवदेवासुर सग्रामस्याध्यात्मिक रहस्यम्।

यथा सिद्धिदातारो देवाः तथैव तद्विरुद्धाः सिद्धिविघ्नविधातारोऽसुराः कथ्यन्ते। विघ्नकर्त्री आसुरी प्रवृतिरेव तेषामध्यात्मरूपम्। तस्या आसुरी-प्रवृते· चालिका· शक्तय एव तेषामाधिदैवस्वरूपम्। विघ्नकर्तारोऽसुरा एव येऽसुरलोके पदभाजः सन्ति, त एव तासामासुरीणां वृत्तीनामाधिभौत स्वरूपम्। एते देवासुरशक्ती एव गीताया देवासुरसम्पद्रूपेण वर्णिते स्तः। तत्र दैवीसम्पदुपासनया कल्याण जायते मानवाना; किन्तु आसुरो सम्प-

दुपासनयाऽभीष्टं भवति अतो दैवीशक्तिसम्पन्नस्यार्जुनस्य कृते भगवदुपदेशः संगच्छते—

**दैवी संपद् मोक्षाय निबन्धायासुरी मता।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव॥ १६।५**

विश्वस्मिन् काम-क्रोध-लोभहिंसादिसम्पन्नाना मानवाना प्रकृतिः तत्तन्मनोवृत्तिरागप्रतिफलिता भिन्ना भिन्ना पृथगेव दृश्यते। इत्थं चैते देवासुरात्मके वृत्तिस्वरूपे सर्वप्रत्यक्षगम्ये एव। सर्वेषु मानवसमाजेषु देवासुरयोः सत्ता प्रकारान्तरतोऽभ्युपगतैवावलोक्यते। यथा आर्याः सनातनधर्मावलम्बिनो देवासुरसत्तामङ्गीकुर्वन्ति तथैव पारसिका अपि 'अहूर-देव" इति गणद्वयमङ्गी कुर्वन्ति। ईशानुगा मोहमदीयाश्च 'फिरस्ता-शैतान, इति वर्गद्वयमुररी कुर्वन्त्येव। एवञ्च सुरासुरभेदेन जगत्सञ्चालिका शक्ति सर्वेऽपि पृथक् पृथक् स्व-स्व समाजानुरूपामामनन्त्येव। तस्मात् पुराणादिषु शास्त्रेष्वपि देवासुरसृष्टिरहस्यवर्णनेन भवितुमर्हति काचिद् विप्रतिपत्तिः।

## गर्भविज्ञानरहस्यम्

सृष्टिप्रपञ्चे स्त्रीपुरुषयोः पारस्परिकसम्बन्धो दुर्निवारः। परमपुरुषस्य परमात्मनः त्रिगुणात्मिकाया प्रकृतेर्महामायायाः पारस्परिकयुगलयोगे दाम्पत्यभावो विद्यते। ब्रह्मविष्णुमहेशा अपि स्वस्वशक्त्या सहैव स्व स्व कार्यमनुतिष्ठन्ति। तदीया शक्ति ब्राह्मी, वैष्णवी रौद्री, माया शक्तिर्वा भण्यते। जीवधाराया तदेव शक्तिद्वय प्रधानपुरुषात्मकं त्रिगुणं नियतकार्यकलाप कुरुते।

स्त्री-पुरुषयोः सम्मेलनादेव देवमानवयो. पिण्डः प्रपूयते। देवयोनौ ब्रह्मविष्णुमहेशानारभ्य वसुरुद्रादित्यादि महेन्द्रादिकं यावत् न केऽपि देवा शक्तिमन्तरेण स्वकीय कार्य कर्तु प्रभवन्ति, न वा तत्पदोपयोगिनो भवन्ति। तथैव मनुष्ययोनावपि मानवः सस्त्रीकः एव सर्वविधान् प्रवृत्तिधर्माननुष्ठातुमुपयुनक्ति।

अपि च पुरुषेण स्त्रीः, स्त्रिया च पुरुषः कार्यक्षमत्वं भजते, स्वधर्मपालनेनाभ्युदयनिःश्रेयसमार्गमपि सुगमयति। स्त्रियं बिना पुरुषस्य पुरुषमृते स्त्रियो वा रक्षणमशक्य स्यात्।

यथा सृष्टौ द्वयो प्रयोजन तथा सृष्टिरक्षणे स्थितावपि नितान्तमुभावावश्यकौ। स्त्री खलु प्रवृत्ति धर्मपालनेन पुरुषस्याभ्युदयं विधाय निःश्रेयसं साधयति। तस्मात् स्त्रीसाहाय्य सर्वत्रैवापेक्षितम्। सृष्टिकार्यभारस्तु स्त्रीपुरुषसम्मेलेनैव संवहति। अत एवोक्तम्—

**आब्रह्म कीटान्तमिदं निबद्धं स्त्रीपुंप्रयोगेण जगत् समस्तम्।**

सृष्टेश्चत्वारो भेदा भवन्ति। तत्र प्रथमो भेदो यदाऽद्वितीयनिर्गुणब्रह्मदशातो जायमानसगुणभावसम्बलितब्रह्मणो ब्रह्माण्डगोलकमुत्पद्यते तदासौ हिरण्यगर्भसृष्टिर्निगद्यते। द्वितीयो भेदो यदापिण्डसृष्टि प्रारभ्यते यत्कारण पितामहो ब्रह्मा वर्तते, सा ब्राह्मी सृष्टिरुच्यते। तृतीयो भेदो यदा दक्षप्रजापतिपङ्कलल्पान्नानावैचित्र्यमयी सृष्टिरुपजायते, एषा मानसी सृष्टिर्मन्यते। इत्थं हि स्त्रीपुरुषसम्बन्धाज्जायमाना सृष्टिर्मैथुनी सृष्टिरभिधीयते। अयमेव चतुर्थो भेद.। तथा च पूर्वजाना मानसादिसृष्टिसम्भवेऽपि मनोबलशक्तिह्रासाद् दक्षप्राचेतसानन्तरं केवलं मैथुनी सृष्टि रेव साम्प्रत प्रचलति। तत्रैव च व्यस्तमस्ति समस्त जगत्। तथाहि मत्स्यपुराणे—

**सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्वेषां सृष्टिरुच्यते।**
**दक्षात् प्राचेतसादूर्ध्वं सृष्टिर्मैथुनसम्भवा॥ ५।२**

स्त्री-पुरुषयो सयोगात् प्राणाकर्षणविकर्षणसमन्वयेन स्वत एव पीठोत्पत्ति र्जायते उपासनापीठानि तु विविधानि भवन्ति, यत्र पूजानुष्ठानादिक विधीयते। दम्पतिसम्बन्धेन यत् पीठमुत्पद्यते तद्धि सहजपीठमुच्यते। तदनन्तरं च रजोवीर्यमिश्रणेन स्त्रीगर्भे जनिष्यमाणस्य जीवस्य कृते स्थूलशरीरात्मकगृहनिर्माणकर्मारम्भो जायते। यस्य जीवस्य कृते गृहरूपं तत् स्थूलशरीरं निर्मातुमारम्यते, तस्य तेन शरीरेण दृढसम्बन्धोऽपि सुदृढायते। अतएव जीव तेन तेन स्थूलशरीरेणात्यन्त परिताप्यते।

अत्र जीवः पापी वा स्यात्, पुण्यात्मा वा भवेत्, देवांशजन्यो वा स्यात्, ऋष्यंशोत्पन्नो वा भवेत्, स्त्री वा स्यात् पुरुषो वा भवेत्, अस्मादेव कालादारभ्य तस्मिन् स्वगृहमूले निबद्धदृष्टिर्जायते। अर्यमप्रभृतय पितृगणाश्च तत्र निर्माणे सहायका भवन्ति। यदा च तद्गृहं निवासयोग्यं जायते तदा ते त जीवं तत्र प्रवेशयन्ति। तत. शनैः शनै. पुष्टि प्राप्नुवन् विविधान् क्लेशाश्चानुभवन्। समये प्रसूतिवायुबलाद् मातुरुदराद्बहिः निर्याति।

एतदेव मातृगर्भद्वारा मर्त्यलोके जन्म गृह्णतो जीवस्य दार्शनिकं रहस्यम् ।

## पुराणानां वैशिष्ट्यम्

भारतीयसाहित्यस्याध्ययनदृष्ट्या पुराणाना महत्त्वमतिप्राचीनकालत एव स्वीकृतमस्ति । यथा वैदिकधर्मस्य स्वरूप ज्ञातु वेदस्यास्ति अपेक्षा, तथा धर्मशास्त्रस्यावश्यकता विद्यते तथैव भारतस्यास्यतीतज्ञानाय अत्युपयोगिना पुराणाना पर्यालोचनमनिवार्य वर्तते । पुराणसाहित्यं हि भारतस्यास्ति अमूल्यो निधिः । यस्यानुशीलन सरक्षणं च कस्यापि सुशीक्षितस्य भारतीयस्य कृतेऽनिवार्य कार्यमस्ति ।

पुराणेषु स्पृहणीयचरिताना राजर्षि-महर्षि देवर्षीणा पवित्रतमस्य जीवनचरितस्य विवरण विद्यमानमस्ति तथा वेदाना विश्वजनीन-विषयाणा विवेचनं कृत विद्यते । व्यक्तिगता सामाजिकी च जीवनधारामवगन्तु पुराणसाहित्यमत्यधिक सहायकमस्ति । हिन्दुसंस्कृतेः रूप-रेखा पुराणेष्वेव सुरक्षिता विद्यते । पौराणिक कथानकाना छायायाम् आध्यात्म-दर्शन धर्म-नीति-कला कौशल-भूगोल-खगोलादीना विविध ज्ञानविज्ञानाना-मद्भुतं रहस्य प्रच्छन्न वर्तते । तथा सृष्टि-प्रलय-स्वर्ग-नरक वर्ण-आश्रम-भक्ति-बन्ध-मोक्ष-आचार-विचार-उपदेश-मन्वन्तर-भुवनकोश-लोकसंस्थान-ईश्वरतत्त्व-कर्मानुसारिजीव वैचित्र्यादयो विषया आलोचिताः सन्ति ।

भारतीयपरम्परा दृढतयाऽस्य तथ्यस्य प्रतिपादन कुरुते यत् पुराणेषु वैदिकवाङ्मयस्य सर्वसाधारणाय सुगम-सरल-सुरुचिपूर्णसद्भाव-सरस-शैल्या पल्लवन जातमस्ति । वेदस्य गभीररहस्य बोधगम्यप्राञ्जलभाषया जनहृदयपर्यन्त समुपस्थापयितु पुराणाना प्रमुखमुद्देश्यमस्ति । अद्यत्वे भारते यत् किमपि धर्म प्रति अभिरुचिर्दृश्यते तत् पुराणानामेव व्यापकस्य-प्रभावस्य परिणामोऽस्ति ।

पुराणाना पवित्रे प्राङ्गणे एकत्र भक्तेर्विविधप्रकारा धारा प्रवहति तर्हि अन्यत्र विज्ञानस्य स्रोतो निःसरति । वेदेषु यस्य सङ्केतमात्र वर्तते तथा स्मृतिषु यस्य समर्थनमस्ति तस्यैव पुराणेषु आख्यानोपाख्यान-कथानकद्वारा विस्तारो विद्यते वेदानुकूलत्वादेव पुराणेषु वर्णितानि तथ्यानि प्रमाणकोटौ मन्यन्ते । अत एव पुराणानि वेदवत् प्रामाणिकानि स्वीक्रियन्ते, तथा तानि सर्वदा सम्मानदृष्ट्या समाद्रियन्ते । पौराणिकानामाख्यानाना वास्तविकं रहस्य ज्ञात्वा भारतीयसस्कृतेः रक्षाया प्रचुरः सहयोगो वा

भवितुमर्हति। पुल्यानामन्तिम लक्ष्य भक्त्या परमेश्वरे विश्वासपुरःसरं निष्कामकर्मणः सम्पादनं विधाय मोक्षप्राप्तिरस्ति। अत्र नास्ति कश्चन सन्देहो यत् भक्त्या सह ज्ञान-कर्मणो समरसतां सम्पाद्य मानवजीवनं सफलीकर्तु श्रेयः पुराणानामेव। एव भारतीयसस्कृतेः। सम्वर्द्धने धर्मस्य विकाशे च पुराणाना कार्य महत् महत्त्वपूर्णं वर्तते।

अतएव स्कन्दपुराणस्य रेवाखण्डे श्रुतिस्मृतिपुराणानि लोचनानि स्वीकृतानि। यः पुमान् एभिः त्रिभि कार्यकलाप विधत्ते, तदनुसार-माचरति व्यवहरति च स हि भगवत शिवस्याशः स्वीक्रियते—

**श्रुति-स्मृति-पुराणानि विदुषां लोचनत्रयम्।**
**यस्त्रिभि र्नयनैः पश्येत् सोऽशो माहेश्वरो मतः॥ १।६६**

पुराणेषु आदिकालतो मध्यकालपर्यन्त विभिन्नानां विकाशशीलाना कार्याणा दिग्दर्शनमस्ति, तथा प्राचीनभारतस्य सास्कृतिकप्रवृतेः धर्मस्य सामजस्य चेतिहासो वर्णितो विद्यते, दार्शनिकविचाराणा समन्वयात्मकः प्रयासो वर्तते, सामाजिकव्यवस्थाया॰ सरक्षणं धार्मिक-कार्याणामुदारतापूर्वकं समर्थन चास्ति। पुराणेषु भौगोलिक विवेचन-मतिविशदतया कृतमस्ति। तत्र भारतस्य वन-पर्वत-नद-नदी-सरोवर-देश-जनपद-तीर्थ-पुण्यक्षेत्र-सिद्धपीठादीना महदुत्कृष्ट वर्णनं विद्यते। आरण्यकभूभाग-पर्वतीयप्रदेशाना वर्णनप्रसङ्गे उपयोगिना वनस्पतीना परिचयलाभो भवति। पुराणानि सरलशैलीद्वारा आध्यात्मिक तथ्यानि अवगमयन्ति।

पुराणाना लक्ष्य न सक्षिप्तीकरणं विद्यते, किन्तु विषयाणा विशदी-करणमस्ति। प्राचीने सास्कृतिके इतिहासे, धार्मिकप्रवृत्तौ, सामाजिक-कर्मकलापे प्रोत्साहनाय पुराणानामनुशीलनमावश्यकमस्ति। न केवलं कलेवरेण अपि तु वास्तविककल्याणकारिभिः सदुपदेशप्रदानैरपि पुराण-साहित्यं जगदुपकरोतीति निश्चप्रचम्।

भारतीयार्थिक-धार्मिक-सामाजिक-सास्कृतिक-दार्शनिक-राजनीतिक। विषयेषु गभीरज्ञानाय पुराणसाहित्यस्य विश्लेषण नितान्तमावश्यकम्। समस्ताया वसुधाया उपकरिण्या भारतीयसंस्कृते॰ वैज्ञानिकपद्धत्या समीक्षात्मकशोधकायार्थं पुराणसाहित्यमतीवोयोगि साहित्यमास्ते। सर्वतोमुखसमालोचनात्मके शोधकार्ये पुराणसाहित्यात् पर्याप्तं साहाय्य-मवाप्तुं शक्यते।

भारतीयप्राचीनवाङ्मये पुराणानामेकं विशिष्टं स्थानमस्ति। यत्र वेदाना पठन पाठन श्रवण च उच्चवर्णव्यक्तीनां कृते सीमितमस्ति, तत्र पुराणानामध्ययन श्रवण च निम्नकोटिकानामपि जनाना कृते विहित विद्यते। अतो लोकशिक्षाया माध्यमेन पुराणानामुपयोगिता सर्वसिद्धाऽस्ति। भारतीयजनतासु धार्मिकविधानाय, सास्कृतिककृत्याय, सामाजिकोपकाराय, आध्यात्मिकज्ञानाय च पुराणेभ्यः पर्याप्ता प्रेरणा प्राप्यते। अतो भारतस्यैतिहासिक-सास्कृतिक-सामाजिक-राजनीतिक-परम्परा परिज्ञातु पुराणसाहित्य विशिष्ट स्थान विभर्ति। पुराणवर्णित-प्राचीनभारतीयराजवशानुक्रम-वशानुचरितसाहाय्येन प्राचीनभारतीयेतिहासनिर्माणे पुराणाना प्रमुख स्थानमस्ति। पुराणनिर्दिष्टं भुवनकोशमन्तरा प्राचीनभारतीयभूगोलज्ञानं न सम्भवति। अतो हि पुराणसाहित्यं निर्विवादतया बहुविधाना विद्यानामगाध स्त्रोतोऽस्ति तथा वेदार्थनिधेः सम्यग्ज्ञानाय उत्कृष्टं साधन विद्यते। पुराणवाङ्मयं स्वरचनाकालत एव धार्मिकी सामाजिकी शिक्षा प्रददत् स्वकीयैरुपदेशामृतैर्जनसमाजमाप्लावयत् महान्तमुपकारं करोति, अकरोत्, करिष्यति चेति निश्चप्रचम्।

तथा च विशाले पुराणसाहित्ये अष्टादश पुराणाना रामायण-महाभारतयोश्च समावेशात् केवलमष्टादशपुराणानां श्लोकसख्या चतुर्लक्षम्, महाभारतस्य लक्षम्, रामायणस्य च पञ्चविंशतिसहस्रम्। एवं सर्वसङ्कलनेन सपादपञ्चलक्षश्लोकसख्यासङ्ग्रहात्मकं साहित्यं पुराणनाम्नाऽभिधीयते। तदुक्त मत्स्यपुराणे—

**एवं सपादाः पञ्चैते लक्षा मर्त्ये प्रकीर्तिताः।**
**पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः॥**

(५३।७१)

अष्टादशमहापुराणातिरिक्तानामुपपुराणाना सख्या तु इतो भिन्ना वर्तते इत्थभूत सर्वोपकारक पुराणसाहित्य परिमाणदृष्ट्या विश्ववाङ्मयेऽद्वितीयं विशालं मनोमुग्धकरमद्वितीयं च साहित्य वर्तते।

## आत्मनिवेदनम्

पुराणविषये जायमानाना विविधाभिनवाना समस्याना समाधानाय पौराणिकतत्त्वजिज्ञासा निवृत्तये च पुराणानुशीलनाधारेण सङ्कलितमिदं

पुराणपर्यालोचन सप्रेम प्रस्तुवतो मे महान् हर्षः समुपजायते। आशासे पुराणपरिशीलनपरायणा विपश्चित्तोऽनेन नूनमुपकृता भविष्यन्ति।

महत प्रमोदस्यास्ति विषयो यद् अद्यत्वे प्रायः पुराणानामैतिहासिकशैल्या विश्लेषणस्य परम्परा परिलक्ष्यते। वस्तुत पुराणानामनुशीलने तर्कविरहितायाः श्रद्धायाः आवश्यकत्वात् श्रद्धाविहीनस्य तर्कस्य स्थान नास्ति। यतो हि श्रद्धामन्तरा पुराणानां परिशोलनं भारतवर्षनिवासिना धार्मिकप्रवृतिविश्वासशालिना नोपयोगि भवितुमर्हति। पुराणानामुपयोगः तदैव पर्याप्तो भवितुमर्हति यदा पुराणाना सहानुभूतिपूर्वकं सविश्वास श्रद्धया अनुशीलनं भवेत्। आशासे समीक्षकवर्ग अनयैव दृष्ट्या पुराणाना पर्यालोचने सहयोग करिष्यन्ति।

## आभारप्रदर्शनम्

पुराणानि विश्वकल्याणकारिण्या भारतीयसस्कृतेर्मूलस्रोतसा वेदानां भाष्यभूतानि सन्तीति भारतीयसंस्कृतेः परिशीलनार्थं पुराणना पारायण परमावश्यकं विद्यते। पुराणानामतिविपुलकलेवरतया तेषा पारायण सर्वसुकर नास्तीति निभाल्य सुहृद्भि: समुत्साहितेन मया अत्यावश्यकान् कियतः पुराणस्थान् विषयान् अत्यल्पकलेवरेऽस्मिन् ग्रन्थेऽतिसरलया संस्कृतभाषया समुपस्थापयितु प्रयासो विहित। येनाल्पेनायासेनाल्पीयस्येव समयेऽल्पज्ञानवतामपि पुसा पुराणस्थविषयाणा परिचय. स्यात्, पुराणपीयूषपानप्रसक्तमानसाना मनीषिणा मार्गश्च प्रशस्तो भवेत्। यदि मामकीनेनानेनाल्पप्रयासेन पुराणतत्त्वजिज्ञासूना विदुषा कियानपि लाभोऽभविष्यत्तदाहमात्मानं धन्यतमममस्यम्।

येषां दिगन्तविख्यातकीर्तीनां सुकृतिना कृतिभिरय ग्रन्थोऽलङ्कृत, ये चोदारहृदया माननीया महन्तो विद्वास समये समये स्वा स्वामनुपमां सम्मति प्रदाय ग्रन्थस्यास्य गौरव सम्बर्ध्य परा प्रतिष्ठा प्रापितवन्त एनं पुराणपर्यालोननामक ग्रन्थम्। तेभ्यो महानुभावेभ्योऽनेकशो धन्यवादान् वितरन्नहं साम्बसदाशिवस्य पादपद्मे तेषा दिर्घायुष्ट्वाय निकाम कामये।

पुराणाना व्यापकविषयान् बुद्धिगम्यान् निर्मातु व्यावहारिकी सुगमा सरणिमहमाश्रितवानस्मि। पुस्तकमिद साधारणसस्कृतज्ञानामपि पौराणिकरहस्यावगतये आडम्बरहीनया सरलतमया संस्कृत भाषया

लेखनस्य मया प्रयासः कृतोऽस्ति । अत्र विषयचयनमेव कृतमस्ति येन पुराणप्रतिपादितविषयाणा ज्ञानाय पाठकानामुत्तरोत्तर प्रवृत्ति र्वर्द्धेत । न मम मौलिकताया अस्ति गर्व:, पौराणिकान् विषयानवबोधयितु येषा विपाश्चितामुत्तमविचाराणामत्र परागलोलुपमधुकरवत् सङ्ग्रहो-जातस्तेषामहमस्मि नितरामधमर्णः ।

विशेषतोऽहं डा० विश्वनाथपाण्डेयस्य कृतज्ञोऽस्मि, येनास्य ग्रन्थस्य लेखनसमये स्वीयाममूल्या सम्मति विविधप्रकारक च सहयोगं प्रदाय सम्पादनद्वारा महदौदार्य प्रदर्शितम् । एतस्यैव परिश्रमफलतया ग्रन्थोऽय-मीदृग्रूपेण परिणतः प्रतिभाति । अत एतेषा महोदयना भूयो भूयः उप-कारस्मरण क्रियते । यत उत्साहशक्तिसम्पन्नाः परमोदारा इमे महानु-भावा:, समये समये समीचीनाभि सूचनाभिः मा सतत प्रोत्साहितवन्तः, यत्परिणामस्वरूप पुस्तकमिद तत्रभवता भवता करकमलयो समुप-स्थितमिति ते सन्ति वहुशः धन्यादार्हाः । एम० ए० पुराणेतिहासाचार्यान् डा० श्रीपति अवस्थि महोदयान् अनेकैः साधुवादैरवसरेऽस्मिन् संस्मरामि । ये च निजेन नैसर्गिकेणौदार्येण प्रकाशनार्थं सर्वविध सौविध्य सहर्षं समर्प्य सहजं सौजन्य प्रदर्शितवन्तो ग्रन्थस्यास्य सम्यक् सम्पादने भूया-सश्चपथो निर्दिष्टवन्त । अत एषा महानुभावानामुपकारस्मरणे शब्ददारि-द्रयमनुभवन् मौनावलम्वनमेवात्मनः श्रेयः पश्यामि ।

अन्ते वाराणसेय चौखम्वासुरभारती प्रकाशनव्यवस्थापक महोदयस्य कृतज्ञतामाविष्कुर्वन् नितरामानन्दमनुभवामि, यस्य सुरभारतोसेवा-सलग्नमनस्कतया सुरभारतीसमुपासकाना सुधिया पाठकाना सेवायामिदं पुराणपर्यालोचनं समर्पयितुमीशोऽस्मि सञ्जात. ।

ग्रन्थस्यास्य लेखने प्रकाशने च मानवसुलभा भ्रमप्रमादादिदोष-जन्या मुद्रणादिसमुद्भवाश्च त्रुटि करुणावरुणालया गुणग्रहणैकपक्षपातिनो विमलाशयाः विद्वासो विस्मृत्यमामवश्यमनुग्रहीष्यन्तीति भूयो भूय. साञ्ज-लिरहं विनिवेद्य अखिललोकनियामकस्य भूतभावनस्य भगवतो भवानी-पतेः चरणकमलयोः वाक्मुमनसा मनसा सादरं समभ्यर्च्य पुराण-मूर्धन्यस्य श्रीमद्भागवतस्य द्वादशस्कन्धे तृतीयचतुर्थाध्याययोः सार-रूपतया राज्ञे परीक्षिते उपदिष्टां वैयासिकिकी वाणी संस्मरन्नहं विरमामि—

यस्तूत्तमश्लोक - गुणानुवादः
सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं
कृष्णेऽमलां भक्तिमभीप्समानः ॥ १५ ॥

यं नामधेयं म्रियमाण आतुरः
पतन् स्खलन् वा विवशो गृणन् पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं
प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥

विद्या - तपः - प्राणनिरोध - मैत्री-
तीर्थाभिषेक - व्रत - दान - जप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा
यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥

एताः कुरुश्रेष्ठ ! जगद्विधातु-
र्नारायणस्याखिलसत्त्वधाम्नः ।
लीलाकथास्ते कथिताः समासतः
कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-
र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण
पुंसो भवेद् विविधदुःखदवार्दितस्य ॥ ४० ॥

महाशिवरात्रिः
२०३२

विद्वद्वशंवदः
श्रीकृष्णमणित्रिपाठी

# सम्पादकीयम्

भारतीयसंस्कृति र्हि वेदस्मृतिपुराणानामाश्रयेणाद्य यावत् प्रचलति। अनेकशाखाविभक्तेषु चतुर्षु वेदेषु, ब्राह्मणेषु, आरण्यकेषु, उपनिषत्सु, च विश्वकल्याणकारिणीषु परमोदारमन्वादिवहुसङ्ख्याकासु स्मृतिषु, ब्रह्माद्यष्टादशभेदभिन्नेषु पुराणेपु तस्याः सस्कृतेः स्वरूप सर्वश्रेष्ठमेकरूपमेवोपलभ्यते। यद्यपि वहुषु कृतादियुगपरम्परासु व्यतीतासु भारतोयाचारविचाराणा नैकविधत्वमिवाभाति, तथापि न किमपि तादृशं यत् सर्वथा वेदादिप्रोक्ताचारविचारान् विसवदेत्। वेदवाङ्मयेषु यद् भारतीयाचाराविचाराणा स्वरूप सक्षेपत उपलभ्यते, तत्स्मृतिपु विस्तृतं पुराणेषु च ततोऽपि कथोपकथनेतिहासद्वाराऽतिविस्तृतमुपलभ्यते, परन्तु सर्वत्र पुष्पमालाया सूत्रमिव वैदिकं मूलस्रोत. स्वरूप सर्वत्रानुस्यूतमेव। अद्य यावद् भारतोया यत्र कुत्रापि भारते ततोऽपि सुदूरमफ्रिकादिदेशेषु गता अपि धार्मिक कार्यमनुतिष्ठन्तः सर्वत्रादौ श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थमित्यादि सकल्पयन्त्येव। पुराणैरेव भारतीयाना सर्वदेशीयजनेभ्यो विशिष्ट भिन्नत्वं धार्मिकत्वमीश्वर-दैव-वेद-पुनर्जन्मप्रभृतिषु दृष्टश्रद्धत्वम्, कृपाऽहिसादिस्वभावत्व च सुरक्षित विद्यते। यान्याधुनिकाना नूतनानीव विज्ञानानि, तानि क्वचित्सक्षेपत', क्वचिच्च विस्तरतः पुराणेषूपलभ्यन्ते। प्रत्युताद्यतनोयाधुनिकविज्ञानवेतॄणा बुद्धेः सर्वथाऽगोचरविषय.। यथा कया क्रमबद्धपद्धत्या सृष्टे' प्रादुर्भाव' ? कथ कदा प्राणतत्त्वस्य चैतन्यस्य च पाञ्चभौतिकं शरीर धृत्वा जगति सञ्चारः ? इन्द्रियाणा मनसो बुद्धेश्च कदा क्रमेण वा समुत्पत्तिः ? इन्द्रिय-मनोबुद्ध्यादितत्त्वानि कैर्द्रव्यविशेषैर्मिलितानि ? मरणानन्तरमुत्पत्ते पूर्वं वा जोवस्य कीदृशी स्थितिः कुत्र वा वासः ? इत्यादयो वहवो विषया. पुराणेषु क्रमेणोपवद्ध उपलभ्यन्ते। तत्र प्रथमतः एकदेशिकशरीरी जीव उत्पद्यते, इति सिद्धान्त आधुनिकवैज्ञानिकानाम्, भारतीयप्राचीनपौराणिकवैज्ञानिका अपि स्वपद्धत्या क्रमवद्धरूपेण जीवस्य शरीरधारणप्रकारमिन्द्रियाणा क्रमश' समुत्पत्ति तद्भेदात् प्राणिषूच्चावचभेदाश्चोपवर्णयन्ति यथा हि श्रीमद्भागवते—

**वीर्यं हिरण्मयं देवो मायया व्यसृजत् त्रिधा।**
**अन्तःशरीर आकाशात् पुरुषस्य विचेष्टतः।**
**ओज. सहो बलं जज्ञे तत' प्राणो महानसु ॥**

**प्राणेन क्षिपता क्षुत्तृडन्तरा जायते प्रभोः ।**
**पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ।**
**मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ।**
**विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयो ॥**
**जले वै तस्य सुचिरं निरोधः समजायत ।**
**नासिके निरभिद्येतां दोधूयति नभस्वति ॥**
**यदात्मनि निरालोकमात्मानं च दिदृक्षतः ।**
**निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥**

( २।१० १३-२१ )

अनेन महता प्रघट्टकेन प्राणतत्त्वे शरीरस्थे जाते तत्तदपेक्षयेन्द्रियाणा क्रमशश्चोत्पत्तिर्जायते इति ज्ञायते। यद्यप्याधुनिका पाश्चात्या, भारतीया अपि केचन क्रममिम न विश्वसन्ति, पौराणिकान् सर्वानपि बुद्धेरगोचरान् विषयान् काल्पनिकानीति मत्वोपहसन्ति तथापि तत्तेषा कथन सुविचारकेभ्यो न सर्वथा रोचते। तेऽत्र विषयेऽभिप्रयन्ति—यस्य तत्त्वस्य ज्ञानार्थ यादृश उपायोऽपेक्ष्यते तादृशेनैवोपायेन तस्य तत्त्वस्य ज्ञान भवतीति पौराणिकस्य बुद्धेरगोचरस्य तत्त्वजातस्य साक्षाद् ज्ञानार्थ निर्मला तपसा दोषरहिता सात्त्विकी बुद्धिरपेक्ष्यत इति नैकवारं तत्र तत्र पुराणादिषु वर्णितमतस्तत्तत्त्वज्ञानार्थं तादृशस्यैव वर्णितस्योपायस्य स्वीकार अपेक्ष्यते। तादृशानि सकलज्ञानसग्राहकाणि पुराणान्यतिप्राचीनानि, प्रत्युत वेदवत्परम्परया प्राप्तानीति वेदेष्वपि क्वचित् पुराणशब्दस्य प्रचलितार्थस्योपलब्ध्या वक्तु शक्यते। अतएव पुराणकथास्थव्यक्तिविशेषाणा पुरूरवोर्वशीयमयमोप्रभृतीनामुल्लेखः ऋग्वेदेऽप्युपलभ्यते। वेदानां समीचीनार्थकरणं पुराणं विनाऽशक्यप्रायमेव, प्रत्युत वैदिकार्थस्य हानिकरणमेव। अत सम्यगुक्त महाभारतस्यादिपर्वणि—

**इतिहासपुराणाभ्यां वेदं समुपवृंहयेत् ।**
**बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति ॥** ।२६७

पुराणानामाश्रयेणैव मनुष्यजीवनस्य प्राथमिकव्यवस्था, उन्नतिप्रकारे विद्यमाना विशिष्टा प्रकारा, भिन्न-भिन्नजातीना परस्परमेलनपृथग्भावः नीतितत्त्वाना, धर्मतत्त्वाना भिन्नभिन्नदेवोपासनातत्त्वाना निरूपणम्, जीवस्येतिकर्तव्यता, समाजस्य क्रमविकासः परमेश्वरस्य सर्वत्रैकरूपेण स्थितिः सुखस्य मूलं साधनमित्यादयो बहवो विषयाः पुराणद्वारैव मनुजाः

सरलतया सुखेन च ज्ञातुं शक्नुवन्ति । प्रत्युत पुराणैरस्पृष्टं किमपि तत्त्व विचारजात च नास्तीति कथने नात्युक्तिदोषस्पर्शनभीति ।

तानि पुराणानि भगवता वेदव्यासेन शुकाय पुत्राय रोमहर्षणशिष्याय चोपदिष्टानि । अथ रोमहर्षणश्च महान् पुराणवक्ताऽऽसीदिति वायुपुराणोक्ततन्नामनिर्वचनतो ज्ञातुं शक्यम्—

**लोमानि हर्षयाञ्चक्रे श्रोतॄणां यत्सुभाषितैः ।**
**कर्मणा प्रथितस्तेन लोकेऽस्मिल्लोमहर्षण ॥ १।१६**

रोमहर्षणेन तस्य सुमतिप्रभृतिभि षट्शिष्यैश्च पुराणसहिताद्वारा सर्वत्र भारतीयसस्कृते पुराणज्ञानस्य च प्रचार कृत—

**प्राप्य व्यासात् पुराणादि सूतो वै रोमहर्षण ।**
**सुमतिश्चाग्निवर्चाश्च मित्रयुः शांशपायन. ॥**
**कृतव्रणोऽथ सावर्णिः षट् शिष्यास्तस्य चाभवन् ।**
**शांशपायनादयश्चक्रु पुराणानां तु संहिता ॥**

**( अ० पु० २७१, १०१२ )**

विष्णुपुराणमपि एतदेव समर्थयति । तथाहि—

**प्रख्यातो व्यासशिष्योऽभूत् सूतो वै रोमहर्षणः ।**
**पुराणसहितां तस्मै ददौ व्यासो महामुनिः ॥**
**सुमतिश्चाग्निवर्चाश्च मित्रयु. शांशपायन ।**
**अकृतव्रणश्च सावर्णि षट् शिष्यास्तस्य चाभवन् ॥**

**( ३।६।६, १६ )**

नैमिषारण्ये शौनकादिभिर्यज्ञकर्मणि प्रवृत्तैः प्रवर्तितेन रोमहर्षणेन तस्य पुत्रेणोग्रश्रवसा च प्रायः सर्वाणि पुराणानि प्रोक्तानि । यथा— शौनकस्य सिद्धाश्रमेऽग्निष्टोमयज्ञे षष्टिसहस्रऋषिमध्येपूर्व सनत्कुमाराय नारदेनोक्त नारदीयपुराणमनेन श्रावितम् (ना० पु० १,१२) कुरुक्षेत्रे दृषद्वतीतीरे दीर्घसत्रे वायुपुराण ब्रह्माण्डञ्च कथितम् ( वा० पुराणे १।१४,१५ ) द्वादशवार्षिकसत्रे च ब्रह्मपुराण प्रोक्तम् (ब्र. पु० १।१६,१७) इत्यादिवर्णान, तत्र तत्र पुराणप्रारम्भ एवोपलभ्यते । अनेन पुराणप्रचारसमुद्योगो ज्ञायते ।' एतादृश.स्य सर्वोपकारकपुराणजातस्य सर्वेषा सारल्येन सुखेन च ज्ञान भवत्वितीच्छयाऽऽङ्ग्लभाषया पाजिटर-वेसेण्ट-स्मिथ-प्रभृतिभिः, महाराष्ट्रभाषया श्री प० काले—श्री प० चित्रावप्रभृतिभिः, हिन्दीभाषाया

प० श्रीज्वालाप्रसादमिश्रैः, प० श्री कालूरामशास्त्रिभिः, श्री माधवाचार्यै, पं० वलदेवोपाध्यायैश्च, एव वंगभाषाया जीवनीचरित्रकारैः, तामिलप्रभृतिभिषादीना निबन्धकारैश्च क्वचित् सक्षेपेण क्वचिच्च विस्तरेण पुराणवाङ्मये व्यलेखि; परन्तु संस्कृतभाषया सर्वपुराणाना सक्षेपेण स्वरूपबोधकः तत्रत्यविषयविशेषस्य यथा भक्तेः, पुराणलक्षणजातस्य, पुराणाना महत्त्वस्य, पुराणस्थविज्ञानस्य, पुराणभाषाविमर्शस्य, सृष्टिरहस्यस्य, अवतारतत्त्वस्य, भुवनकोशादिविषयजातस्य, सर्वपुराणाना सक्षिप्तविषयस्य च बोधक कश्चनाल्पकायो ग्रन्थोऽपेक्षित आसीदेव। तस्या अपेक्षाया पूर्ति पण्डितवर्यै व्याकरण-साहित्य-वेदान्त-साङ्ख्य-योग-पुराणेतिहास-धर्मशास्त्राचार्यैः, एम० ए०-पी-एच्० डी०-साहित्यरत्नेत्याद्युपाधिधारिभिः श्रीमद्भिः डा० श्रीकृष्णमणित्रिपाठिभि. महता प्रयत्नेन परिश्रमेण च कृतेत्यवश्य ते जनताया अनेकधन्यवादार्हाः। अनयैव रीत्या तैरग्रेऽपि पुराणस्थभूगोलखगोलभागस्य समाजस्योन्नतिप्रकारस्य पुराणस्थविशिष्टविषयजातस्य च वर्णन सक्षेपेण यदि क्रियेत, तर्हि मन्ये जनताजनार्दनस्य सेवया साकं कीर्त्यादिप्राप्तिश्च तेषा स्यादिति। एतद्ग्रन्थरत्नमेवक्ष्यानुशील्य च त्रिपाठिमहोदयाना परिश्रमं जनताऽवश्यं सफलयिष्यतीतिनिश्चयेन वक्तु शक्यते। अन्ते च ग्रन्थकर्तृभ्य. त्रिपाठिमहोदयेभ्योऽनेकधन्यवादान् वितीर्य तेषा समुन्नति श्रीकाशीपुरीपालकस्य भगवतो विश्वनाथस्य चरणकमलयो समभ्यर्थयते कामयते च निरन्तरमय जनः।

**नेत्र-त्रि-व्योम-युग्माब्दे वैक्रमीये शुभङ्करे।**
**फाल्गुनस्यासिते पक्षे शिवरात्र्यां शनौ दिने॥**
**त्रिपाठ्युपाह्वश्रीकृष्णमणिशास्त्री सतां मुदे।**
**पर्यालोचनमेतद्धि पुराणानां व्यधाद् बुधः॥**

**सम्पादकः**

**विश्वनाथपाण्डेयः**

**( एम० ए०, पी-एच्० डी०, पुराणेतिहासाचार्यः )**

**सं० कालेज काशी हिन्दू विश्वविद्यालयस्यः**

## पुराण पुरुषः



पुराणं चम्पकाभासं शुकवक्त्रं च तुन्दिलम् ।
अक्षसूत्राभयं ज्ञेयं नानाभरणभूषितम् ॥



# पुराणपर्यालोचनम्

( १ )

श्रीमद्रामयशस्त्रिपाठिचरणाम्भोजं स्मरन् सादरं
सिद्धान् भागवतोत्तमान् गुणनिधीनत्यादरादाभजन् ।
वेदव्यासमहर्षिमार्यममलं मूर्ध्ना नमन् साञ्जलि-
र्वन्देऽहं गणपं पुराणपुरुषं सर्वेशमीशं विभुम् ॥

( २ )

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
नित्यं यत्र निवेशितात्ममनसां भक्तिः समुज्जृम्भते ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्यय-
स्तं वृन्दावनदिव्यवैभवमहं श्रीकृष्णचन्द्रं भजे ॥

( ३ )

पुराणार्णवगाम्भीर्यंरहस्यं ज्ञातुमिच्छया ।
पुराणरत्ननिचये कृतभूरिपरिश्रमः ॥

( ४ )

त्रिपाठ्युपाह्वश्रीकृष्णमणिर्विद्वद्वशंवदः ।
प्रस्तौतीदं पुराणानां पर्यालोचनमद्भुतम् ॥

## प्रथमः परिच्छेदः

भारतीयसंस्कृतेर्विकासक्रमेऽनादिकालान्निर्बाधगत्या प्रवहन्त्या वैदिकविचारधाराया व्यापक प्रभाव. परिलक्ष्यते। संस्कृतवाङ्मये वेदानां वैभवं बहुभि प्रकारैर्वर्णितं वर्तते। समेषा प्राणिना कर्तव्यविषये वेदा सृष्टेरादिकालत एव मार्गप्रदर्शका सन्ति। वेदा कालत्रयेऽपि आदर्शमयजीवनयापनाय शुभा प्रेरणा प्रददति । वैज्ञानिकदृष्ट्या वैदिकविचारधारा हि ऐतिहासिकस्यान्वेषणस्यास्ति विषय । उत्तर-कालीनविभिन्नधाराभिर्भारतीयसंस्कृते समये समये महानुपकारो जाजायते। भारतीयसंस्कृतौ वैदिकविचारधाराया भव्यभावना तथा मानवीयजीवनस्य कर्तव्यविषये तद्व्यापकदृष्टिश्चास्ति अनुपमा। मानवी-यादर्शजीवननिर्वाहदृष्ट्या लौकिकाभ्युदयसफलतादृष्ट्या च वैदिकविचार-धाराया व्यापिका दृष्टिर्न केवलं भारतीयानामेव कृते गौरवस्यास्ति विषय, प्रत्युत सार्वभौममानवसमाजस्य कृतेऽपि सन्देशवाहिका विद्यते। मानवजीवनस्य विभिन्नाभिर्दृष्टिभिर्मार्गप्रदर्शनस्य गौरवं वैदिकविचार-धाराया एवास्ति। अत एव विभिन्नप्रतिकूलपरिस्थितावपि सा अक्षुण्णा सती प्रवहन्ती भारतीयसंस्कृतिविकासे नैजं प्रभावमुपस्थापयति। धार्मिकाध्यात्मिकचिन्तनाधारे स्थिताया वैदिकधाराया व्यापिका दृष्टिः विश्वशान्तेर्विश्वबन्धुत्वस्य चोदात्ताभिर्भावनाभिरोतप्रोताऽस्ति । अतो. वैदिकमन्त्रेषु मानवमात्रस्य परस्परं सौहार्दभावनाया सङ्केत स्वाभाविक एव विद्यते।

राष्ट्रस्य सर्वविधसमुन्नतये इदमत्यन्तमावश्यकमस्ति यत्तस्य समेषामङ्गाना विकासो भवेत् तथा समस्ताया जनताया सुखसमृद्धि-भावना जागृता स्यात्। अत एव वेदपुराणयोर्बौद्धिकनैतिकविकासेन सहैव शारीरिकस्वास्थ्याय दीर्घायुष्ट्वाय च पदे पदे प्रार्थनं विद्यते।

एवं वैदिकविचारधाराया सर्वतो महत्त्वपूर्णा विशेषता तस्या व्याप-कदृष्टौ वर्तते। सर्वासु परिस्थितिषु मनुष्य सफलतापूर्वकं स्वकीयजीवन-स्य सर्वाङ्गीणं विकासं कुर्यादित्येवं तस्या वर्तते प्रधानं लक्ष्यम्। वैदिक-विचारधाराया इदमपि मुख्यं लक्ष्यं विद्यते, यन्मानवो धर्मार्थकाम-

मोक्षाख्याना चतुर्णा पुरुषार्थानामभ्युदयनि श्रेयसयोर्वोपलब्धिं विदध्यात्। इदमेव भारतीयसंस्कृतेर्विकासे व्यापकस्य शाश्वतिकस्य च प्रभावस्य रहस्यं विद्यते।

वेदा एकमात्रमेव धर्मस्य मूलमभिमतम्—"वेदोऽखिलो धर्ममूलम्"[१] "वेदा मूलं हि धर्माणा वर्णाश्रमविवेकिनाम्"[२] धर्मविदा वेद सर्वोत्कृष्ट-मस्ति साधनम्। भगवता मनुनापि धर्माचरणस्य मूलमाधारो वेद एव स्वीकृतोऽस्ति। तेन यस्य धर्मस्य प्रतिपादनं कृतं स वेदमूलक एवास्ति, यतो हि स सर्वज्ञानमयो विद्यते[३] सर्वज्ञतयासौ उत्सन्नविप्रकीर्णपठ्यमान-वेदार्थं ज्ञात्वा लोकहितायोपनिबद्धवान् मानवं धर्मशास्त्रम्। परम्परागत-प्राचीनदृष्ट्यनुसारमपौरुषेयवेदवदेव वेदमूलक. सनातनधर्मोऽपि अपरि-वर्तनशीलो विद्यते। तदर्थ कस्यापि क्रमिकविकासस्य ह्रासस्य वा किमपि स्थानं न विद्यते, तथा च वेदप्रतिपादितं धर्ममनुतिष्ठन् मानव इह लोके धार्मिकत्वेनानुषङ्गिकी कीर्तिं परलोके च धर्मफलमुत्कृष्टं स्वर्गाप-वर्गादिसुखस्वरूपं प्राप्नोतीत्यत्र नास्ति काचित्संशीति.।[४] अतो धर्मेच्छूना प्राणिना कृते वेद एव सर्वोत्कृष्टं सकलतत्त्वानुगमकं सर्वमान्यञ्च प्रमाणं वर्तते।

अतो भारतीयतत्त्वज्ञानस्य धर्मस्य चोद्भवविकासयोरनुसन्धानार्थं वेदाना परिशीलनं नितान्तमस्ति आवश्यकम्, यतो हि वेदा· सन्ति भारतीयधर्मदर्शनयो स्रोतांसि। विश्ववाङ्मये वेदाना स्थानमस्ति

---

१. मनुस्मृतौ २।६। २ पद्मपुराणे पा ख. ५।१४।

३. यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥=म. स्मृ २।७।

४ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥=म स्मृ २।८।

भविष्यपुराणेऽपि—
धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।
स तु पञ्चविध· प्रोक्तो वेदमूलः सनातनः॥
अस्य सम्यगनुष्ठानात् स्वर्गो मोक्षश्च जायते।
इह लोके सुखैश्वर्यमतुलञ्च खगाधिप॥=३२।१२।

अप्रतिमम् । लौकिक पारलौकिको वा कश्चन विषय एवंविधो नास्ति यस्य विवेचनं वेदेषु न जातमस्ति । वैदिकरहस्यस्य यथार्थज्ञाननिमित्तं तन्मूलकाना पुराणाना पर्यालोचनमत्युपकारि वर्तते । वेदेषु सक्षिप्तरूपेण वर्णिताना विषयाणामेव पुराणेषु विशदीकरणं विद्यते । प्राचीनतमस्य भारतस्यादर्श भारतीयसंस्कृतेश्च वास्तविकं स्वरूपमवगन्तुं पुराणमेवैकमात्रं सरलं सुगमं सर्वोत्कृष्टञ्च साधनं वर्तते । अत एव पुराणं भारतीयवाङ्मयमन्दिरस्य सुवर्णमय कलश कथ्यते ।

पुराणेषु प्रसङ्गवशात् स्थले स्थलेऽखिललोककल्याणकारिण्या भारतीयसंस्कृते. मौलिकाना सिद्धान्ताना स्पष्टमुल्लेखो विद्यते, वेदस्य च विश्वजनीना विषयाणा साङ्गोपाङ्गं विवेचनमुपलभ्यते । अतो भारतीयानामार्याणा व्यक्तिगता सामजिकी च जीवनधारा सम्यगवगन्तुः पुराणसाहित्यं सर्वाधिकं सहायकमस्ति । वस्तुतो भारतीयसंस्कृते रूपरेखा पुराणेष्वेव सुरक्षिता वर्तते । पुराणेषु भक्तिज्ञानोपासनादिद्वारा मानवजन्मन. प्रधानलक्ष्यभूताया भगवत्प्राप्ते साधनं सदाचार:, सृष्टेरादिकालत पूर्वजाना विवरणम्, लोककल्याणनिरताना मुनीनामृषीणां महर्षीणाञ्च पवित्रतममाचरणं तथादर्शभूताना महापुरुषाणामुज्ज्वल चरित्रञ्चाङ्कितमस्ति, यदाधारेणाधुना सर्वोऽपि जनो नैजं जीवनं सर्वविधं समुन्नतशीलं विधातुं शक्नोति ।

एवं भारतीयजीवनस्य प्रतिबिम्बप्रदर्शनात् पुराणेषु देशस्यास्य साहित्य-संस्कृत्योर्वास्तविकं स्वरूपमुपलभ्यते । पुराणाना समस्तो वृत्तान्तो भारतीयसंस्कृते प्रतिनिधित्वं करोति । व्यावहारिकजीवनेन सह सम्बद्धाया भारतीयसंस्कृतेरविकृतस्वरूपोपस्थापनं पुराणाना वैशिष्ट्यमस्ति ।

पुराणेषु मानवीयजीवनस्य जीवितोऽभिमान तथा राष्ट्रीयसमुन्नतेरुदन्त उत्साहो निहितोऽस्ति । दैशिक-राष्ट्रिय-सामाजिक-सास्कृतिकचेतनाया. प्रतीकानि पुराणानि शिथिलसमाजाय शुभा प्रेरणा प्रददति, असंयतराष्ट्राय जागर्तिमुपदिशन्ति तथा मानवीयजीवनं समुन्नेतुं महान्तं सहयोग विदधते । जनचेतनया समाजहितभावनया लोककल्याणकामनया मनोरञ्जकरुच्या च प्रेरितो भगवान् वेदव्यास. पुराणाना प्रणयनं कृतवान् । पुराणानि अस्माकमैहलौकिक्या पारलौकिक्याश्च समुन्नते: साधनानि सन्ति । पुराणानुसारं जीवननिर्वाहार्थं हिन्दुसमाज सदा जागरूकस्तिष्ठति ।

प्रतीकवाद-परोक्षवाद-रहस्यवादादिभिरनुप्राणितं पुराणसाहित्य भारतीयसामाजिकजीवनस्यास्ति दर्पणम् । सरल-सुबोध-प्रबुद्धशैलीद्वारा अतिप्राचीनं सदपि पुराणसाहित्यं नित्यनवीनताया. स्फूर्तेरुत्पादने महदुपकारि साहित्यं विद्यते। स्वकीयै. विशुद्धै. सदुपदेशै समाजं शुद्धं विधाय सत्यं शिवं सुन्दरमादर्शमुपस्थापयति पुराणसाहित्यमिति निश्चप्रचम् । भारतीयसमाजे श्रुतिस्मृतिवत् पुराणानामप्युपादेयता विद्यते। अत एव वेदाना मर्म विज्ञातुं पुराणानामनुशीलनेऽस्माकं पूर्वजैः महद्बलं प्रदत्तं विद्यते। यावत् पुराणानामध्ययनं न क्रियते तावद् भारतीयमध्ययनं न्यूनतापूर्णमेवावतिष्ठते। स्मृतिशास्त्राणामुद्घोषोऽस्ति यत् पुराणसाहित्यमादिकालतश्चतुर्दशाना विद्याना धर्मस्य च प्रधान-मुद्गमस्रोतोऽस्ति। अतोऽत्र योगिना याज्ञवल्क्येन पुराणशब्द. प्रथम-मेवोपात्तोऽस्ति[1] ।

वस्तुत· पुराणेषु धर्म-दर्शन-भक्ति-कलेतिहास-भूगोल-राजनीति-समाजव्यवस्थासाहित्यादिविभिन्नविषयिका सामग्र्यः सङ्कलिता. सन्ति। येषा विवेचनं भारतीयेतिहासस्य नवनिर्माणेऽत्यन्तमुपादेयमस्ति। स्कन्दपुराणस्य रेवाखण्डे तु वेदविद्या पुराणं धर्मशास्त्रञ्चेति त्रयं सर्वशास्त्रविनिर्णये प्रमुखं स्वीकृतमस्ति पुराणञ्च पञ्चमो वेद स्वी-कृतोऽस्ति।[2] अपि च—एकदा ब्रह्मविद्यामध्येतु स्वसमीये समुपस्थितं देवर्षिं नारदमुद्दिश्य भगवान्सनत्कुमार. पूर्वाधीतविद्याविषयं यदा जिज्ञासितवान् तदातेन तदुत्तरे स्वाधीतविद्यासु पञ्चमवेदरूपस्य पुराणस्यापि चर्चा कृतास्ति। अत पुराणानि भारतीयजीवनस्याधारं सांस्कृतिकस्येतिहासस्य च शृंखला मत्वा तदध्ययनं नितान्तमावश्यकम् ।

---

१. पुराण-न्याय-मीमासा-धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्याना धर्मस्य च चतुर्दश ॥=या० स्मृ० १।३

२. आत्मनो वेदविद्या च ईश्वरेण विनिर्मिता ।
शौनकीया च पौराणी धर्मशास्त्रात्मिका च या ॥
तिस्रो विद्या इमा मुख्याः सर्वशास्त्रविनिर्णये ।
पुराण पञ्चमो वेद इति ब्रह्मानुशासनम् ॥=१।१७-१८ ।

—:*:—

# पुराणानां महिमा

पुराणवाङ्मयं भारतीयजीवनसाहित्यस्यास्ति अमूल्यं रत्नं तथाऽतीतं वर्तमानेन सह संयोजयितुं स्वर्णमयी शृङ्खला। विश्वसाहित्यस्याक्षय-भाण्डारेऽष्टादश महापुराणानि अनुपमानि सर्वश्रेष्ठानि च रत्नानि सन्ति । इमानि चास्माकं सामाजिक-सांस्कृतिक-राजनीतिक-धार्मिक-दार्शनिक-जीवनं स्वच्छदर्पणवत् प्रतिबिम्बितं कुर्वन्ति, सहैव सरल-भाषया क्रमबद्धकथानकशैल्या च प्राचीनानि सन्त्यपि नवीनतमां स्फूर्ति सञ्चारयन्ति ।

भारतीयवाङ्मये पुराणसाहित्यस्य कृते एकं विशिष्टं महत्त्वपूर्णञ्च स्थानं विद्यते। धार्मिकपरम्परायां वेदानन्तरं पुराणानामेव मान्यता वर्तते। पौराणिकज्ञानस्याभावे वैदिकसाहित्यस्यार्थावबोधः सर्वथाऽसम्भवो विद्यते। यथा "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्, समूढमस्य पांसुरे" (ऋग्वेदे १।५।२२।१७) अस्य मन्त्रस्यार्थो न सायणादिभाष्यैरपि सम्यक् स्पष्टीभवति, यद् विष्णुना कदा कथं केन प्रकारेण वा विश्वमिदं त्रिभिः पदैः मापितम् ? किन्तु पुराणेषु यदा बलिवामनकथया मन्त्रार्थस्यास्य विवरणं सम्यगुपलभ्यते तदा सन्देहस्य कश्चनावसरो न तिष्ठति। यथा वा "नमो नीलग्रीवाय" (यजुर्वेदे १६।२८) इति मन्त्रस्यार्थो महीधरेण स्वभाष्ये कृतोऽस्ति यद् विषभक्षणान्नीलं जातं कण्ठं यस्य तस्मै शिवाय नमः, परन्तु अनेन भाष्यार्थेन न स्पष्टं जायते यच्छङ्करेण कदा कथं केन प्रकारेण विषभक्षणं कृतम् ? किन्तु पुराणेषु समुद्रमन्थनप्रसङ्गे अस्य समाधानं सम्पूर्णरूपेण जायते। अतः पौराणिकसाहाय्यं विना वेदानां गूढार्थस्य समाधानं न सम्भवति। सूत्ररूपस्य वेदस्य भाष्यभूतं पुराणमर्थपरकं भूत्वा तदुपयोगित्वं नितरां वर्द्धयति ।

विश्वस्मिन् विद्यमानेषु ग्रन्थेषु भारतीयैः सुरक्षितो वेदराशिः परमप्राचीनोऽस्तीत्यत्र न कापि विप्रतिपत्तिः। अतः स कदा प्रादुर्भूतः केन वा प्रणीत इति विषये सुनिश्चितं न किमपि वक्तुं शक्यम्। भारतीयास्तु वेदोऽनादिरपौरुषेयश्चेति श्रद्दधते। अनादिशब्देन प्रारम्भ

समयाभावः, अपौरुषेयपदेन च पुरुषकर्तृत्वाभावो बोध्यते। एवञ्चेश्वरवन्नित्यं दोषरहितं स्वत. प्रमाणञ्च वेदजातमिति भारतीयानामस्ति विश्वासः।

अतिप्राचीनकालत. समायातेऽपि वेदजाते आकाशि काश्मीरं यावत्, हिमालयत. कन्याकुमारीपर्यन्तं च पाठभेदाभाव आश्चर्यं जनयति सुविचारकाणा विपश्चिता चेतस्सु। अतो वेदरक्षकाणा परमतपस्विना ब्राह्मणाना महती प्रशंसा परमा प्रतिष्ठा च प्रचलति प्राचीनकालत एव। तैस्तु सपरिश्रमं पदघनक्रमादिविकृतिद्वारा महता प्रयत्नेन दृढया निष्ठया नैकानि कष्टानि सोढ्वापि वेदाज्ञा राजाज्ञेवाद्य यावत् परिपाल्यते। भारते प्राचीनकालत. प्रणीताना सर्वविषयकशास्त्राणा साक्षात् परम्परया वा वेद एव मूलत आश्रयो विद्यते।

विदन्ति जानन्ति प्राप्नुवन्ति वा धर्मार्थकाममोक्षानेभिरिति वेदा इति व्युत्पत्त्या "विद्ज्ञाने" "विद्लृ लाभे" वा इति धातो. "हलश्च" (३।३।१२१) इति पाणिनीयसूत्रेण करणघञा वेदशब्दो निष्पद्यते। एवञ्च वेदशब्दस्य मुख्योऽर्थो ज्ञानं परन्तु ज्ञानप्रदाना ग्रन्थानामपि वेदसंज्ञेति व्यवहार। वेदलक्षणवर्णनप्रसङ्गे भगवता सायणाचार्येणापि "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद." इति प्रत्यपादि। अत एवोक्तं तन्त्रवार्तिके कुमारिलभट्टेन—

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥**

प्रामाण्यविवेचनप्रसङ्गे वेदाना स्वत. प्रामाण्यमितरेषा शास्त्राणा तु वेदमूलकत्वेन प्रामाण्यमिति मीमासायां तत्र तत्र प्रपञ्चितमस्ति। निखिलभूमण्डलस्य वाङ्मयेषु भारतीयं वाङ्मयं वेदराशिर्मूर्द्धाभिषिक्त इति नातितिरोहितं विपश्चिदपश्चिमानाम्। तत्कारणञ्च वेदानामपौरुषेयत्वमेव। तदुपबृंहणार्थं यानीतिहासपुराणानि समुपलभ्यन्ते, तेष्वपि मनसो विमुग्धकरमपूर्वं ज्ञानं विज्ञानञ्च संगृहीतं वर्तते, यज्जिघृक्षवः सहृदया अहर्निशं कृतभूरिपरिश्रमा अपि पारं गन्तुमक्षमा तीरे एवावतिष्ठन्ते। अतो वेदपुराणयोः समन्वयपूर्वकानुशीलनाभ्यासो नितरामपेक्ष्यते।

## पुराणानां वेदमूलकत्वम्

मनुष्यो महानपि बुद्धिमान् कथं न स्यात्, किन्तु तस्मिन् भ्रमप्रमादादीना सम्भावना भवत्येव। अत एव मानवरचितं ग्रन्थमधीत्य निर्भ्रान्तं पूर्ण च ज्ञानं भवितुं नार्हति। वेदा न केनापि मनुष्येण रचिता नापीश्वरेण निर्मिता. सन्ति, किन्तु परमेश्वरनि श्वासवन्नित्या अनादयोऽनन्ता अपौरुषेयाश्च सन्ति। प्रलये परमेश्वरेऽन्तर्हिता ते सृष्टिसमये ईश्वरस्य नि.श्वासरूपेण नि.सरन्ति। सर्वप्रथमं ब्रह्मा वेदाना ज्ञानं प्राप्नोति। तथाच श्रुति—"यो ब्राह्मणं विदधाति पूर्वं यो वै वेदाश्च प्रहिणोति तस्मै (श्वे० उ० ६।१८)। पराशरस्मृतिरपि—

**न कश्चिद् वेदकर्ता स्याद् वेदस्मर्ता चतुर्मुखः।**
**वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुमः॥ -१।२१**

आदौ ब्रह्मणा वेदग्रहणानन्तरं य ऋषि. यादृशी तपस्या कुरुते तस्य समा तदनुरूप एव वेदस्याश प्रादुर्भवति। तत स ऋषि स्वशिष्यं वेदं शिक्षयति, सोऽपि स्वं शिष्यं शिक्षयतीत्येवं शिष्यप्रशिष्यतच्छिष्याणामविच्छिन्नया गुरुशिष्यपरम्परया अद्यत्वेऽपि वेदाना प्रचार प्रसारश्च बोभवीतितमाम्।[1]

वेदा न केनापि पुरुषेण प्रणीता सन्ति, अतस्तेऽपौरुषेया प्रोच्यन्ते अपौरुषेयं वाक्यं वेद इति मीमासका, पुरुषे हि भ्रम प्रमादो

---

१. (क) ऋषीणा ताप्यता तेषा तपः परमदुर्लभम्।
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य च॥
(मत्स्यपुराणे १४४।६२)

(ख) त एते ऋषयो वेद स्वं स्वं व्यसन्ननेकधा।
शिष्यैः प्रशिष्यै. तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्॥
(श्रीमद्भागवते १।४।२३)

(ग) युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥ (वेदचयने २)

(घ) भर्तृहरिरप्याह वाक्यपदीये—
प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः।
एकोऽप्यनेकवर्त्मेवसमाम्नातः पृथक् पृथक्॥ (२।१९)

विप्रलिप्सा करणापाटवञ्चेति दोषचतुष्टयं सम्भाव्यते। अतो वेदस्यापौरुषेयत्वादेव तत्र पूर्वोक्तदोषचातुर्विध्यस्य नेषदपि प्रसक्तिरस्ति, अपि च तेषा नित्यत्वं सिध्यति।

ईश्वरनि.श्वासवद् अबुद्धिपूर्वकोत्पन्नवेदवद् बुद्धिपूर्वकनिर्मित-शास्त्राणा प्राबल्यं नहि मन्तुं शक्यते, यतो हि वेदानामबुद्धिपूर्वको-त्पन्नत्वादपौरुषेयता विद्यते। अन्येषु शास्त्रेषु नेदं सम्भवति, तानि हि बुद्धिप्रभवत्वात् सम्भावितैर्भ्रमादिभि. पुरुषाश्रितैर्दोषैर्दूषितानि भवितुमर्हन्ति। तस्मादत्र वेदे न भ्रमप्रमादादीना दोषाणा कापि सम्भावना विद्यते। वेदा एव सर्वश्रेष्ठानि निर्भ्रान्तज्ञानसाधनानि। सन्ति। अपौरुषेयत्वादेव वेदा समस्तपुन्दोषशङ्काकलङ्कपङ्करहिता मन्यन्ते। वेदानामभ्रान्तत्वात्तद्विज्ञ नमपि सर्वाङ्गपूर्णमभ्रान्तञ्च विद्यते।

पुरा द्विजबालका उपनयनसंस्कारानन्तरं ब्रह्मचर्यपूर्वकं चिरकालं गुरुगृहे उषित्वा वेदान् अभ्यस्यन्ति स्म। ततो वेदार्थमवगन्तुं शिक्षा-कल्प-व्याकरण-निरुक्त-ज्यौतिषच्छन्दसा षण्णा शास्त्राणामध्ययनं कुर्वन्ति स्म। एवं महता परिश्रमेण वेदाना वास्तविकोऽर्थोऽवगम्यते। तथा च निष्कामभावनापूर्वकं वैदिकाना कर्मणामनुष्ठानेन यदा अन्त-करणं निर्मलं भवति तदैव निर्मले मनसि वास्तविकं ब्रह्मज्ञानं सम्भवति। एतदभिप्रेत्यैवोक्तम् पातञ्जले महाभाष्ये पस्पशाह्निके—"ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च।"

एवञ्च भगवत श्रीमन्नारायणस्यादिपुरुषस्य नाभिकमलोद्भवेन चतुर्मुखेन ब्रह्मणा नारायणोपदिष्टा वेदविद्या स्मारं स्मारमृषिभ्य: सा प्रादायि। ते च तप.पूतान्तःकरणा. शिष्यानध्यापयन् ते च स्वशिष्य-परम्परया लोके वेदान् प्रसारयामासु, प्रचारयामासुश्च। तथा च ब्राह्मणादिचातुवर्ण्यस्य ब्रह्मचर्यादिचतुराश्रमकदम्बस्य च निखिला अपि कार्यकलापा वेदेभ्य एव सम्पादिता.। अतो देवपितृमानवानां हव्यकव्यान्नदानेषु वेदाना नेत्रत्वप्रतिपादनपूर्वकमेषा महत्त्वमपि सम्यगभिहितं मनुस्मृतौ—

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।**
**अतर्क्यञ्चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः ॥१२।९४**

तस्मादिमे वेदा परमपुरुषार्थसाधनहेतव. परमनिःश्रेयससम्पादकाश्च द्विजातीनामिति निर्विवादम् । अतो वेदशास्त्राभ्यासशालिनं ब्रह्मोचितकर्मकारिणञ्च द्विजोत्तमं न स्पृशन्ति महापातकराशयोऽपि जातुचित् निर्मलकमलदलमिव तोयराशय । भगवता मनुनापि मनुस्मतौ तप पुरःसरं वेदाभ्यास एव ब्राह्मणाना कृते प्रकृष्टं तपः प्रोक्तमस्ति ।[१]

एवं नित्यं नित्यकृत्यावसरे श्रेयोहेतुतया प्रणव-गायत्र्यादिजपपूर्वकं वेदस्यानलसं यथा स्यात्तथा स्वाध्यायं द्विजातीना श्रेष्ठतमं धर्म मन्वादयो महर्षयो मन्वते। इतोऽन्य उपधर्मोऽपकृष्टो वा धर्मो मुनिभिरुच्यते ।[२]

अपि च सकलशास्त्रविज्ञानामपि वेदानुशीलनहीनाना ब्राह्मणाना वचनस्याग्राह्यत्वमश्रद्धेयत्वञ्च प्रतिपादितम् ।[३]

वेदानामनभ्यासपुरस्सरमन्यासच्छास्त्राभ्यासश्रमिणा द्विजातीना शास्त्रेषु निन्दापि श्रूयते, न स ब्राह्मण उपदेष्टुमर्हति यो हि वेदानतिक्रम्यान्येषु केषुचिच्छास्त्रेषु कालक्षेपं विदधाति। न केवलं गर्हणीय एव स यो वेदमपहायान्यत्राचरति श्रमम्, प्रत्युत सान्वयो जीवन्नेव शूद्रत्वं प्राप्नोति। वेदाभ्यासेन सर्वमपि कामनाकदम्बकमनायासेन साधितं भवतीति न केवलं वचोवैलक्षण्यमात्रमपि तु शास्त्रकारैः सम्यगभ्यस्यानुभूय च सध्रीचीनेन ज्ञानेनोट्टङ्कितम्— "यं यं कामयते कामं तं तं वेदेन साधयेत् ।" इत्थं सर्वशास्त्रसिद्धान्तसिद्धं वेदस्योपादेयत्वं ब्राह्मणाना सकलशास्त्रसम्मतम् ।

---

१ वेदमेव सदाभ्यसेत् तपस्तप्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ = २।१६६

२. वेदमेवाभ्यसेन्नित्य यथाकालमतन्द्रितः ।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥ = ४।१४७

३. वेदाभ्यासविहीनस्य शास्त्राभ्यासरतस्य च ।
न तस्य वचनं ग्राह्यमश्रद्धेयः स उच्यते ॥ = ६।५७

तस्माद्वेदाभ्यासस्यैवापूर्वबोधकत्वेन सर्वविधधर्मसम्पादनसधानत्वे-नात्मज्ञानोद्बोधकत्वेन च परमात्मसाक्षात्कारद्वारा मोक्षहेतुत्वमिति साधीयानस्ति पन्था: ।

व्यासवाल्मीकिप्रभृतयो महर्षयोऽलौकिक तपस्या कृत्वा परमात्मनोऽनुकम्पया वेदाना यथार्थमर्थं ज्ञात्वा तत्प्रचारस्यावश्यकतामनुभूतवन्तो यत् साधारणजना अधिकसमयपर्यन्तं गुरुगृहे स्थातुं न शक्नुवन्ति, नापि वेदार्थमवगन्तुं सब्रह्मचय तादृशं कठिनं परिश्रमं कर्तुं प्रभवन्ति । अत· तादृशाना जनाना कृते वेदाना निगूढमर्थ सम्यगवगन्तुं ते सरसाया सुबोधाया सरलाया सुरुचिपूर्णायाञ्च संस्कृतभाषाया रामायणं महाभारतं पुराणानि च व्यरचयन् ।

अत: त्रिभिरेभी. रामायणेन महाभारतेन पुराणैश्च वेदाना यथार्थमर्थमवगन्तुं यत्नो विधेय: ।[1] एवञ्च वेदेषु ये विषया सूक्ष्मरूपेण प्रतिपादिता· सन्ति त एव पुराणेतिहासेषु विस्तृतरूपेण प्रपञ्चिता. सन्ति । ये च पुराणादीनामध्ययनं विना वेदानामर्थमवगन्तुं चेष्टन्ते, तेषा वास्तविकं वेदार्थज्ञानमसम्भवं प्रतिभाति । यतो हि एकस्यैवाखण्डस्य सार्वजनीनस्य धर्मस्य निखिललोककल्याणकारिण्या भारतीयसंस्कृतेश्च परिपुष्ट्ये वेदा रामायणं महाभारतं पुराणानि च प्रवर्तन्ते । अत एव पौराणिकमहत्त्वप्रतिपादने सोपष्टम्भं पुराणानामुद्घोषोऽस्ति— 'यद् यो द्विज. साङ्गान् सोपनिषदश्चतुरो वेदान् जानाति, किन्तु यदि स पुराणं सम्यक् न जानाति तर्हि स विचक्षणो भवितुं नार्हति ।[2]

---

१. इतिहासपुराणाभ्या वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥

( म० भा० आदिपर्वणि १।२६८ )

२ यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चेत्पुराणं सविद्यान्नैव स स्याद् विचक्षणः ॥ = प० पु० सृ० ख० २।५१
स्कन्दपुराणस्य रेवाखण्डेऽपि

यो न वेद पुराणानि स वेदात्र न किञ्चन ।
कतमः स हि धर्मोऽस्ति किंवा ज्ञानं तथाविधम् ॥ = १।१९

यदा भूमण्डलस्य समस्ता जातयो भोजनपानशयनसन्तानोत्पादनातिरिक्तं किमपि न जानन्ति स्म तस्मिन् घोरान्धकारसमयेऽपि सभ्यताया ज्योति प्रज्वालका आर्याणा वेदा एव सन्ति । देशीया विदेशीयाश्च सर्वे विद्वांस एकेन स्वरेण स्वीकुर्वन्ति यद् ऋग्वेदात् पूर्व किमपि पुस्तकं विश्वस्य समक्षे नेदानी यावदुपलब्धं विद्यते। ऋग्वेद एव सर्वप्राचीनं पुस्तकमस्ति । विश्वस्य ज्ञानिनो विज्ञानिनश्चाद्य यावद् यत् किमपि अन्वेषणं कृतवन्त तत्सर्व वेदे सूक्ष्मरूपेण विद्यत एव। तेषामेव वेदार्थाना सुगमतया सविस्तरं ज्ञानाय पुराणानामाविर्भावोऽभवत् ।

आदिदेवो हि नारायणो द्वापरे पराशरात् सत्यवत्या व्यासरूपेणावतीर्य पुराणानि रचयाञ्चकार।[1] तथा च वेदस्यानेकशाखाभिरनेकवर्त्मतया गूढार्थतया च ततो नैव सर्वेषा जनाना यथावद् ज्ञानं सुशकमिति भगवता वेदव्यासेन सुगमतया वेदानुगततत्तदर्थाभिधायकानि अष्टादश पुराणानि उपनिबद्धानीति भाव ।

वेदे गूढतया वर्णितानामर्थाना यावत् सुरुचिपूर्णया शैल्या वर्णनं न क्रियेत, तावत् पुराणाना निर्माणस्य प्रयोजनं पूर्ण न भवितुमर्हेत् । अत एव आख्यानोपाख्यानगाथाकल्पशुद्धयादिभिस्तेषा वेदार्थाना विस्तारं पुराणद्वारा कृतवान् पुराणतत्त्वनिपुणो भगवान् व्यासदेव.।[2]

वेदविज्ञानस्य मनोरञ्जकेषु आख्यानादिषु परिणतीकरण पुराणानामपूर्वं कौशलं विद्यते। वेदाना वास्तविकं रहस्यमवगन्तुं प्राचीनाख्यानोपाख्यानादिवर्णनव्याजेन विविधानुपदेशान् दातुं विभिन्नाना विषयाणामुत्कटलालसा परिहायान्त करणं भगवदुन्मुखं विधात् च यासामैतिहासिक-

---

१. विस्ताराय च वेदाना स्वयं नारायणः प्रभुः ।
व्यासरूपेण कृतवान् पुराणानि महीतले ।।
(ब्रह्मपुराणे १।१५)

२ आख्यानैश्चाप्युपाख्यानैः गाथाभिः कल्पशुद्धिभि ।
पुराणसहितां चक्रे पुराणार्थविशारदः ।।
(विष्णुपुराणे ३।६।१५)

घटनानामुल्लेख आवश्यकोऽस्ति, पुराणेषु तासामेव विशेषत. वर्णनं विद्यते। सर्वासा पौराणिकीना कथाना मूलं वेदा एव विद्यन्ते। पुराणेषु यत्किमपि लिखितं वर्तते तत्सर्वं वेदमन्त्राणा विस्तृता व्याख्याऽस्ति। यथा— "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" (ऋग्वेदे १।१२।२७) इत्यादिना वर्णितवामनावतारकथा वामनादिपुराणेषु विस्तरेण वर्णिता विद्यते। कस्या अपि आख्यायिकायास्सविस्तरं वर्णनं वेदस्योद्देश्यन्नास्ति, किन्तु वेदे कस्मिश्चिदुद्देशे या कथातिसक्षेपेण निर्दिष्टाऽस्ति सैव पुराणेषु विस्तृताख्यायिकारूपेण वर्णिता विद्यते। यतो हि साधारणेषु मनुष्येषु कौतूहलपूर्वकं भगवद्भक्त्युत्पादनं पौराणिकीनामाख्यायिकाना प्रमुखं लक्ष्यमस्ति। यथा शिवपुराणश्रीमद्भागवतादिपुराणेषु जगन्मातु. गिरिराजकुमार्या भगवत्या. पार्वत्या उमारूपेण जन्मग्रहणकथा दृश्यते। केनोपनिषदि च ब्रह्मविद्याया हैमवत्या उमारूपेण प्राकट्यं प्रतिपादित-मस्ति। तद् यथा— "स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमाना-मुमा हैमवतीम् ता होवाच किमेतद् यक्षमिति।"[१] यथा वा अथर्ववेदे[२] महाराजस्य पृथोः पृथ्वीदोहनं संक्षेपेण वर्णितमस्ति, परं श्रीमद्भागवते तदेव सविस्तरं वर्णितं विद्यते। यतो हि वेदा नोपाख्यानमूलका सन्ति। अत तेषु स्थलविशेषे एवोदाहरणरूपेणोपाख्यानमस्ति, किन्तु पुराणेषू-पाख्यानानामेकत्र समावेशो जातोऽस्ति। अत एव पुराणेषूपाख्याना-नामाधिक्यं विस्तारश्च दृश्यते। वेदा· पुराणानि चैकस्य सनातनधर्मस्या-भिवृद्धये लोककल्याणाय च विभिन्नकाले आविर्भूता महाग्रन्था मन्यन्ते। विषयदृष्ट्या पुराणेषु वेदात् किमपि पार्थक्यं नास्ति। यदि भिन्नता समुपलभ्यते तर्हि उभयोर्वर्णनपद्धतावेव। पुराणाना वेदमूलकत्वादेव स्कन्दपुराणे प्रोक्तमस्ति यद् वेदे यन्निर्दिष्टं वर्तते तत्तत्स्मृतिषु अप्युपदिष्टं विद्यते, उभाभ्या यत् प्रतिपादितमस्ति तदेव पुराणेष्वपि सदृष्टान्तं विस्तरतो गीतमस्ति।[३] तस्माद् वेदार्थाना विवरणाद्वेदपुराणयोरैक्यं निर्बाधं सिध्यति।

---

१ के० उ० ३ ११ २ अ० वे० ३।४।५।

३ यच्च दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल।
उभाभ्या यत्तु दृष्टं हि तत् पुराणेषु गीयते॥ = रे० ख० १।२२

## पुराणानां महत्त्वम्

पुराणाना महत्त्वं विविधाभि दृष्टिभिरवगम्यते। धार्मिकदृष्ट्या पुराणानि वेदविहितस्यैव धर्मस्य भावगम्यया सरलया भाषया विशदं वर्णनं कुर्वन्ति पुराणाना सामाजिकं महत्त्वमपि न्यूनं नास्ति। प्राक्तनस्य समाजस्य स्वरूपमस्माभि पुराणैरेवोपलभ्यते। पौराणिकस्येतिहासस्य पुष्टिस्तु तत्रतत्रोपलब्धै· शिलालेखै वैदेशिकाना यात्रावर्णनेन चेदानी प्रचुरमात्राया बोभूयते। ऐतिहासिकदृष्ट्या च पुराणेषु तीर्थाना विशदं वर्णन विद्यते, येन तत्तत्स्थानाना विस्तृतस्य भूगोलस्य सम्यग् ज्ञानं भवति। स्कन्दपुराणस्य काशीखण्डे प्रत्येकस्थानाना शिवलिङ्गाना च विस्तृतं वर्णनं विद्यते, यत्सहयोगेन काश्या प्रसिद्धाना भूभागाना समीचीनतया ज्ञानं भवितुमर्हति।

श्रूयते—विदेशीया विद्वास पुराणाना साहाय्येनैव नीलनद्या अन्वेषणं कृतवन्त.। माननीय डा० कप्तानस्पीकेन मिश्रदेशे प्रवहनशीलाया नीलनद्या अन्वेषणं पुराणसाहाय्येनैव कृतमस्ति। पुराणे नीलनद्या उद्गमस्थानं कुशद्वीपे निर्दिष्टमस्ति। नीलनद्या अन्वेषणं कुर्वता कप्तानस्पीकेन कुशद्वीपमाधुनिकनूबिया मत्वा स्वकीयो निर्णय कृतोऽस्ति।

पुराणाना प्रमुखं प्रयोजनं वेदविहितार्थाना जनसाधारणेषु प्रचारो विद्यते। एतत्सिद्धये तै सरला सुगमा संस्कृतभाषाऽवलम्बिता। केवलं भारतवर्षे एव नहि, किन्तुभारताद्वहिर्विविधेषु देशेषु पुराणै वैदिकविचारधारायाः प्रवाहविस्तारस्य सुयशो लब्धम्। पुराणाना कृपया सर्वसाधारणा मनुष्या. स्वजीवनं संयमशीलं विधाय कल्याणमार्गप्राप्तेरधिकारं प्राप्तवन्त.। वैदिकधर्मस्य लोकप्रियत्वनिर्माणश्रेय. पुराणैरेव प्राप्तमस्ति। पुराणानि समस्ताना विद्यानामक्षया कोषाः सन्ति। अत. विविधाना दरिद्रताना लक्ष्यीभूतमपीदं भारतवर्षमद्यत्वेऽपि पुराणाना प्रभावेण धनवानिव स्वकीयं शिरो विश्वसमक्षे समुन्नतं कर्तुं समर्थमस्ति।

पुराणानि गौरवदृष्ट्या अतएव दृश्यन्ते, यदत्र वेदाना शिक्षाया. पुष्टि कृताऽस्ति दृष्टान्तद्वारा च वेदार्थानामेव विशदीकरणं विद्यते। विश्वेऽस्मिन् कस्या अपि सभ्यजाते पार्श्वे पुराणसदृश. सर्वाङ्गपूर्णो न कोऽपि ग्रन्थो विद्यते। पुराणेषु वेदार्थाना स्पष्टीकरणेन सह कथावैचित्र्यद्वारा गूणाद्गूढतमस्यापि तत्त्वस्य साधारणजनाना हृदयङ्गमसम्पादनवैशिष्ट्यमस्ति।

वर्तमाने युगे धर्मरक्षाया , वर्णाश्रमव्यवस्थाप्रचारस्य, भारतीयाया: संस्कृतेरुद्बोधस्य, भक्तेर्विकासस्य च यद्दर्शनं बोभवीति, तस्य श्रेय पुराणानामेवास्ति । पुराणैरेव भारतीयादर्शजीवनस्य, भारतीयाया सभ्यताया: संस्कृते:, विद्याया वैभवस्य, भारतीयाना ज्ञानगरिम्ण , उत्कर्षस्य च वास्तविकं ज्ञानं भवति । प्राचीनकाले भारतीया आधिभौतिकाधिदैविकाध्यात्मिकीनामुन्नतीना चरमं सीमानमुपगता आसन्, एतस्य संकेत: पुराणद्वारा एवानुभूयते । अत एतन्नि संशयं वक्तुं शक्यते यत् पुराणानि बद्धाना मुमुक्षूणा जीवन्मुक्ताना च मनुष्याणा सन्मार्गप्रदर्शकानि ग्रन्थरत्नानि सन्ति ।

वेदे सूक्ष्मरूपेण यन्निर्दिष्टमस्ति तस्यैव विस्तृता व्याख्या व्यासदेवेन भाष्यरूपेण महाभारते पुराणेषु च कृताऽस्ति । अत· स्वयं तेनैव महाभारते संकेत कृतोऽस्ति यत् "इतिहासपुराणाभ्या वेदं समुपवृंहयेत् ।" अद्यत्वे यद्यपि वेदाना सर्वा शाखा नोपलभ्यन्ते तथापि दिव्यज्ञान- सम्पन्न. त्रिकालदर्शी महर्षिर्वेदव्यास तासा मूलविषयं पुराणेषु यत्र तत्राङ्कितवानस्ति, येनाद्यापि बहूना वेदशाखानामनुपलब्धावपि तासा प्रतिपाद्यविषयाणामवगाहनं क्रियते एव । एवं वेद-वेदाङ्ग-दर्शन-भूगोल-खगोल-वास्तुविद्या-शिल्पविद्या-रत्नपरीक्षादिविद्याना विवरणात्मकप्रसङ्गोपस्थापने पुराणाना महन्महत्त्वं गौरवं च विद्यते । वेदे पुराणस्याप्युल्लेखो विद्यते, तथा पुराणं पञ्चमो वेदो मन्यते, यथा—"एवं वा ह्यरे अस्य महतो भूतस्य नि श्वसित मृग्वेदो यजुर्वेद. सामवेदोऽथर्वाङ्गिरस इतिहास· पुराणं विद्या उपनिषद" ( वृ० उ० २।४।१० ); यथा वा—"स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वाणं चतुर्थमितिहासं पुराणं पञ्चमं वेदाना वेदम्" ( छ० उ० ७।१।२ ) । अत: वेदाना प्रामाण्ये पुराणानामपि प्रामाण्यं स्वीकृतमेव भवति । यथा ब्रह्मण सकाशात् तपसा पवित्रान्त:करणाना महर्षीणा निर्मले हृदये वेदानामाविर्भावो जात:, तथैव ईश्वरानुग्रहेण तेषामेव महर्षीणा मन सु पुराणानामपि प्रादुर्भावोऽजायत ।

संस्कृतसाहित्ये पुराणाना स्थानं महदुन्नतमस्ति । यतो वेदानन्तरं सर्वमान्यानि सर्वप्राचीनानि च पुराणान्येव सन्ति । सृष्ट्यादौ "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाश्च प्रहिणोति तस्मै (श्वे०उ०६।१८) इत्यनुसारं

प्रथमं ब्रह्माणमुत्पाद्य परमेश्वर. वेदज्ञानमेव तस्मै उपदिशति । ततो भगवतो वेदज्ञानमुपलभ्यब्रह्मा यान्यन्यानि शास्त्राणि स्मरति। तत्र सर्वप्रथम पुराणान्येव स्मरति । तथाचोक्तं पद्मपुराणे सृष्टिखण्डे, (१।४५) स्कन्दपुराणस्य रेवाखण्डे (उ० १।२४) तथा मत्स्यपुराणे च—

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।**
**अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।। (५३।३)**

अतो वेदवत्पुराणान्यपि नित्यानि सनातनानि अपौरुषेयाणि सिध्यन्ति । अतएव भगवत्पूज्यपादै श्रीशङ्कराचार्यमहोदयै. बृहदारण्यकभाष्ये स्पष्टमुक्तम्—"निःश्वसितमिव नि श्वसितं यथा अप्रयत्नेनैव पुरुषनि.श्वासो भवति एवं पुराणम्" । महर्षिणा वात्स्यायनेन च स्वकीये न्यायदर्शनभाष्ये–"य एव मन्त्रब्राह्मणस्य द्रष्टार प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति विषयव्यवस्थापनाच्च प्रमाणम्। यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य च विषय ।" अलौकिकयोगबलेन समस्तं विश्वं हस्तामलकवत्पश्यद्भि. पूज्यपादै श्रीपतञ्जलिमुनिभिरपि स्वकीये पाणिनीयव्याकरणमहाभाष्ये पशपशाह्निके "वाकोवाक्यमितिहास पुराणम्" इति वदद्भिः पराणानां प्रामाण्यं स्पष्टमेव स्वीकृतमस्ति ।

## पुराणानामध्ययनस्यावश्यकता

वेदेषु येषामाध्यात्मिकाधिदैविकाधिभौतिकबौद्धिकव्यावहारिकनैतिकसास्कृतिकदेवमानुषजडचेतनात्मकाना विषयाणा सूक्ष्मरूपेण विधानं विद्यते, ब्राह्मणभागे, आरण्यके, स्मृतिग्रन्थेषु च येषा प्रतिपादनमस्ति, तेषा सर्वप्रकाराणा पुराणेषु आकर्षकबुद्धिगम्यमनोग्राह्योपदेशप्रदकथानकरूपेण वर्णनं कृतमस्ति । पुराणेषु न केवलमाचारव्यवहारदैनिकक्रियामात्रस्योल्लेखोऽस्ति, किन्तु मानवजीवनोपयोगिनीना विविधाना भावनाना पूर्णं विवेचनं विद्यते । अत पुरणानामध्ययनेन वेदार्थनिधोनामुपलब्धिर्भवितुमर्हति । पुराणाध्ययनं विना यथार्थज्ञानं मानवीयजिज्ञासाया पूर्तिश्च न सम्भवति । पुरणेषु मानवोपयोगिना समस्तज्ञान क्षेत्राणा समावेश उपलभ्यते तदुक्तं स्कन्दपुराणे—

पुराणमखिलं तात सर्वशास्त्रमयं स्मृतम् (७।१ २४) पद्मपुराणे तु स्पष्टमुल्लिखितं विद्यते यद् येन पुंसा वेदस्यान्यशास्त्राणाञ्चाध्ययन कृतं, किन्तु यदि पुराणानामनुशीलनं न विहितं तर्हि तेनोत्तमं ज्ञानं प्राप्तुं न शक्यते[1]। यद्यपि महर्षिणा व्यासदेवेन ब्रह्मसूत्रे योगभाष्ये महाभारते च प्रतिपाद्याध्यात्मनिष्ठाद्वारा त्रितापान्मुक्तये सरल उपाय· प्रदर्शितोऽस्ति, तथापि ज्ञाननिष्ठाया. पूर्ण· परिपाकस्तु पुराणेष्वेव जातोऽस्ति।

पुराणाना कथाभि. सरलतया सर्व साधनं शीघ्रं बुद्धिगम्यं कर्तुं शक्यते। यथा यजुर्वेदस्य ईशावास्यमन्त्रे मनुष्यताया पूर्णविकास्य साधन निर्दिष्टमस्ति, किन्तु केवलेन मन्त्रपाठेनार्थज्ञानेन वा सा भावना हृदये न जागर्ति। अत. पुराणप्रतिपादिताभि महर्षेर्दधीचेः, राज्ञ शिवे. मोरध्वजस्य च कथाभिरुपकारभावना, सत्यवादिनो हरिश्चन्द्रस्य महाराजस्य युधिष्ठिरस्य चोपाख्यानेन सत्यनिष्ठा, दानवीरस्य बले कर्णस्य च कथानकेन दाननिष्ठा, वसिष्ठागस्त्यच्यवनादीनां कृत्यैरद्रोहनिष्ठा, अनसूया-सती-सीता-सावित्री-मदालसा–दमयन्ती–नर्मदा–सुकन्या–सुलोचनादीना सतीना पवित्राचरणै· पातिव्रत्यधर्मपरायणतायाः सञ्चारः नरेषु नारीषु च सहसा भवति। एवं "सत्यं वद, धर्मं चर" इत्याद्युपदेशमात्रेण कश्चित्सत्यवादी धर्मात्मा वा भवितुं नार्हति। अतो वेदवाक्यबोधितामितिकर्तव्यता पुराणेषु कथानकरूपेण मनोग्राह्या विधातुम् ऐहलौकिकं पारलौकिकं च जीवनं सफलयितुमादेशो दत्तोऽस्ति।

प्रधानतया पुराणेषु—सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितेति-पञ्चलक्षणमादाय मानवजीवनस्य चरमलक्ष्यभूतान् परमपुरुषार्थान् धर्मार्थकाममोक्षान् प्राप्तुमैतिहासिककथानामाधारेण प्रभावपूर्णपद्धतौ ज्ञानविज्ञानयो विस्तार· प्रदर्शितोऽस्ति। पुराणेषु यावत् सुगमं चतुर्वर्गस्य सिद्धे साधनमुपलभ्यते न तावदन्यत्र क्वचन प्राप्यते। महर्षिणा व्यासेन अष्टादशपुराणेषु सर्वेषा धर्माणा सारः परोपकारः पुण्यम्, परपीडनं च महत्पापं निर्दिष्टमस्ति। अयं मानवताया कीदृग्

---

१. बहुशास्त्रं समभ्यस्य बहून् वेदान् सविस्तरम्।
पुंसोऽश्रुतपुराणस्य न सम्यग्याति दर्शनम्॥ ४।१०५।१३

महान् मौलिक आदर्शोऽस्ति। तथाचोक्तमालोचकै —

**अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।**
**परोपकारः पुण्याय पापाय परपीडनम्॥**

पुराणेषु दृढनिष्ठाया अन्वेषणे मर्यादापुरुषोत्तमस्य भगवतो रामस्यादर्शचरित्रेण, तस्य विशिष्टेन जीवनेन मर्यादापालनेन च महती हृदयग्राहिणी शिक्षा प्राप्यते। जनमतमादृत्य स स्वकीया परमप्रियां सर्वगुणसम्पन्ना सुखदु.खसहचारिणी धर्मपत्नी साध्वी सती सीतामासन्नप्रसवामपि परितत्याज। पैतृकस्यानुशासनस्यादर्शं स्थापयितुं चक्रवर्तिसाम्राज्यपदं सहर्षं त्यक्तवान्। अत्याचारस्यान्तं कर्तुं दुराचारिणोऽधिनायकवादिनो रावणस्य च सकुलोन्मूलनं कृतवान्। यादृशो नैतिक. सामाजिक· चारित्रिक: धार्मिको व्यावहारिकश्चादर्शो रामस्य पवित्रे चरित्रे प्राप्यते, तादृशोऽखिले भूमण्डले कस्याञ्चिदपि सभ्यताया नोपलभ्यते। रामराज्ये शासनव्यवस्थाया विवरणं महर्षिणा व्यासदेवेन महाभारते एवं प्रदर्शितमास्ते—

**न पुत्रमरणं केचिद्रामे राज्यं प्रशासति।**

पद्मपुराणस्य पातालखण्डे (५।२२-२३) तु

**यस्मिञ्छासति लोकानां नाकालमरणं नृणाम्।**
**न रोगादिपराभूतिर्गृहेषु च महीयसी।**
**नेतिः कदापि दृश्येत वैरिजं भयमेव च।**
**वृक्षाः सदैव फलिनो मही भूयिष्ठधान्यका॥**
**पुत्र-पौत्र-परिवार-सनाथीकृतजीवना:॥**

बाल्मीकिमुनिना रामायणेऽपि (१।१।९१-९३) प्रोक्तम्

**न पुत्रमरणं केचिद् द्रक्ष्यन्ति पुरुषाः क्वचित्।**
**नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः॥**
**न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः।**
**न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा॥**

**न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।**
**नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥**
**नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ।**

अपिच श्रीरामस्य राज्ये समये समये सुवृष्टि भवतिस्म, सर्वदा सुकालो वर्ततेस्म, न कदापि अकाल उपतिष्ठतेस्म, सर्वा दिश प्रसन्ना आसन् तथा नगर-जनपदादयो हृष्टपुष्टारोगैर्मानवै परिपूर्णा आसन् । श्रीरामस्य शासनकाले न कस्याप्यकाले मृत्युर्भवतिस्म, नापि केपाञ्चित् प्राणिना कश्चिद्रोग उद्भवतिस्म, न वा क्वचिदुपद्रवो जायतेस्म । अर्थात् सर्वविधकुशलिन प्रसन्नाश्च जना आसन्—

**काले वर्षति पर्जन्यः सुभिक्षं विमला दिशः ।**
**हृष्ट-पुष्ट-जनाकीर्णं पुरं जनपदस्तथा ॥**
**नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा ।**
**नानर्थो विद्यते कश्चिद् रामे राज्यं प्रशासति[1] ॥**

एवं श्रीरामराज्ये न कश्चिदुपद्रव आसीत् । सात्त्विकस्यानुशासनस्यायमेवादर्शोऽस्ति । एवं मार्कण्डेयमुने. जीवनेन दीर्घायुष , राज्ञो दिलीपस्य पवित्रेण चरित्रेण गोभक्तेरादर्श. पुराणेष्वेव प्राप्यते । सर्वजीवेषु दयादर्शिन. कस्य देशस्य साहित्ये एवंविधमुदाहरण दृश्यते, यच् चक्रवर्ती सम्राडपि एकस्या गो. रक्षणार्थ स्वकीयं शरीरं मासपिण्डमिव गोघातिने क्रूराय सिहाय समर्पयेत् ।

पुराणेषु सर्वेषामास्तिकदर्शनाना सिद्धान्तस्य सूत्ररूपेण निरूपणमस्ति । साख्ययोगवेदान्तदर्शनाना तु पुराणेषु विशेषतो विवेचनमुपलभ्यते । किञ्च व्याकरणसाहित्यच्छन्दोज्यौतिषनिरुक्तशिक्षाकल्पायुर्वेदधनुर्वेदगन्धर्ववेदस्थापत्यवेदराजनीतिसमाजनीतिविविधधर्माज्ञादिषु विषयेष्वपि पुराणेषु पर्याप्त. प्रकाश. प्राप्यते । अतएव पुराणानि भारतायसंस्कृते. विश्वकोषा उच्यन्ते । लौकिकविषयातिरिक्तं पुराणेषु पारलौकिक-

---

१ वा० रा० उ० का० ९९।१३-१४

विषयाणामपि प्रचुरं विवेचनं कृतमस्ति। आधुनिका वैज्ञानिका बहुना व्यापारेण मङ्गललोकस्य चन्द्रधरातलस्य च किञ्चिद् ज्ञानं प्राप्तवन्त, परन्तु अस्मिन् विषये तेषा ज्ञानमिदानी यावद् अपूर्णमेवास्ति। यतो हि नाधुनापर्यन्तं तेषा ज्ञानं जातमस्ति यदित परमपि कश्चित्सूक्ष्म स्तरो- विद्यते। पुराणेषूर्ध्वमधश्च स्थिताना चतुर्दशाना लोकाना तत्रत्य- निवासिना तेषामायुष, आहारस्य, विहारस्य, व्यवहारस्य, तत्र प्रचलितस्य कालमानस्य च निश्चितं वर्णनं वर्तते। येनेदं ज्ञायते यदस्माकं पूर्वजाना महर्षीणा ज्ञानं कियदतिनिर्मलं विस्तृतं बहुज्ञतापूर्णञ्चासीत्।

मानवजन्मन प्रधानं लक्ष्यं भगवत्प्राप्तिरस्ति, तत्साधनानि च पुरा- णानि सन्ति। निष्कामकर्मद्वारा त्यागवृत्तिग्रहणपूर्वकं स्वर्गापवर्गयोः मार्गस्य सुलभानि साधनानि पुराणान्येव सन्ति। पुराणानि सर्वसाधन- योगक्रियासिद्धितन्त्रमन्त्रकल्याणकारिभि. सिद्धान्तै परिपूर्णानि सन्ति। अत एव सर्वशास्त्रेषु पुराणाना गौरवं गीतमस्ति।

पुराणेषु ज्ञानस्य कर्मण. भक्तेश्च महत्त्वपूर्णवर्णनेन सह मानवजीव- नस्य यावत्यो दृष्टय. सन्ति तासा सर्वासा दृष्टीना वर्णनं वर्तते। पुराणद्वारा आबालवृद्धा नरा नार्यश्च समानं लाभं प्राप्तुं शक्नुवन्ति। पुराणानि भवरोगस्याद्भुतानि औषधानि सन्ति। संसारस्य सर्वासां समस्याना सरलतया सुगमीकरणसाधनै· सम्पन्नानि पुराणानि भगवतो व्यासदेवस्य कृपाया फलानि सन्ति। पुराणानि सासारिकत्रितापतप्तानां प्राणिना प्रबोधम्, अज्ञानान्धकारे निपतितानां प्रकाशम्, भ्रान्ताना सन्मा- र्गम्, निराशानामाशाज्योति., शोकसन्तप्तानामुल्लासमयं प्रसादम्, पथभ्र- ष्टाना कर्तव्यज्ञानम्, पापिना पापनाशनसाधनम्, नीतिविशारदाना नीति- नैपुण्यम्, निष्कर्मिणा साधनोपदेशम्, भक्ताना भक्तिभावम्, ज्ञानिनाम- लौकिकज्ञानस्य प्रकाशं च ददति। तात्पर्यमिदमस्ति यद् ये जिज्ञासवो येनोद्देशेन पुराणेषु सविश्वासं श्रद्दधति भक्तिभावेन च पुराणानां स्वाध्यायं कुर्वन्ति, ते समुद्रादमूल्यं रत्नमिव एभ्य उभयलोककल्याण- कारिणं बहुमूल्यं सदुपदेशं प्राप्य स्वं जीवनं सफलयितुं समर्था भवन्ति।

पुराणानि त्रिकालेषूपयोगीनि सन्ति। तानि अतीतगौरवगानेन सह वर्तमानकाले सुखशान्तिसञ्चारं सम्पाद्य भविष्यत्कालाय मुक्ति- सन्देशं ददति। यतो हि पुराणानि सर्वश्रेणिमनुष्येभ्य. तदधिकारानुसारं

कर्म कर्तु सन्मार्गसाधनस्योपायं प्रदर्शयन्ति। अभ्युदयस्य नि श्रेयसस्य च सिद्धये जीव कथमग्रेसरो भवितुमर्हतीत्यस्य विषयस्य पुराणेषु विशदं वर्णनं विद्यते। पुराणेषु सृष्टिकालत आरभ्यैकस्याविच्छिन्नक्रमस्य हृदयङ्गमस्याख्यानस्योपलब्धिर्भवति। अत पुराणानि सर्वतोमुख्या उन्नतेः अभ्युदयनि·श्रेयसयो. साधनस्य चाक्षयो भाण्डागारो वर्तते।

पुराणेषु ज्ञान-कर्म-वैराग्य-भक्ति-विश्वास-यज्ञ-दान-तपो-यम-नियम-संयम-सेवा-दया-दाक्षिण्य–वर्णाश्रमधर्म–पुरुषधर्म–स्त्रीधर्म-सदाचारावतारादीना कल्याणकारिण सदुपदेशा. सरसया सुगमया सुरुचिपूर्णया उपादेयया च भाषया लिखिता सन्ति। एतदतिरिक्तं भूगोल-खगोलयो विवेचनं स्थावरजङ्गमयो सृष्टेश्च सूक्ष्मं वर्णनं विद्यते। पुराणेषु प्रदत्तेषु भूविवरण-प्रसङ्गेषु विविधसिद्धपीठतीर्थक्षेत्रवनपर्वतादीना वर्णनमस्ति, येनाधुनिकानामनुसन्धानकर्तॄणा महत्साहाय्यं प्राप्यते। एवं प्रकारेण सर्वोपयोगिना पुराणानामध्ययनस्य महती आवश्यकताऽनुभूयते।

## वेदपुराणयोः पार्थक्यम्

यद्यपि पुराणेषु वेदविहितानामेव विषयाणा विशदीकरणस्य विद्यमानत्वाद् वेदपुराणयोरैक्यमस्ति, तथापि उभयो महदन्तरं विद्यते। वेदा द्विजसमुदायेषु प्रतिष्ठिता अशिक्षितासु जनतासु च अपरिचिता सन्ति, परं पुराणानि सर्वेषु नरेषु सर्वासु च नारीषु विचरन्ति, सर्वेषा मनांसि अनुरञ्जयन्ति सर्वपरिचितानि च सन्ति। पुराणाना कृपया एव वेदा विश्ववर्तिना सर्वविधाना नराणा नारीणा च जीवनं संनियम्य चरमलक्ष्ये परमतत्त्वे विशुद्धप्रेम्णि निर्मलानन्दस्य मार्गे उत्कृष्टकल्याणं प्रवर्तयितुमधिकारं प्राप्तवन्त.। वेदेभ्य पुराणानामिदं वैशिष्ट्यं विद्यते, यत्र वेदैः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्युक्त्वा "नेति नेति" च कृत्वा य परमेश्वरो बुद्धीन्द्रियादिभिरगम्यो निर्दिष्ट, तत्र पुराणै. तं परमात्मानं सर्वसाधारणाना बुद्धीन्द्रियादेर्विषयं वर्णयित्वा सर्वसमक्षमुपस्थाप्यते सः। वेदाना 'सत्यं ज्ञानमनन्तं ब्रह्म" पुराणेषु भक्ताना कृते न केवलमाराध्यदेवस्य प्रेममयीमूर्तिरूपेण औदार्यसौन्दर्यमाधुर्यादीना निलयरूपेण चोपस्थितं भवति, किन्तु दीनबन्धु-दीनानाथ-करुणावरुणालय-पतित-पावनाशरणशरणानाथनाथादिरूपेणापि समये समये उपतिष्ठते। वेदेषु

अग्राह्यरूपेण वर्णित ब्रह्म पुराणेषु अनेकेषु रूपेषु आविर्भूय जीवमात्रस्य चाक्षुषप्रत्यक्षगोचरो भवति।

**अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।**
**स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्[1] ॥**

इत्यादावपाणिपादादिरूपेण वर्णितं वेदस्य ब्रह्म पुराणेषु—

**तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदायुदायुधम्।**
**श्रीवत्सलक्ष्मं गलशोभि कौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥**
**महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम्।**
**उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत[2] ॥**

इत्यादिना विग्रहवान् निर्दिष्टः। यत्र वेदवर्णितस्य ब्रह्मणः केवलं स्मरणमेव कर्तुं शक्यते, तत्र मनुष्याः पुराणप्रतिपादितस्य श्रीपरमेश्वरस्य सेवां स्पर्शं दर्शनं च कर्तुं पारयन्ति, तन्मुखेऽनेकविधं भोज्यपदार्थं दातुं शक्नुवन्ति तेन सह वार्तालापौ कर्तुं प्रभवन्ति, तेन सह विविधानां भावानामादानं प्रदानमपि कर्तुं पारयन्ति बहुविधं स्वकीयं मनोरथं पूरयितुं च शक्नुवन्ति। पुराणप्रपञ्चितः परमेश्वरः स्वस्माच्चिन्मयधाम्नो भूमाववतीर्य प्राणिमात्रमध्ये विचरति, तेषां कष्टं च दूरीकरोति। पुराणपरमेश्वरो वेदस्य ब्रह्मेव न केवलं ज्ञेयं ब्रह्म जीवस्य जगतश्च मूलकारणं निर्गुणं निर्विकारमद्वितीयं चित्स्वरूपमेवास्ति, किन्तु स साकाररूपेण प्रत्यक्षविषयः उपास्यः, सर्वासु अवस्थासु आश्रयणीयः, प्रेमकरुणासहानुभूतिसम्पन्नः शरणागतानां दीनानां दुःखिनां चार्तत्राणतत्परश्चास्ति।

यत्र वेदानां डिण्डिमघोषोऽस्ति यद् ब्रह्म नामरूपाभ्यां परं विद्यते तत्र पुराणानि तं सर्वनामिनं सर्वरूपिणं सर्वभावमयञ्च वदन्ति। वेदस्यैव ब्रह्म पुराणेषु असंख्यैर्नामरूपभावैः विभिन्नरूपेणात्मानं प्रकटयति। तदेव ब्रह्मा विष्णुः शिवः शक्तिः गणेशः सूर्यादिश्चास्ति, तदेव रामः

---

१. श्वे० उ० ३।१९। २. श्रीमद्भागवत १०।३।१०

कृष्णो वामनो नृसिह मत्स्यो वराहो बौद्धश्चास्ति। तदेवेन्द्र आदित्यो यमो वरुण कुवेरोऽग्निश्चास्ति । यत्र वेदेपु ब्रह्म एकमेवास्ति तत्र पुराणेपु सर्वसम्प्रदायसिद्धाना विविधाना देवाना देवीनाञ्चोपासना स्वीकृत्य सर्वेपा माहात्म्यं गौरवं च गीतमस्ति। एकमेव परमात्मानं विभिन्नसम्प्रदायानुसारं विभिन्ननामरूपभावै वर्णयद्भिः पुराणै सर्वे सम्प्रदाया एकत्वसूत्रे निबद्धा. सर्वाणि धर्ममतसाधनप्रणालीवैशिष्ट्या-दीनि चाक्षुण्णानि स्थापयद्भिस्तै तेपामान्तरिका भेदाश्च सुरक्षिता. स्थापिता सन्ति।

पुराणानुसारं सर्वे सम्प्रदाया विभिन्ननामरूपभावेपु एकस्येव विश्वात्मन उपासना कृत्वा स्वीयं जीवनं कृतार्थं कुर्वन्ति। पुराणाना प्रभावेण भारतीया धर्मजिज्ञासव तत्तत्सम्प्रदायेपु विभक्ता अपि एकस्य वैदिकस्य सनातनधर्मस्यानुसरणं कुर्वन्ति। विविधाना देवाना देवीना-ञ्चोपासका सन्तोऽपि एकस्यैवाद्वितीयस्य ब्रह्मण उपासका सन्ति। सर्व-सम्प्रदायोपासका इदं जानन्ति यद् वैष्णवा विष्णो. विभिन्नैर्नामरूपभावै: यमुपासते, तमेव शैवा. शिवस्य विभिन्ननामरूपभावै शाक्ताश्चोपासका कालीदुर्गाचण्डीभगवतीत्यादिरूपै. तमेवाराधयन्ति। तत्तत्पुराणानि तत्तन्नामरूपलीलानामाश्रयं कृत्वा एकस्यैव ब्रह्मणो विशिष्टाविर्भावस्य महिमानं कीर्तयन्ति, विभिन्नोपासकसम्प्रदायहृदयानि चावर्जयन्ति।

पुराणै सर्वातीतं ब्रह्म जडजगतो मानवसमाजमध्ये आनीय भगवता सह मनुष्याणा सर्वविधं व्यवधान दूरीकृत्य मनुष्येपु देवत्वाव-बोधो भगवत्सत्तानुभूतिश्चोद्भाविता। पुराणाना जगत् न केवलं जडजग-देवास्ति, किन्तु तत् सच्चिदानन्दघनस्य भगवतो लीलाभूमिरस्ति। भग-वान् विशुद्धेन सत्त्वमयेनालौकिकेन देहेनाविर्भूय अस्मिन् देवश्लाघ्ये भव-भीतिभञ्जनार्थसमुद्भवाभिर्भगवतीभागीरथी-कालिन्दी-सरयू-नर्मदादिभि. नदीभि परमपवित्रे भव्ये भारतभूभागे भ्रमन् सर्वत्र विशुद्धसत्त्वस्यावि-च्छिन्ना धारा प्रवाहयति। पुराणानि सर्वश्रेणीमनुष्यान् भगवत आविर्भावं लीला च दर्शयन्ति। पुराणद्वारा भारतवर्षस्यासंख्याना नगर-ग्राम-नदी-वन-पर्वत-सरोवर सागरादीना ज्ञानं भवति। पुराणेषु सर्वेषा कृते नैकमेव किमपि तीर्थं निश्चितमस्ति, किन्तु भारतवर्षस्य सर्वेपु प्रान्तेषु पवित्राणि तीर्थानि सन्ति, सर्वत्र च भगवतो लीलाऽभवत्। एवम् पुराणानि

समस्ता भारतभूमि चिन्मयस्य भगवतो लीलाधामरूपेणोपस्थापयन्ति। पुराणाना कृपया एकैकस्य भारतवर्षवासिन कृते सर्वा भारतभूमिः सत्कार्या स्नेहमयी दयामयी वात्सल्यमयी आनन्दमयी जननीव पूज्या समादरणीया रक्षणीया चास्ति। अनया दृष्ट्या भारतभूमे दर्शनस्य सेवायाश्च शिक्षादानं पुराणानामेव पवित्रं कर्तव्यमस्ति।

पुराणेषु मानवजातेरितिहासो विशेषतश्च प्राचीनस्य भारतस्येतिवृत्तं वर्णितमस्ति। तत्र कियतामुत्थान बहूना च पतनं कवित्वपूर्णभाषायामालोचितमस्ति। किन्तु अस्य वर्णनस्यान्तरिकी दृष्टि. साधारणस्येतिहासस्य दृष्टित पृथगस्ति। अत्र घटनानामुल्लेखमात्रमुद्देश्यं नास्ति, नापि च राज्ञामुत्थानपतनयोः समावेश पुराणाना प्रधानं कार्यं विद्यते। एतत्तु पुराणाना दृष्टौ भगवल्लीलाया अङ्गमात्रमस्ति। पुराणेषु सृष्टिस्थितिप्रलयाना लीलाया भगवतो न्यायकरुणाप्रेम्णा विधानस्य जीवाना कर्मकलापस्य च वैचित्र्यपूर्णेतिहासाश्रयेण वर्णनं विद्यते। मनुष्या मानवेतिहासस्य श्रवणमध्ययनं च कृत्वा तत्र भगवल्लीलाया एवास्वादं कुर्वन्त्विति मुख्यमुद्देश्यमस्ति। एवं पुराणै जगत्, जीवम्, ईश्वरञ्चैकरूपे प्रस्तुत्य समस्तस्य मानवजगत. संस्कृतिरेकस्यामुन्नततरभूमिकाया प्रतिष्ठापिता।

आध्यात्मिकसाधनाय बहूनि स्तोत्र-कवच-सहस्रनामादीनि पुराणेषूपलभ्यन्ते। यत्र वेदेषु प्रकृतेर्निरूपण विद्यते तत्र पुराणेषु अधिष्ठात्रीदेवीरूपेण प्रकृतेर्विशदीकरणं कृतमस्ति। अस्मिन्नेवाधारे महर्षिभिः स्मृतिग्रन्थेषु व्यवहारभागस्य प्राशस्त्यं गीतमस्ति। तथाच वेदवेदाङ्गपुराणस्मृत्यादयो धर्मशास्त्राणि कथ्यन्ते। एतेषा श्रवणेन मननेन निदिध्यासनेन च प्राणिमात्रस्य अवश्यं कल्याण संभवति।

## वेदपुराणयोर्वैशिष्ट्यम्

पुराणेषु वेदार्थोपबृंहणस्य पुष्टिं कुर्वता श्रीजीवगोस्वामिना स्वकीये भागवतसन्दर्भे पुराणशब्दस्य व्युत्पत्तिरेकया नवीनया दृष्ट्या कृता विद्यते। "पूरणात् पुराणम् अर्थाद् यच्छास्त्रं वेदार्थं पूरयति तत् पुराणं प्रोच्यते,। न चावेदेन वेदस्योपबृंहणं सम्भवति। नहि अपूर्णस्य कनकवलयस्य त्रपुणा पूरण युज्यते।"[१]

१. भागवत सन्दर्भ पृ० १७।

अयं सर्वानुभूतो विषयो विद्यते यद् येन यस्य पूर्तिर्भवति तत्रोभयोः समानता सम्भवति। यदि अपूर्णसुवर्णकङ्कणस्य पूर्ति कर्तुमिष्यते तर्हि सुवर्णद्वारैव पूर्णता सम्भवति, न पित्तलेन सुवर्णस्य पूर्तिर्भवितुमर्हति। यतो हि सुवर्णपित्तलयोरस्ति भिन्नजातीयता। अतो वेदार्थस्योपबृंहण वेदभिन्नेन वस्तुना नहि भवितुमर्हति, किन्तु वेदसमानधर्मणा पुराणेनैव सम्भवति। अतोऽनया व्युत्पत्तिलभ्ययुक्त्या पुराणाना नूनं वेदता सिध्यति।

स्कन्दपुराणस्य प्रभासखण्डेनापि ब्रह्मणो वक्त्राद्विनिर्गतं पुराणं वेदसमकक्षं साधयता प्रोक्तं यत् सृष्ट्यादौ घोरं तपस्यतो ब्रह्मणो मुखेभ्य. प्रथममङ्गसहितानां वेदाना प्रादुर्भावो जात, तदनन्तरमेव सर्वशास्त्रमयस्य पुराणस्याविर्भावोऽभवत्, यन्नित्यं शब्दमयं पुण्यप्रदं शतकोटिप्रविस्तरञ्च विद्यते—

**यदा तपश्चचारोग्रममराणां पितामहः।**
**आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः॥**

**ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम्।**
**नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम्॥**
**निर्गतं ब्रह्मणो वक्त्रात्**[1] ... ... ......... ... ।

श्रीमद्भागवतेऽपि एतदेव प्रकारान्तरेणोल्लिखितमस्ति, यद् यथा ऋग्यजुःसामाथर्वाणो ब्रह्मणश्चतुर्भ्यो मुखेभ्य क्रमश समुत्पन्नास्तथैव ब्रह्मणा पञ्चमं वेदस्वरूपमितिहासपुराणमपि स्वमुखेभ्य एवोत्पादितम्—

**इतिहासपुराणानि पञ्चमं वेदमीश्वरः।**
**सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः**[2] **॥**

---

१. स्क० पु० प्र० ख० ६।२१ २२। २. श्रीमद्भागवत ३।१२।३९।

न केवलं पुराणैरेव पुराणानां वेदरूपता साधिता, प्रत्युत उपनिषद्भिरपि वेदवत् पुराणेतिहासानामपि ब्रह्मणो निश्वासरूपता प्रोक्तास्ति "एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः[1]। अतो विदुषां दृष्टौ वेदवत् पुराणमपि मान्यं प्रामाणिकं समादरणीयं व्यासरूपधारिणो भगवतो मुखेभ्य आविर्भूतं साहित्यं विद्यते।

अशेषशास्त्रनिष्णातैः पूज्यपादैः स्वामिवर्य्यैः श्रीकरपात्रिमहाराजैरपि सुपुष्टैः प्रमाणैः तर्कसङ्गतयुक्तिभिश्च वेदवदेव पुराणानां मान्यता साधितास्ति साप्ताहिकसिद्धान्तपत्रे।[2]

भारतीयविद्वन्मान्यतानुसारं वेदे यत् सुस्पष्टं नोपलभ्यते तदपि पुराणप्रोक्तत्वाद् भवति ग्राह्यम्। यथा हि वेदे ग्रहसञ्चार-कालशुद्धि-तिथिक्षयवृद्धि-पर्वग्रहादीनां निर्णयो नास्ति, परं पुराणेष्वेषां निर्णयात् सर्वमान्यता दृश्यते। वेदेषु यत् किमपि नोपलभ्यते तत् स्मृतिषूपलभ्यते। यच्चोभयत्रापि नोपलभ्यते तत् पुराणेषूपलभ्यते। अतः पुराणार्थो वेदार्थादप्यधिको ग्राह्यो भवति, यतो हि पुराणेषु वेदार्थ एव सम्यक् संगृहीतोऽस्ति—

**न वेदे ग्रहसञ्चारो न शुद्धिः कालबोधिनी।**
**तिथिवृद्धिक्षयो वापि न पर्वग्रहनिर्णयः॥**
**इतिहासपुराणैस्तु कृतोऽयं निर्णयः पुरा।**
**यन्न दृष्टं हि वेदेषु तत् सर्वं लक्ष्यते स्मृतौ॥**
**उभयोर्यन्न दृष्टं हि तत् पुराणैः प्रगीयते।**
**वेदार्थादधिकं मन्ये पुराणार्थं वरानने।**
**वेदाः प्रतिष्ठिताः सम्यक् पुराणे नात्र संशयः[3]॥**

शास्त्रेषु श्रुतिः स्मृतिश्चेति द्वे नेत्रे प्रोक्ते स्तः तथा पुराणं हृदयं कथितमस्ति। तत्रैकेन चक्षुषा हीनो मनुष्यः काणः कथ्यते, द्वाभ्यां

---

१. बृ० उ० २।४।१०। २. स० १८४५ वर्ष ६ पृ० १८ १६।
३. ना० पु० उ० २।२४-२७।

चक्षुर्भ्यां रहितोऽन्ध. प्रोच्यते, परं पुराणशून्यो जनो हृदयहीनो निगद्यते। हृदयहीनात् मनुष्यात् क्वचित् काणोऽन्धश्च वरौ अभिमतौ स्त —

**श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम् ।**
**एकेन हीनः काण स्याद् द्वाभ्यामन्ध. प्रकीर्तित ॥**
**पुराणहीनात् हृच्छून्यात् काणावन्धौ क्वचिद् वरौ ।**

रेवाखण्डे तु त्रिभिरेभिर्द्रष्टा माहेश्वर. प्रोक्तोऽस्ति—

**श्रुतिः स्मृतिश्च विप्राणां चक्षुषी परिकीर्तिते ।**
**काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥**
**श्रुति-स्मृति-पुराणानि विदुषां लोचनत्रयम् ।**
**यस्त्रिभिर्नयनै पश्येत् सोंऽशो माहेश्वरो मतः[1] ॥**

वेदस्य प्रधानं कार्यमस्ति यज्ञकर्मसम्पादनं तथा गृहस्थाश्रमिणा-माचार-विचार-व्यवहारादीना ज्ञानस्य प्रकाशकमस्ति स्मृतिशास्त्रम्। इमे द्वे अपि पुराणेषु केन्द्रिते विद्येते । यथेदमाश्चर्यमयं जगद् भगवतो नारायणात् समुत्पन्नं तथैव समस्तं वाङ्मयं पुराणादेव प्रकाशितमस्ति। अत एव वेदार्थात् पुराणार्थो महानभिमतोऽस्ति। यतोहि वेदोऽपि पुराणसाहाय्येनैवात्मन उपबृंहणमभिवाञ्छति तथा-ऽल्पज्ञप्रहारान्नित्य बिभेति।

वस्तुतोऽस्माकं सविधे वेदपुराणमेवैकमेतादृशं साधनं वर्तते यतोऽस्माभि. स्वकीयपूर्वजानामषीणा महर्षीणा देवताना च पर्याप्तं ज्ञानं कर्तुं शक्यते। पुराणेषु भारतीयसंस्कृतेर्वास्तविकं स्वरूप पर्याप्तमात्राया प्रतिबिम्बितं वर्तते । अतो भारतीयसंस्कृतेर्वास्तविकस्वरूपज्ञानाय पुराणानामनुशीलनं नितान्तमुपकारि वर्तते ।

अद्यत्वे पुराणानामैतिहासिकपद्धत्या विश्लेषणस्य प्रथा प्रचलिता विद्यते। अत श्रद्धातर्कयो समन्वयपूर्वकं पुराणानामनुशीलनस्यावश्य-

---

१ स्क० पु० रे० ख० १।१५ १६ ।

कता वर्तते। पौराणिकतथ्येषु आपततो यथार्थताया विद्यमानत्वात्तत्र सहानुभूतिपूर्वकमन्तरङ्गतया तदध्ययनमत्यावश्यकं प्रतीयते।

एकदा पुराणाना माहात्म्यवर्णनप्रसङ्गे तत्कथानकसत्यताया संशयालुना स्वमिना विवेकानन्देन पृष्ट श्रीस्वामी रामकृष्णपरमहंसः प्रोक्तवान् यत् पुराणाना कथानकेषु सत्यताऽवश्यं विद्यते। तेषा वहिरङ्गरूपे ध्यानमदत्त्वा तत्रान्तरङ्गरूपेण वर्णिताना तथ्याना वेदानुकूलत्वमङ्गीकृत्य तत्सत्यताया संशयालुना न भाव्यम्।[1]

## पुराणानां विज्ञानोपयोगित्वम्

विंशशताब्दी विज्ञानस्य मध्याह्नं कथ्यते। इदानी विज्ञानं चरमं सीमानमुपगतं श्रूयते, किन्तु अद्यत्वे यावन्ति विज्ञानानि उच्चभूमिकायामुपगतानि विद्यन्ते यावन्ति च अपूर्णानि सन्ति, तेषु एकमपि विज्ञानं एतादृशं नास्ति यस्योल्लेखो येन केनापि प्रकारेण संस्कृतवाङ्मये न स्यात्। सम्प्रति यावन्तोऽपि आर्थिक-सामाजिक-राजनीतिकादयो वादा उपलभ्यन्ते, तेषु कस्यचित् संक्षेपेण कस्यचन विस्तारेण कस्यचित् पूर्वपक्षरूपेण कस्यचन च निन्दारूपेणोल्लेखस्तु संस्कृतवाङ्मये विद्यत एव।

संस्कृतसाहित्ये पुराणेषु आध्यात्मिकाधिदैविकविषयाणा विवेचनेन सह आधिभौतिकवादस्यापि प्रचुरा सामग्री समुपलभ्यते। साम्प्रतं भौतिकपदार्थानामनुसन्धानकर्तारो महता परिश्रमेण कथञ्चित् संहारिकाया एवाणुशक्ते अन्वेषणं कृत्वा परमाण्वस्त्रादिषु तस्या उपयोगं विधाय आत्मनो धन्यतमान् मन्यमाना आश्चर्यचकितान् कुर्वन्ति समस्तान् मानवान्, परन्तु प्रजननात्मिकाया पालनात्मिकायाश्चाणुशक्तेर्ज्ञानं नाधुना यावज्जातं तेषाम्। संस्कृतवाङ्मये तु तद्विज्ञानं प्रतिपदं प्राप्यते। यद्यत्र विषये विशेषं ध्यानं प्रदाय विशिष्टैः विद्वद्भिः सह विमर्शं विधाय समुपलभ्यमानै सूक्ष्मयन्त्रादिभि. प्रत्यक्षीकरणाय अनुसन्धानं क्रियेत, तर्हि अधुनापि निश्चप्रचं विश्वस्य महानुपकारो भवितुमर्हति।

सौन्दर्यलहर्या महाशक्तित. परमाणूनामुत्पत्तिकल्पनाया त्रिविधा प्रजनन-पालन-संहारकारिका (ब्राह्मी वैष्णवी रौद्री चेति) अणुशक्तयः उक्ता सन्ति—

---

१. पु० वि० पृ० २.३।

**तनीयांसं पांसुं तव चरणपङ्केरुहभवं**
**विरञ्चिः संचिन्वन् विरचयति लोकानविकलम् ।**
**वहत्येनं शौरिः कथमपि सहस्रेण शिरसा**
**हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥**

अनेन पद्येनेदं व्यज्यते यद् आकाशात्मिकाया अव्यक्तशक्तेः अणूना वृष्टिरजायत । तत सृजनात्मकानामणूना संचयं कृत्वा लोकविधाता ब्रह्मा अखिलं लोकं सृजति । पालनात्मकानणून् संगृह्य लोकपालको भगवान् विष्णु समस्तं विश्वं पालयति । संहारात्मकैश्च अणुभिः भूतभावनो भगवान् सदाशिव संहरति सकलं संसारम् ।

संस्कृतवाङ्मयप्राणभूतेभ्य पुराणेभ्य एव अणुशक्तेः ज्ञानं प्राप्य अलौकिकज्ञानसंपन्नो भगवानक्षपाद कणादो मुनि स्वकीये वैशेषिकदर्शने चेष्टाहीनाना परमाणूना परस्परं सम्पर्केण द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावना सप्ताना पदार्थानामुत्पत्तिसिद्धान्तं स्थिरं कृत्वा लोकोत्तरं चमत्कारं प्रदर्शितवान् । परमाणुलक्षणञ्च—

**जालान्तरगते भानौ सूक्ष्मं यद् दृश्यते रज. ।**
**तस्य षष्ठतमो भाग: परमाणुरिहोच्यते ॥**

दार्शनिकाना नये परमाणवो नित्या अतिसूक्ष्माश्च सन्ति । सूक्ष्मत्वादेव परमाणवो नास्माकं स्थूलदृशा मानवाना प्रत्यक्षगोचरीभवन्ति, किन्तु सर्वशक्तिमत. अघटितघटनापटीयस परमेश्वरस्य अलौकिकशक्तिसन्पन्नाना योगिना च परमाणूनामपि प्रत्यक्षं जायते । प्राणिनामदृष्टवशात् परमाणूना परस्परं सम्पर्केण तत्तत्कार्यमुत्पद्यते । परमाणवो द्विधा भवन्ति—कारणरूपा , कार्यरूपाश्च । तत्र कारणरूपा परमाणवो नित्याः, अनित्याश्च कार्यरूपा । तथाच कारणरूपाणा परमाणूनामप्रत्यक्षत्वेऽपि कार्यरूपेण परिणताना तेषा तु प्रत्यक्षं भवत्येव ।

अत एव परमाण्वस्त्रे उपलभ्यमाना कार्यरूपा परमाणवो न पदार्थान्तरं भवितुमर्हन्ति, कारणभूतेषु परमाणुषु एव तेषामन्तर्भावस्वीकारान्न कोऽपि शङ्कापङ्ककलङ्कलेशस्यावकाश सम्भवति ।

तत्तत्पुराणेषु विविधप्रकाराणा भूगर्भगताना धातूनाम्, पुण्यसलिलाना सरोवराणाम्, परिपूतजलाना नदीनाम्, सघनाना वनानाम्, दुर्गमाणा गिरीणाम्, सर्वसिद्धिदायकाना सिद्धपीठानाम्, महतो मरुस्थलस्य, शस्यश्यामलस्य भूभागस्य च पर्याप्तं वर्णनं विद्यते। एवं व्योमवर्तिना ग्रहनक्षत्रादीना दूरस्थिति-गति-शिशुमारचक्र-ध्रुवस्थान-दक्षिणायनोत्तरायणवर्षर्तु-मास-पक्ष-दिन-घटी-पल-विपल-निमेषादीना सूक्ष्मतमो विचारो वर्तते। येन भूगोलखगोलविषयकं प्रचुरं ज्ञानं विधाय ब्राह्मी-वैष्णवी-रौद्रीणामणुशक्तीना विषयेऽनुसन्धानं सफलं भवितुमर्हति। यदीदानीमपि अणुवीक्षणममिति. उपलब्धै आधुनिकै साधनैः अनेकप्रकाराणामणूनामन्वेषणाय पुराणमर्मज्ञै. संस्कृतरहस्यविद्भि. विशिष्टै विद्वद्भिरेयै सम्यक् सहयोग विधाय प्रचुर. प्रयत्न. क्रियेत, तदा सम्भावये पुराणेतिहासकालिकं वैज्ञानिकं महत्त्वमिदानीमपि पुन प्राप्तुं शक्येत, येन सकलस्य लोकस्य वास्तविकं कल्याणं सम्भवेत्। पौराणिकी. कथा आश्रित्यैव कालिदासादयो बहवो महाकवयोऽप्यनेकानि महाकाव्यानि नाटकादीनि च विरचय्यात्मनो धन्यान् मन्यन्ते। यैश्च महानुपकारो भवति संस्कृतसाहित्यस्य, वर्धते च गौरवमुत्तरोत्तरम्।

## पुराणोपयोगिता

अद्यत्वे भारतीयेतिवृत्तार्थं स्वतन्त्ररूपेण पुराणाना मान्यता समारब्धा। ऐतिहासिकसामग्र्यन्वेषणार्थं यत्र तत्र पुराणाना विशेषरूपेणालोचनात्मकमध्ययनं प्रचलति। आधुनिका इतिहासकारा डा० विल्सन-रैप्सन-स्मिथ-पर्जिटर-कीथ-मैकडानल - कप्तानस्पीक- किर्फेल-जायसवाल-भाण्डारकर-रायचौधुरी-प्रधान - दीक्षितार - आल्तेकर -रंगाचार्य-जयचन्द - डा० राजबलीपाण्डेय - डा० काणे-हरप्रसादशास्त्री-डा० आर सी० हाजरा–डा० पुसलकर-प्रभृतयो विद्वास. स्वकीयेषु ऐतिहासिकग्रन्थेषु समीक्षासु प्रबन्धेषु लेखेषु च पौराणिकसामग्रीणा प्रचुरमुपयोग कृतवन्त. कुर्वन्ति च। दीक्षितारेण पुराण-इन्डेक्शनामक एको विशालकायो ग्रन्थ त्रिषु भागेषु लिखितो वर्तते, य. पुराणगवेषकेभ्यो विद्वद्भ्योऽत्यन्तमुपकारी वर्तते। डा० राजेन्द्रचन्द्रहाजरामहोदयेन पुराणसम्बन्धिनोऽनेके ग्रन्था. प्रणीता. सन्ति प्रणीयन्ते च। तल्लिखितं स्टडीज् इन्

पुराणिकरेकार्ड्स आफ् हिन्दू राइट्स एण्ड कस्टम्सनामकं पुस्तकं पौराणिकशोधकार्यायात्यन्तं महत्त्वपूर्णं परमोपयोगि च विद्यते। तस्य विस्तृतभूमिकासहितविष्णुपुराणस्याग्रेजीसंस्करण महदुपादेयं वर्तते। तथा डा० देवेन्द्रकुमारराजारामपाटिलद्वारा निबद्ध कल्चरल हिस्टरी फ्राम दि वायुपुराणनामा ग्रन्थ. पौराणिकगवेषणात्मककार्यायातिशयोपयोगी सिद्धोऽस्ति। भारतीयसंस्कृते सभ्यतायाश्च व्यापकेतिहासाय पौराणिकसाहित्यस्य महती उपयोगिता वर्तते। यतो हि पौराणिके वाङ्मये भूतत्त्व-भूगोल-खगोल-राजनीति-कलाविज्ञान-दर्शनतत्त्वज्ञान-सम्बिधान-धर्मार्थादीना लोकोपयोगिना शास्त्रीयविषयाणाञ्च साङ्गोपाङ्ग-विवरणमुपलभ्यते।

## पुराणानामैतिहासिकं मूल्यम्

पुराणानामैतिहासिकतासम्बन्धे वर्तमानगवेषकाणा धारणा समये समये परिवर्तते एव। डा० पुसालकरस्य मतं विद्यते यद् भारतीयेतिहास-संशोधनस्यारम्भिककाले पुराणाना किमपि ऐतिहासिकं मूल्य नासीत्। यदा कैप्टेनस्पीकेन कुशद्वीपं (नुविया) गत्वा नीलनद्या उद्गमस्थान-मन्विष्टं येन पुराणाना वर्णनस्य समर्थनं जातम् तदा शनै. शनै. पुराणेषु विदुषामास्था दृढा जाता, किन्तु ताम्रपत्रमुद्रादिभि- ऐतिहासिकतथ्यान्वे-षणस्य प्रवृत्या पौराणिकमूल्ये ह्रासो जात। वौद्धग्रन्थेषु पौराणिक-प्रतिपादनाना खण्डनं जातम्। एवं सन्देहवृद्धया पुराणेषु अविश्वास उत्पन्नः, किन्तु पाश्चात्यदेशीयेन विदुषा विल्सनेन पुराणानामध्ययनं कृत्वा विष्णुपुराणस्याग्रेजी-अनुवाद. प्रकाशित., तत्र सारगर्भिता महतीं भूमिका च लिखित्वा तत्र तुलनात्मिका टिप्पणी प्रदत्ता, येन संस्कृत साहित्यस्य विशालेऽङ्गे विदेशीयाना विदुषामध्ययनमारब्धम्। यतः पुराणानामनुचितोपक्षाया अन्तो जात., पुराणानि स्वत प्रमाणयोग्यानि चाभिमतानि। परिणामस्वरूपे शिक्षितसमाजे पौराणिकोपयोगितायाः प्रवृत्तिर्दृष्टिगोचरी जाता। तस्य श्रेयो विल्सनमहोदयस्यैवास्ति। तदनन्तरं पुराणाना विशेषाध्ययनस्यारम्भ पार्जिटरेण कृत। तस्य धैर्याध्यवसाय-युक्तस्यानुसन्धानस्येदं फलमजायत यत् पुराणानामैतिहासिकसामग्रीणां पर्यालोचनात्मकं विवरण विश्वस्य समक्षे समुपस्थितम्। पुराणेषु यदैहासिकं विवरण विद्यते तस्य पक्षोऽनेन पुष्टो जात। स्मिथेन प्रमाणितं

यन् मत्स्यपुराणे आन्ध्राणा वर्णनं प्रायो यथार्थ विद्यते। इतिहासज्ञा अपि विद्वासोऽद्यत्वे मन्यन्ते यदान्ध्राणा राज्ञा विषये मत्स्यपुराणस्य, मौर्याणा विषये विष्णुपुराणस्य गुप्ताना सम्बन्धे च वायुपुराणस्य वर्णनं सर्वथा विश्वमनीयं वर्तते।[1]

वैदिकवाङ्मये समुपलब्धं पुराणम् आधुनिकानि समुपलब्धानि अष्टादशपुराणान्येव सन्ति, आहोस्वित् तदितरदिति संशये कैश्चित् पुराणशब्दस्यैकवचनान्तप्रयोगदर्शनादनुमीयते यत् प्राचीनकाले साधारण-रूपेण पुराणमेकमेवासीत्। पुसालकरेणापि अथर्ववेदे पुराणं यजुषा सहेति-एकवचनान्तपुराणशब्दस्य प्रयोगात् पूर्वमेकमेव पुराणमासीदिति-मतं सोपष्टम्भमुपस्थापितम्। जैक्सनप्रभृतिभिरपि एतदेव मतं समर्थितम्, किन्तु विवेचका विद्वास पुराणशब्दस्यैकवचनान्तं प्रयोगं जातिपरकं मत्वा तद्बहुत्वबोधकं मन्यन्ते। यथा ब्राह्मणो न हन्तव्य इत्यत्र ब्राह्मणशब्दो जातिपरकत्वात् समस्ताना ब्राह्मणाना ज्ञापकोऽस्ति तथैव पुराणशब्द-स्यैकवचनान्तप्रयोगोऽपि अनेकपुराणाना वाचकोऽस्ति।

अत्र तु सन्देहो नास्ति यन् मूलपौराणिकोऽशोऽतिप्राचीनोऽस्ति, किन्तु अद्यत्वे समुपलब्धानि पुराणानि रचनादृष्ट्या भाषाया आधारेण च तादृशानि प्राचीनानि न सन्ति। विषयदृष्ट्या पुराणानामधिकाशरूप-मर्वाचीनमवश्यमस्ति, परन्तु पाश्चात्त्या विपश्चितो यावदर्वाचीनत्वं पुराणाना मन्यन्ते, न तावदाधुनिकानि तानि सन्ति। येन रूपेण वैदिकसाहित्ये पुराणाना चर्चास्ति तेषा समावेश आधुनिकेषु पुराणेषु जातोऽस्ति तथा कालक्रमान् नवोदितशास्त्राण्यपि तद्विशाले कोशागारे समाविष्ठानि जातानि। डा० राजवली पाण्डेयस्यास्ति सम्भावना यद् यदा महाभारतकाले वैदिकसंहितासमानं पौराणिकसाहित्यस्य संगठनं प्रारब्धं तदैव वेदव्यासेन पुराणानि रचितानि। पुराणेषु स्वविस्तार-स्यानन्ता शक्तिरस्ति। अत. प्रत्येकनवागतयुगेषु तत्राभिनवाः सामग्र्यः प्रक्षिप्ता जाता। अनेन न केवलं पुराणेषु कथाभागेषु वृद्धि र्जाता, अपितु विषयदृष्ट्यापि तेषु नूतनविषयाणा समावेशो जात। देशे यावन्ति ज्ञानस्रोतांसि आसन् तानि समस्तानि यथासम्भवमात्मसात्कृत्वा पुराणै-र्विशालं रूपं धृत्वाऽऽत्मन· कलेवरो बर्द्धित।[2]

---

१ संस्कृति पृ० ५५७। २. अनुक्रमणिका प्रस्तावना पृ० २।

## पुराणकालिकस्थितिदिग्दर्शनम्

प्राचीनकाले आर्य. पौराणिकविषयेषु पर्याप्तमनुसन्धानं कृतमासीत्। तदानीन्तन. साधारणोऽपि व्यवहार, आध्यात्मिकविचारधारया ऐक्येन च भावेन क्रियतेस्म। चेतनप्राणिभि सह पृथ्वी-जल-वह्नि-वायु-वनस्पतिप्रभृतीना जडपदार्थानामेकताया मनुष्यैः सह पशूनामेकताया देवै सह मनुष्याणामेकताया स्त्रीभि पुरुषाणामेकतायाश्च विस्तृतं वर्णनं पुराणेषु प्राप्यते। एवं विश्वप्रेम्ण एकता भारतीयेषु व्यापृताऽऽसीत्। अत एवेश्वरेणापि पशु-पक्षि-मनुष्य-देव-तिर्यगादिषु योनिषु वाराह-मत्स्य-कूर्म-नृसिह-हंस-हयग्रवादयोऽवतारा गृहीता। यद्यपि पुराणेषु भौतिकोन्नते. वर्णनमाधुनिककालादत्युन्नतं दृश्यते तथापि आध्यात्मिकभावशून्या भौतिकी समुन्नति तत्काले निन्दिता, विनाशकारिणी, आसुरी च सम्पत्ति. मन्यतेस्म। तदानीन्तना जनाः स्थूलशरीरव्यवहारस्यैतावन्म-हत्त्वं न ददतिस्म यावदाधुनिकैर्दीयते। आध्यात्मिकभावेन क्रियमाणं कार्यं ते उत्तमं मन्यन्तेस्म। दैत्यकुलोत्पन्न प्रह्लादोऽपि आध्यात्मिकबला-वलम्बनेन भक्तराजो भूत्वाऽद्यापि समादरेण स्मर्यते, दैत्यपतेर्बले द्वारि प्रहरिवत् सर्वदा गदापाणेर्विष्णोरुपस्थितिश्च श्रूयते।

पौराणिककाले आर्याणा व्यवहारिकव्यवस्था न हीदानीमिव सङ्कुचितासीत्, किन्तु अत्युदाराऽऽसीत्। मातापित्रोर्गुणाना सन्ततिषु समावेशसम्भावनया वर्णव्यवस्थायामधिको विश्वास आसीत्। क्षत्रियेण राज्ञा मनुना निर्मिता मनुस्मृतिर्ब्राह्मणैरपि मान्या जाता। शुकदेववदमलान्त करणा मुनयोऽपि क्षत्रियाद्राज्ञो जनकाद् ब्रह्मज्ञानस्यो-पदेशं गृहीतवन्त। धर्मव्याधादपि तपस्वी कौशिको नामा ब्राह्मणो धर्मोपदेशं गृहीतवान्। जाजलिना मुनिनापि तुलाधारवैश्याद् ज्ञानं प्राप्तम्। धनुर्विद्याचार्यो ब्राह्मणो द्रोणाचार्यः क्षत्रियसेनाया प्रधान-सेनापतिर्बभूव। अर्जुनेन नागकन्यायामुलूप्यामुत्पन्न इरावान् तथा भीमद्वारा राक्षसकन्याया हिडिम्बाया जातो घटोत्कचश्च युद्धे क्षत्रियै. सह भागं गृहीतवन्तौ। निषादराजस्य भिल्लजातीयाया शवर्या पक्षिणो जटायुषश्च कीर्तिराध्यात्मिकविचारशीलतया समादरेण पुराणेषु गीयते स्त्रीणा भौतिकोऽधिकारस्तदानी परिस्थित्यनुसारं साधारणपुरुषापे-क्षयाऽल्पीयानेवासीत्, परं तासा समादर. पुरुषापेक्षयाऽधिक आसीत्।

तथा तासा सम्मानापमानयोः पूर्ण ध्यानं दीयतेस्म । एकस्या सीताया रक्षायै भगवता रामेण दुराचारिणो रावणस्य सर्वस्वं नाशितम् । एकस्या द्रौपद्या सभायामपमानाद् महाभारतसंग्रामे कौरवकुलस्य संहारो जातः । एकस्या एव सत्या अपमानेन कुद्धस्य भगवतो महादेवस्य जटाजूटान्निर्गतैर्वीरभद्रादिभिर्वीरैः प्रजापतेर्दक्षस्य यज्ञो विध्वंस्त । तदानी मातृनाम्ना पुत्राणा सम्बोधने विशिष्टं गौरवमनुभूयतेस्म । यथा भगवत श्रीकृष्णस्य कृते देवकीनन्दन श्रीरामस्य कृते कौशल्यानन्दन पाण्डवाना कृते पार्थ कौन्तेय इत्यादि नाम गोरवास्पदं मन्यतेस्म । श्रीरामस्योपासना सीतया सह, श्रीकृष्णस्योपासना राधया सार्कं, शिवस्योपासना उमया सार्द्ध स्त्रीजातीना सम्मानस्योदाहरण विद्यते। आद्याया शक्ते र्दुगाया उपासना जगदम्बारूपेण श्रावं श्रावं कस्य सचेतसो हृदयं स्त्रीजाति प्रति न प्रफुल्लेत् ।

साधारणजनताया स्थूलबुद्धित्वात् सूक्ष्मतत्त्ववेत्तृभिर्महात्मभि वद्धाना मर्यादानामनुसरणं श्रेष्ठं मन्यतेस्म । आध्यात्मिकबुद्ध्युपयोगेन साकमावश्यकता-देश-काल-परिस्थित्यनुसारं सामाजिकनियमस्य विधि-निषेधयोर्मर्यादाना परिवर्तनमपि जायतेस्म । अनेकस्मृतिरचना विभिन्नदर्शननिर्माणादि अस्यैव परिणामो विद्यते ।

पूवकाले ब्राह्मणवर्ग आत्मसंयमपूर्वकं ज्ञान-विज्ञानयो समुन्नतौ सदा तत्पर आसीत् । क्षत्रियाणा जीवन न केवलं स्वार्थमयमासीत्, किन्तु प्रजाना रक्षणे सुखसम्पादने च तेषा जीवनस्याधिको भागो व्यत्येतिस्म ।

स्नेहं दया च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥

इति मर्यादापुरुषोत्तमस्य श्रीरामस्यादर्शवचनं स्मारं स्मारं कस्य सचेतसो जनस्य हृदयं न प्रफुल्लेत् । वैश्यवर्ग कृषि-वाणिज्य पशुपालनादिभिरन्येषामावश्यकतायाः पूर्तौ संलग्न आसीत् । शूद्रवर्गश्च कला-कौशलप्रदर्शन-शारीरिकश्रमादिभि प्रेमपूर्वकं लोकसेवाया प्रवृत्ता आसन् । वृत्त्यर्थं केपामपि परस्परं संघर्षो नासीन् ।

वाल्यावस्थाया सर्ववर्गजना ब्रह्मचर्यव्रते स्थिता शरीरिकं मान-सिकञ्च बलं सम्पादयन्त स्व-स्वयोग्यतानुसारं विद्याध्ययनं कुर्वन्तिस्म । विद्याध्यायनं समाप्य गृहस्थाश्रमे प्रविश्य युवावस्थानुसारं सवर्णाया कन्यया साकं विवाहं कृत्वा लौकिकं व्यवहारं संचालयन्ति स्म । प्रौढा-

वस्थाया स्वमुत्तराधिकारिणं गृहस्य व्यवहारेषु प्रवीणं विधाय स्वं कार्य-भारं तस्मै समर्प्य वानप्रस्थाश्रमं प्रविशन्तिस्म। वृद्धावस्थाया सर्वानधिकारान् कर्तव्यं स्वत्वं च सर्वथा परित्यज्य सन्यासाश्रमे स्थित्वा ज्ञानमर्जयन्त स्वानुभवेन ज्ञानोपदेशद्वारा च सर्वहितसाधने निरतास्तिष्ठन्तिस्म। एवं सर्वोऽपि वर्ग स्व-स्वकार्यक्षेत्र-कर्तव्यानुसारं स्वं स्वं कर्तव्यं पालयन् परस्परं सहयोगेन सुखपूर्वकं नैजं जीवनं निर्वाहयतिस्म, येनेदं भारतवर्ष सर्वविधसमुन्नतिशीलं सुखसमृद्धिसम्पन्नं धनधान्य-परिपूर्णञ्चासीत्, येन सर्वे सुखेन जीवनं यापयन्तिस्म।

पौराणिककाले गद्यापेक्षया पद्यस्याधिक प्रचार आसीत्। अत पुराणेषु प्राय सर्व वर्णनं पद्येष्वेव कृतं दृग्गोचरीभवति, यत्र लेखक-रुच्यनुसारं शृङ्गारादिरसाना समावेश जातोऽस्ति। पुराणेषूपमोत्प्रेक्षा-रूपकदृष्टान्तातिशयोक्तिप्रभृतयोऽलङ्कारा अपि स्थाने स्थाने चित्तं चमत्कुर्वन्ति। प्रसादादयो गुणास्तु सर्वत्र चित्तं प्रसादयन्ति। श्रीमद्भागवतस्य पञ्चमे स्कन्धे विष्णुपुराणस्य चतुर्थेऽशे च काव्यकौशलपूर्णा अभिनवभाव-गुम्फिता समासबहुला गद्यच्छटा कादम्बरीसमताया न्यूना नास्ति।

पुराणेषु मानवाना रुचेरुत्तमोत्तमेषु आचरणेषु वर्द्धनाय घृणित-कर्मभ्यो व्यावर्तनाय च रोचक-भयानक-भावपूर्णा कथा. कथिता सन्ति। पौराणिकाना गूढरहस्याना सम्यगवगतये निम्नाङ्कितेषूदा-हरणेषु ध्यानं देयम्।

(क) उत्तमादप्युत्तमो मानवो यदा कस्मिश्चिद् व्यसने आसक्तो जायते, तदा तस्य बुद्धिभ्रंशो भवति, स महान्तमप्यनर्थं करोति। परिणामस्वरूपं तस्य पतनं जायते। पतिव्रता नारी पत्यु पतनसमयेऽपि ततो विमुखी न भवति, अपितु तदुद्धाराय निरन्तरं प्रयतमाना सती तदुद्धारं करोत्येवेत्यादर्शमयं भावं प्रदर्शयितुं पुराणेषु नलदमयन्ती-त्यादीनामितिहास उक्तोऽस्ति।

(ख) सत्यपालनपराकाष्ठापरिणामप्रदर्शनेन सह राज्ञा स्वकीया. प्रजा प्रति कथंकारं दयालुना भाव्यमिति भावं बोधयितुं राज्ञो हरिश्चन्द्रस्येतिहास. प्रदर्शितो वर्तते।

(ग) रामरावणयुद्धकथानकस्याभिप्रायोऽस्ति यदेकस्मिन् सात्त्विके महापुरुषे इयती आत्मशक्तिर्विद्यते यया स अस्त्रहीन सेनाविहीनोवा

महाप्रतापिनं सर्वशक्तिशालिनं सर्वविधभौतिकशक्तिसुसज्जितमपि शत्रुं विजयते एव । अहङ्कारी जन कियानपि तपस्वी, प्रभावशाली, ऐश्वर्यसम्पन्न अगाधनीतिनिपुण उच्चवर्णो भौतिकोन्नतिशिखरारूढश्च कथं न स्यात्, किन्तु तत्रासुरीभाव एवं वर्द्धते येन तत्सर्वनाशो जायते ।

(घ) देवासुरसंग्रामे भगवतो विष्णो साहाय्येनासुराणा पराजयस्य देवानाञ्च विजयस्य रहस्यमस्ति यद् विष्णुरूपस्यात्मज्ञानस्य प्रभावेण सात्त्विकदैवशक्त्यो राजस-तामसासुरशक्तिषु विजयं नूनं प्रप्नुवन्ति ।

(ङ) पृथिव्या यदा जनसंख्या वर्द्धते तदा जनेषु व्यक्तित्वभावः प्रबलो जायते, क्षुद्रस्वार्थाय परस्परं रागद्वेषौ उत्कृष्टौ भवतः, यत आसुरभावस्य प्राबल्यं जायते, समाजे च विभिन्न संघर्ष उपतिष्ठते । परिणामस्वरूपं जनतासु भयङ्करा अशान्तिरुद्भवति । एवं भौतिक-समुन्नत्या संसारे ईदृशी विषमता वर्द्धते, यया संसारधारिका शक्तिरपि विक्षुब्धा जायते जनाश्चात्यन्तं दु खिनो भवन्ति । यदा सर्वेषा मनसि विषमता दूरीकर्तुं भावना जागरिता भवति, तदा सर्वात्मना केन्द्रभूतः परमात्मा सात्त्विकशक्त्यनुसारं विशेषकलया केनचिद् व्यक्तिविशेष-रूपेण प्रकटीभूय समुचितव्यवहारद्वारा वर्द्धिता जनसंख्या छिन्ना भिन्ना विधाय विषमता च दूरीकृत्य शान्ति स्थापयति, सदुपदेशद्वारा च धर्मकुप्रवृति परिवर्त्य समुचितस्य मानवधर्मस्य प्रचारं प्रसारं वा विधत्ते । इममेव विषयं स्थूलरूपेणावबोधयितुं यदा पृथिव्या पापाधिक्येन पापिना भारं वोढुमसमर्था पृथ्वी दु खिनी जायते, तदा वेधस. समीपे गमनं तथा देवै सह क्षीरसागरे शयानस्य विष्णोरभ्यर्थनं तदनुसारमव-तारं गृहीत्वा पृथिव्या भारापनयन धर्मस्थापनं सज्जनसंरक्षणञ्चेत्यादि-कथा कथितास्ति ।

(च) एकस्या द्रौपद्या. पञ्चाना पाण्डवाना धर्मपत्नीकथया प्राचीन-काले पातिव्रत्यधर्मस्यादर्शस्य तन्महत्त्वस्य च प्रदर्शनं जायते । आर्य-संस्कृतौ विवाहस्योद्देश्यं केवलं पाशविकविषयवासनापूर्तिरेव नासीत्, नापि स्त्रीणा स्थूलशरीरस्पर्शाय पुरुषेषु परस्परं पशुवत् संघर्षो भवतिस्म । कथायामस्या पञ्चभि महाशूरै पतिभिः सह द्रौपद्या समानप्रेम्णः समानसेवाया समानप्रसन्नताया अनुपमपातिव्रत्यधर्मस्य च यावान् महिमा विद्यते तावदेव पञ्चानामपि पाण्डवानामात्मसंयमस्य पत्नीव्रतपालनस्य धर्मपरायणतायाश्च महत्त्वमप्यस्ति । अपि च पत्या सहानन्यभावेन

प्रेमपूर्वकं पातिव्रत्यधर्मस्य पालनकर्त्र्या पत्न्या इयान् महिमा वर्द्धते, यत्सा लोकपूज्या समादरणीया वन्दनीया च जायते, तथा पत्युरपि पत्न्या सह सप्रेमव्यवहारेण समादरेण तत्प्रसन्नतासम्पादनेन चात्मबलं वर्द्धते, स संसारे समादरणीय. श्रद्धेयश्च भवति। एतदेवासीत्कारणं यद् अनन्येन प्रम्णा पञ्चापि पतीन् समानतया प्रसन्नान् कृत्वा तेपामुन्नतो सहायिकाया द्रौपद्या तथा तया सहानन्यभावेन धर्मपूर्वकं व्यवहारकारिणा सत्यव्रतिना संयमिना धार्मिकाणा च पञ्चाना पाण्डवानामात्मविकाश एवं जातो येन ते जगद्वन्द्या जातास्तथा परमात्मनो विशेपविभूति. भगवच्छ्रीकृष्णरूपेण सर्वदा तेषा पार्श्वे उपस्थिताऽऽसीत्। एवमाध्यात्मिकाधिभौतिकाधिदैविकनैतिकविपयिकाभिरगणितकथाभि. पुराणानि परिपूर्णानि सन्ति।

## पुराणेषु धार्मिक-सामाजिक-रूपरेखा

पुराणानि प्राचीनस्य भारतस्यानुशीलनाय प्रामाणिकानि स्रोतासि स्वीक्रियन्ते। पुराणाना विविधवृत्तान्ताख्यानोपाख्यानगाथासु भारतीयस्य धर्मस्य समाजस्य विभिन्नावस्थाया दर्शनं जायते। अत. पुराणाना सास्कृतिकाध्ययनार्थ तेषा धार्मिकं सामाजिकञ्चाध्ययनमेको महत्त्वपूर्णो विषयोऽस्ति। पुराणेषु शैव-शाक्त-वैष्णवादयोऽनेकविधा धार्मिका विचारा उपलभ्यन्ते। पुराणान्तर्गताना धार्मिकप्रवृत्तीनामध्ययनं भारतीयं धर्म तथा तेन सह समाजस्य सम्बन्धं प्रदर्शयितु सहायकं भवति। अत पुराणाना सामाजिकायाध्ययनाय सर्वप्रथमं विभिन्नाना धार्मिकविचारधाराणा निरीक्षणं नितान्तमपेक्षितमस्ति।

पुराणाना धार्मिकप्रवृत्तिभ्य तत्कालीनाया लोकरुचे यथार्थ परिचय प्राप्यते। पुराणेषु लोकजीवनेन सह सम्बद्धाना व्रत-दान-विविध-धर्मादीना विधानं विद्यते। प्रत्येकं पुराणं स्वकीयधार्मिकप्रवृत्तिद्वारा भारतीयामाध्यात्मिकी तत्सम्बद्धा लौकिकविचारधारा च स्पष्टीकरोति।

वैष्णवपुराणेषु विष्णुभक्त्या सह वैष्णवधर्मस्य क्रमिको विकास परिलक्ष्यते। शैवपुराणेषु शैवमतेन साकं पाशुपतादय: सिद्धान्ता उपलभ्यन्ते। ब्राह्मेषु पुराणेषु ब्रह्मणो महिम्ना सह ब्रह्माण्डस्य समस्त-सृष्टिरचनाविषये विवेचनमस्ति। धार्मिकप्रवृत्तिभि सह एता विशेषता विभिन्नकालीनाया लोकरुच्या प्रकाशं प्रसारयन्ति। अत पुराणाना धार्मिकविचारेषु सामाजिकस्य अध्ययनस्य महत्त्वपूर्णा सामग्री वर्तते।

पुराणान्तर्गताना तीर्थ-व्रतादीना माहात्म्यमेकोऽन्यो विषयोऽस्ति । प्रत्येकमाहात्म्यस्य प्रामाणिकतासिद्धये एकमुपाख्यानं सम्बद्धमस्ति । तीर्थ-व्रत-माहात्म्यानि पुराणानामभीष्टा विचारधारामेव पोषयन्ति । शैवपुराणानि तीर्थ-व्रतमाहात्म्यविवेचने केवलं तान्येवोपाख्यानानि प्रस्तुवन्ति, यानि शिवसम्बद्धानि सन्ति । एवं वैष्णवपुराणानि विष्णु-महत्त्वसूचकानि उपाख्यानानि वर्णयन्ति । परं वायु-मत्स्य-ब्रह्म-ब्रह्माण्ड-हरिवंशानि साम्प्रदायिकप्रवृत्तिभि न प्रभावितानि सन्ति ।

## पुराणानि भगवदाज्ञारूपाणि

पुराणेषु योगबलेन त्रिकालदर्शिना महर्षिणा वेदव्यासेन आदर्श-मानवचरित्रचित्रणं, सर्वधर्मरहस्यकीर्तनं, वर्णाश्रमव्यवस्थाप्रतिपादनं, सर्वदर्शनरहस्यसमर्थनं, कर्तव्यपथप्रदर्शनं, असत्पथनिवृत्तिमार्गसूचनं, ज्ञानस्य भक्तेः कर्मणश्च निरूपणम्, अवतारस्य विवेचनं च महता कौशलेन कृतमस्ति । कि बहुना पुराणेषु सर्वोपयोगिनो ज्ञातव्या विषया यथास्थानं निवेशिता सन्ति । अत एव पुराणानि भारतीयसंस्कृते. हृदयमेवेति कथने नास्ति कश्चिदपि अतिशयोक्तिलेश. । अतो हिन्दुजातो प्राणवत्प्रियस्य सर्वाभ्यर्हितस्य, वेदवदारणीयस्य, सर्वै. धार्मिकशिरो-मणिभि सर्वथा समादृतस्य सम्प्रदायाविरोधेन सर्वदर्शनसिद्धान्तसर्वो-पासनारहस्यसमर्थनशीलस्यालौकिकभावगुम्फितस्य भगवत आज्ञास्व-रूपस्य पुराणसमूहस्याध्ययनमवश्यं कर्तव्यमेव, न हेयं हिन्दुभि —

पुराणं मानवो धर्म साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि सर्वाणि न हन्तव्यानि हेतुभिः ॥[1]

पुराणाना भाषा प्रसादगुणगुम्फिता भावमयी अतिसरला मञ्जुला च वर्तते । येनाल्पज्ञा अपि स्वल्पप्रयासेनैव तदध्ययनत. पुराणमर्मज्ञा भवितुमर्हन्ति, हिन्दुधर्मस्य समुन्नतिं कर्तुं प्रभवन्ति, मानवजन्मन प्रधान-लक्ष्यभूता भगवत्प्राप्तिञ्च कर्तुं शक्नुवन्ति ।

## मुक्तिप्रयोजकानि पुराणानि

ननु पुराणाना मुक्तिप्रयोजकत्वं कथमिति चेत्, अत्रोच्यते, ऋतम्भर-प्रज्ञया कृतसर्वतत्त्वसाक्षात्कारा लब्धयथार्थज्ञाना हि भारतीयसमाज-

१. म० भा० अनु० प० २७।३५ ।

नियमप्रवर्तका मनु-व्यास-वाल्मीकिप्रभृतयो महामुनयो समाजोपकाराय निरन्तरं प्रयतमाना आसन् । यथा यथा समाजेभ्यः अनाचारा अत्याचारा दुराचारा. पापाचाराश्च दूरीभवितुमर्हन्ति, तथा तथा ते सततं चेष्टन्तेस्म । यथा वा दुर्वृत्तैः सबलैः सुवृत्ता दुर्बला नाभिभूयेरन्, पापाचारिभि सत्कर्मचारिणो न पराभूयेरन्, समाजे किमप्यपूर्वं स्वर्ग-सुखमुपस्थितंस्यात्, मानवजन्म सार्थकं सम्भवेत्, सततञ्च सत्कर्मसु लोकाना स्पृहा समुपजायेत; तथा नियमान् व्यवस्थापयन्त. जगतीतलेऽस्मिन् आर्य सनातनधर्ममक्षुण्णं परिचालयितुकामा निष्कामा महामनस पूज्यतमास्तेऽत्र भूतले विहरन्तिस्म ।

इदमसत्कर्म, एतदाचरणेन गाढतमसुखमुत्पद्यते सद्य., येन पृथ्वीमिमा परिहाय लोकान्तरगमनेऽपि नास्ति निस्तार । तत्र प्राक्तनेन दुष्कर्मणा प्राप्तं नरकमपि सर्वविधदु खदायकमुपस्थितं भवति, तदा समुपतिष्टते चात्मनि ग्लानि, जायते च पापकर्मणो घृणा, उत्पद्यते च मनसि एवंविधा भावना, यत् यदि कदाचिद् भूयो मानवजन्म लभेयं तदा न पुन. पापलेशमपि समुपार्जयेयम्, येनेदानीमीदृशं कठोरतरं घोरं दु सहं दु खमनुभूयत इति ।

एतच्च विवरणं पुराण-प्रणेता भगवान् वेदव्यास. सरसेन, सरलेन, सुगमेन समीचीनेन शब्दोपन्यासेन संयोजयामास । पुराणेषूपन्यास-मुखेनोपस्थापितं पूर्ववर्तिना जनाना वृत्तं पठन्तो विश्ववर्तिनो जीवा असत्कर्मणो विपन्निर्वर्तकता सत्कर्मणश्च सुखादिसम्पादकना ज्ञात्वा शुभकर्मणि प्रवर्तन्तेऽसत्कर्मभ्यश्च प्रतिनिवृत्य सुखमयं जीवनं विधायान्ते विलसन्ति निरन्तरं मानवजन्मनो मुख्ये लक्ष्ये परमानन्दे परमात्मनि ।

प्रथमतो वाल्मीकिनामा महर्षिस्तमसातीरे क्रौञ्चवधसमुत्थदु खात्यन्त-व्यथितहृदय आत्मनोऽद्भुते प्रबन्धमहाकाव्ये ( रामायणे ) प्राधान्येन रामचरितं रावणचरितं च वर्णनीयतयाऽवाललम्बे । तत्र मर्यादा-पुरुषोत्तमस्य सर्वजनप्रियस्य श्रीरामस्यादर्शमयं पवित्रं चरित्रं तदनु-यायिना लक्ष्मणादीना विशुद्धं प्रेम, कौशल्यादीना मातृणामादर्श स्नेहा-तिरेकम्, हनुमदादीना भक्तिवैलक्षण्यम्, सुग्रीवादीनामनुकरणीयं सख्यम्, निषादाधिपतेः सेवाकार्यं च प्रदर्शयामास । येनातिदु.सहे कष्टे निपतितोऽपि रामभद्र. कष्टं कष्टतया विज्ञातुं न शशाक, महादु.खेऽपि काञ्चित् सुखसन्ततिमेव समाशिश्रिये ।

तस्यादर्शमयी ललनाललामभूता त्रिलोकमणी रमणी सहधर्मिणी जनकनन्दिनी भगवती सीता मूर्तिमतीव सतीत्वख्याते, सुखभोग्ययोग्ये यौवने वयसि सर्व राजकीयं सुखमेकपदे परित्यज्य घोरप्रचारे कान्तारे सुखेन स्वं पतिदेवं श्रीराममनुवव्राज। पतिसुखेनैव सर्व सुखं मन्यमाना यथा पत्युर्न क्लेशलेश सम्भवेत्तथा सर्वदा यततेस्म।

रामो हि लोकशिक्षार्थमेव पितुरादेशसंकेतमात्रेण विमातु प्रीतये उपस्थितमपि वसुधाधिपत्यं सहसा सहर्षं तृणाय मत्वा चतुर्दश वर्षाणि यावदरण्ये स्थितो न लेशतोऽपि दु खं समाश्रयत्, प्रत्युत राज्यभोगतोऽप्यधिकमेवानन्दं लेभे।

भरतो नाम कैकेयीगर्भजो महोदारतादिगुणगुम्फितहृदय त्यागशीलतया भ्रातृप्रेम्णा च सार्वभौममपि वसुधाधिपत्यं राज्यमनङ्गीकृत्य ज्येष्ठं भ्रातर श्रीमन्तं रामं प्रत्यावर्तयितुं चित्रकूटं प्रतस्थे। तत्रासफलो भरत रामपादुकामेव गृहीत्वा स्वशिरसि च संवहन् तामेव राजसिंहासने संस्थाप्य स्वयं नगराद्बहिरेव नन्दीग्रामे रामस्य प्रत्यावर्तनं यावद् राम इव कृततापसवेश. तमेव ध्यायन् समयमतिवाहितवान्।

एवंप्रकाराणि बहूनि आदर्शमयानि उपदेशप्रदानि समाजसमुन्नयनसाधनभूतानि राष्ट्रहितकराणि उभयलोकसुखसम्पादकानि सद्वृत्तानि समुपलभ्यन्ते पुराणेषु इतिहासे च।

पुराणेतिहासयोरेतादृशाना सद्वृत्ताना पर्यालोचनात् परिणामे रामादीना सद्वृत्तधारिणा शुभसम्पादकतादर्शनेन जायते सद्वृत्तावलम्बने मानवाना भूयसी समासक्तिः।

तत्रैव दुर्वृत्तानि अपि कानिचिदुपलभ्यन्ते। यथाहि क्षपाचरराजो रावण निखिलदुष्टकर्मानुबन्धी पापस्य सिन्धुरिव विविधदुर्विधानेन व्यस्तं चकार समस्तं जगत्, दु खितानि च कृतवान् धर्मैकव्रतिना निःस्पृहाणा यमनियमादिसाधनसमासक्तमानसाना मुनीना मनासि, विध्वस्तवाश्च जगन्मङ्गलसाधनभूतं महायज्ञादिकं महर्षेविश्वामित्रस्य तपोवने राक्षसी राक्षसाश्चोपस्थाप्य।

तेन तेन पापसम्पादकेन धर्मविघ्नकर्मणा परिणामे राक्षसकुलविनिपात एव समुपलभ्यते। शुभकर्मानुरक्ताना शुभसम्पाता., अशुभकर्मावलम्बिनामशुभसम्पाताश्च प्रादुरभवन्।

इतिहासेषु पुराणेषु च एवंविधाना सत्कर्मणा शुभहेतुतादर्शनेन, अशुभकर्मणामशुभहेतुताप्रदर्शनेन च लोकाना शुभेषु रतिमुत्पाद्य, अशुभकर्मणामशुभसाधनतामावेद्य तत्र तत्र प्रवृत्तिनिवृत्तिसम्पादनद्वारा परमपुरुषार्थं प्रति अनुकूलता सम्भवति पुराणानाम् ।

एव महाभारते पुण्यचरित्राणा युधिष्ठिरादीना शुभसाधकता, पापाचारिणा दुर्योधनादीना चरित्रवर्णनेन असद्वृत्तस्य परिणामे विनाशमात्रफलकतामुपदर्श्य तथैव सम्पादित कोऽपि सद्वृत्तासद्वृत्तयोर्ग्रहणपरिहारोन्मुखप्रसारो नरनारीसमाजेषु ।

सन्ति हि पुराणेषु बहूनि पुण्यप्रकर्षसम्पादकानि वृत्तानि । यथा सुचरिताना चरित्रप्रकर्षवर्णनमुखेन दुष्टचरित्राणा चरित्रापकर्षवर्णनेन च साधारणजनाना व्यवहारविधौ शिक्षाप्रदानं पुराणानामुत्तमं कार्यं दर्शं दर्शं कस्य सहृदयस्य चेतो न चमत्कृतं भवति ?

पुराणेषु चतुर्णां वर्णानाम्, आश्रमाणाम्, पुरुषार्थानाम्, राजनीते, समाजरीते, लोकव्यवहारस्याचारविचारादीना यथेष्टं वर्णनं विद्यते । उपासनाया भाण्डार., मुक्तिद्वारं च पुराणमेवास्ति । पञ्चदेवोपासनाया विचार भगवदवतारादीना च विशेषता पुराणेषु प्रतिपादिताऽस्ति । नवधाभक्तिद्वारा भगवच्चरणेषु अनुरागविधानं पुराणेष्वेवोपलभ्यते । संसारस्य सर्वविधाना विषयाणामन्वेषणं पुराणद्वारैव भवितुमर्हति । कि बहुना ? लोकद्वयसाधनप्रकार पुराणेष्वेवावलोक्यते ।

एवं पुराणेषु बहूना महापुरुषाणामत्यन्तरुचिराणि आदर्शमयानि चरित्राणि वर्णितानि सन्ति । तानि विवेकदृष्ट्या सम्यगनुतिष्ठन्तो मानवाश्चतुर्णामपि धर्मार्थकाममोक्षाणा साधनं कर्तुं शक्नुवन्ति । तस्मात्सिध्यति नि.शंसयं पुराणाना मुक्तिप्रयोजकत्वम् ।

पुराणप्रतिपादितया भक्त्या भगवति समासक्तचेतसा भक्ताना मनोमधुपा निरन्तरं भगवच्चरणनिलीनास्तद्रूप ध्यायान्तो श्रद्धया च विविधं तच्चरित्रं शृण्वन्तो मुक्ता भवन्ति । तथा चोक्तं श्रीमद्भागवते—

**संसारसिन्धुमतिदुस्तरमुत्तितीर्षो-**
**र्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।**
**लीलाकथारसनिषेवणमन्तरेण**
**पुंसो भवेद्विविधदुःखदवार्दितस्य ॥**[1]

---

१. श्रीमदभागवते १२।४।४० ।

अत संसारसागरोत्तरणाय पुराणानुसारं भगवल्लीलारसास्वादनमेव परमं निश्रेयसकरं साधनं विद्यते। अतएवामलात्मना भगवता वैयासकिना शुकेन श्रीमद्भागवते, अकामनया सर्वकामनया मोक्षकामनया वा भगवच्चरणारविन्दसेवनमेव सिद्धान्तितम्।[1]

## पुराणानां प्राथमिकं स्वरूपम्

पुराणाना विकासक्रमे विशेषरूपेण द्वे धारे लक्षिते भवत। एका व्यासपूर्वधारा, द्वितीया च व्यासोत्तरधारा। यथा व्यासात् पूर्व वेद एक एवासीत् तथैव पुराणमपि एकमेवासीत्, यस्मिन् शतकोटि. श्लोका आसन्। पश्चाद् भगवता व्यासेन तेषामभिप्रायान् चतुर्लक्षश्लोकेषु सङ्कलय्य अष्टादशभागेषु च विभज्य अष्टादशनामानि कृतानि, यानि अद्यत्वे प्रचलितानि अष्टादशपुराणनि प्रोच्यन्ते। यस्य स्पष्टं संङ्केतोऽस्माभि विभिन्नेषु पुराणेषु प्राप्यते।

स्कन्दपुराणे लिखितमस्ति यद् व्यासात्पूर्वं पुराणमेकमेवासीत्, यत् त्रिवर्ग- ( धर्मार्थकाम ) -साधनमासीत्, यत्र शतकोटिश्लोका आसन्। कल्पस्यारम्भे चतुर्मुखेन ब्रह्मणा तेपा स्मरणं कृत्वा महर्षीन् प्रति प्रोक्तम्। अत· पुराणं प्रति सर्वेपा शास्त्राणा प्रवृत्तिर्जाता। समयपरिवर्तनेनैतावतो विशालकायस्य पुराणसाहित्यस्य ग्रहणं स्वल्पसामर्थ्यशालिनोऽल्पबुद्धेश्च मनुष्यस्य कृते साध्यं नासीदतो द्वापरान्ते भगवान् विष्णु व्यासरूपेणावतीर्य मानवाना कल्याणार्थं तद् विशालं पुराणसाहित्यं चतुर्षु लक्षेषु श्लोकेषु संक्षिप्याष्टादशसु भागेषु विभक्तवान्। यदद्यापि भूतले उपलभ्यते। शतकोटिप्रविस्तरमादिपुराणमद्यत्वेऽपि देवलोके विद्यते—

**पुराणमेकमेवासीदस्मिन् कल्पान्तरे मुने ?**
**त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।।**
**स्मृत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः ।**
**प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ।।**

---

१ अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन भजेत पुरुषं परम् ।। श्रीमद्भगवते २।३।१० ।

**कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुनिः ।**
**व्यासरूपं विभु कृत्वा संहरेत् स पुनः पुनः ।।**
**चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।**
**तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ।।**
**अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ।**
**तदर्थोऽत्र चतुर्लक्षं संक्षेपेण निवेशितम् ।।**

( स्कन्दपुराणे रेवाखण्डे १।२४-२६ )

अस्यैव पुष्टि. विभिन्नै पुराणै किञ्चिच्छब्दपरिवर्तनेन सहः कृतमस्ति। मत्स्यपुराणे लिखितमस्ति यत् लोकपितामहेन ब्रह्मणा सर्वेषा शास्त्राणा निर्माणात् पूर्व पुराणाना स्मरणं कृतम्, तदनन्तरं तस्य मुखेभ्यो वेदानामाविर्भावो जात । यदा ब्रह्मणा पुराणस्मरणं कृतं तदा शतकोटि श्लोकविस्तरं पुण्यप्रदं धर्मार्थकामप्रदं तत्पुराणमेकमेवासीत्। अग्रे जनाना पुराणं प्रति अभिरुचिमालोक्य स्वयं परब्रह्मपरमात्मना द्वापरान्ते व्यासरूपेणावतीर्य तत् शतकोटिप्रविस्तरं पुराणं चतुर्लक्षश्लोकेषु परिवर्त्य अष्टादशविभागेषु प्रविभज्य पृथिव्या प्रकाशितं, किन्तु शतकोटिश्लोकै-निर्बद्धं तत्पुराणमद्यापि देवलोके वर्तते—

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।**
**अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।।**
**पुराणमेकमेवासीत्तदा कल्पान्तरेऽनघ ।**
**त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।।**
**कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप !**
**व्यासरूपमहं कृत्वा संहरामि युगे युगे ।।**
**चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।**
**तथाष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाश्यते ।।**

( मत्स्यपुराणे ५३।३-४, ९,१०,११ )

अक्षरशोऽस्यैव समर्थनं सृष्टिखण्डीय -( १।४५।५०-५३ )- पद्मपुराण-वचनैरपि भवति। समेषामेषां सारसंग्रहो भविष्यपुराणे एवमस्ति—

**अद्यापि देवलोकेऽस्ति शतकोटिप्रविस्तरम् ।**
**तदर्थोऽत्र चतुर्लक्षं संक्षेपेण विशेषितम् ।।**
**पुराणमेकमेवासीत् सर्वं कल्पेषु मानद !**
**चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् ।।**
**कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः ।**
**हरिर्हि व्यासरूपेण जायते च युगे युगे ।।**
**चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।**
**तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि ।।**
**अद्यापि देवलोकेषु शतकोटिप्रविस्तरम् ।**
**अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते ।।**

( भविष्यपुराणे ९२।२२-२६ )

स्कन्दपुराणस्य नागरखण्डेऽङ्कितमस्ति यत् शतकोटिकं पुराणं पूर्वमेकवमेवासीत्। अनन्तरं द्वापरे नारायणस्याशसमुद्भवेन वेदव्यासेन तद् अष्टादशभागेषु विभज्य लोके प्रचारितम्—

**एकमेव पुरा ह्यासीत् पुराणं शतकोटिधा ।**
**ततोऽष्टादशधा कृत्वा वेदव्यासो युगे युगे ।।**
**प्रख्यापयति लोकेऽस्मिन् साक्षान्नारायणांशजः ।**

( स्कन्दपुराणीयनागरखण्डे २।८ )

देवीभागवतेऽपि लिखितमस्ति यद् भगवान् विष्णु. कलिजीवान् अल्पायुषः स्वल्पबुद्धीश्चालोक्य व्यासरूपेणावतीर्य प्रतिद्वापरं वेदपुराणं संकलयति—

**द्वापरे द्वापरे विष्णुर्व्यासरूपेण सर्वदा ।**
**वेदमेकं स बहुधा कुरुते हितकाम्यया ।।**

**अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावथ।**
**पुराणसंहितां पुण्यां कुरुतेऽसौ युगे युगे ।।**

( देवीभागवते १।३।१९-२० )

एवं वर्तमानामष्टादशाना पुराणाना निर्माणस्य श्रेय महर्षे कृष्ण-यनव्यासस्यैवमस्ति, येन देवलोके अद्यापि विद्यमानस्य शतकोटि-स्तरस्य मूलपुराणस्य सारं संगृह्य चतुर्लक्षश्लोकद्वारा अष्टादश-गरूपेण संग्रन्थ्य मानवमात्रस्य परमं कल्याणं कृतम् । तात्पर्यमिदमस्ति यथा एकस्यैव वेदस्य ऋग्यजुसामाथर्वरूपेण भेदं मत्वा चत्वारो इति व्यवहारो भवति तथैव शतकोटिप्रविस्तरस्यैवैकस्यापि पुराणस्य संक्षेपं कृत्वा ब्रह्मपुराण-पद्मपुराण-विष्णुपुराणादिनाम्ना शपुराणानीति व्यवहारो जायते ।

सत्ययुगास्यारम्भे वेदात्पूर्वं ब्रह्मणा यस्य पुराणस्य स्मरणं कृत-त्तत् शतकोटिप्रविस्तरमेकमेव पुराणमासीत् । ब्रह्मद्वारा स्मरणात् पुराणस्यैकं नाम ब्राह्मं ब्रह्माण्डं वा पुराणेषूपलभ्यते—

**ब्राह्ममेव कृतं चाद्यं पुराणं श्रुतिसारगम् ।**

( वि० पु० वि० व्या० ३।६।१५ )

**एकमेव पुरा ह्यासीद् ब्रह्माण्डं शतकोटिधा ।**

( स्क० पु० प्र० ख० २।८ )

प्रथमं शतकोटिप्रविस्तरं पुराणमेकमेवासीदतो वेदे उपनिषदि च णशब्दस्य एकवचनान्त एव प्रयोग उपलभ्यते ।

विष्णुपुराणस्य विप्रचित्तिव्याख्याया लिखितमस्ति यत् सत्ययुगे णा वेदस्मरणात् पूर्वं यस्य ब्राह्मसंज्ञकस्य शतकोटिप्रविस्तरस्य णस्य स्मरणं कृतमासीत्, त्रेतायुगे तस्यैव संक्षेपं विधाय ब्रह्मादि-ष्टादशभिर्महर्षिभि. ब्रह्म-पद्मादीनि अष्टादश नामानि कृतानि, द्वापरे वेदव्यासो हि तेषा संग्रहं कृत्वा ग्रन्थाकारेणाष्टादश भागान् ज्य स्वं परमं प्रियं शिष्यं लोमहर्षणमध्यापयामास—

कृतयुगे वेदात्पूर्वं ब्रह्मणा स्मृतस्य शतकोटिप्रविस्तरस्य ब्रह्मसंज्ञकस्य पुनः या ब्रह्माद्याष्टादशर्षिभि. संक्षिप्य ब्राह्म-पाद्मेत्याद्यष्टादशात्मना विभक्तस्य पुनः

द्वापरान्ते संगृह्य अष्टादशपुराणसंहिता कृत्वा लोमहर्षणं सूतमध्यापयामास ।

( वि० पु० वि० व्या० ३।६।१५ )

पुराणानामुपक्रमोपसंहारयोरध्ययनेन मत्स्य-नारदीयपुराणादिसूची-पारायणेन च स्पष्टं प्रतीयते यत् प्राय समेषा पुराणाना सम्बन्धो ब्रह्मणा तन्मानसपुत्रैश्च महास्ति । एवं स्थितौ अग्रे तेषा शिष्य-प्रशिष्य-तच्छिष्यैश्च तत्तत्संवादानामादिश्रोतृवक्तृमाध्ययेन वर्तमानपुराणरूपं प्रदत्तम् ।

यथा वेदा सन्ति अपौरुषेया., गौतम-वसिष्ठात्रिकश्यपवामदेवादय ऋषय वेदमन्त्राणा द्रष्टार सन्ति, नतु कर्तार , तथैव पुराणाना मौलिक-सामग्र्या कर्ता कोऽपि नास्ति, किन्तु वेदप्रतिपादितपुराणस्मर्ता ब्रह्म-देवोऽस्ति तथा वक्तारोऽनेके ऋषय सन्ति । तात्पर्यमिदमस्ति ये ऋषयो वेदस्य द्रष्टार सन्ति त एव पुराणस्यापि स्मर्त्तारो वक्तारश्च सन्ति । यथा वेदस्यारम्भो ब्रह्मणोऽस्ति तथैव पुराणस्याप्यारम्भोऽपि ब्रह्मण एव । परं वैशिष्ट्यञ्चेदमेवास्ति यद् मन्त्रोपदेशात् पूर्वं विनियोगस्याव-श्यकता भवति, विनियोगस्य च पूर्णतायै ऋषिदेवताछन्दसा चरित्रस्य च ज्ञानमत्यावश्यकं भवति । अत. प्रथमं पुराणे ज्ञाते सत्येव मन्त्रोपदेश सफलो भवितुमर्हति, नान्यथा । अनेनैवाभिप्रायेण पुराणेषु प्रोक्तमस्ति यत्तत् सर्वप्रथमं ब्रह्मणो मुखात् पुराणमेव नि सृतं तदनन्तरं तस्य मुखाद् वेदा. प्रादुर्भूता ।

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।**
**अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।।**

( मत्स्यपुराणे ५२।३ )

तात्पर्यमिदमस्ति यद् वेदमन्त्रोपदेशसमये कश्चिदपि वैदिको विद्वान् प्रथमं शिष्यं विनियोगं बोधयति । विनियोगश्च तदैव सफलो भवितु-मर्हति यदा ऋषीणा देवतानाना च चरित्रज्ञानं स्यात् । अत पुराण-पठनानन्तरमेव वेदाध्ययनस्यावसर आगच्छति । अतएव प्रथमं ब्रह्मद्वारा पुराणस्य स्मरणं ततो वेदाध्ययनं न्यायसंगतं प्रतीयते । एतेनेदं सिध्यति यत् पुराणाना मौलिकसामग्र्या प्रथम स्मर्ता ब्रह्मैवास्ति तथा तत्प्रवचन-कर्तारो ब्रह्मणो मानसा· पुत्रा मन्त्रद्रष्टारो महर्षयः सन्ति ।

वस्तुतः प्रथमं वेदानामेवाविर्भावो जात, तदनन्तरं वेदार्थोपबृंहणार्थं तथा वेदानधिकारिणा ज्ञानोपदेशनिमित्तं पुराणाना रचना जाता। अतएवानुपनीताना बालकानामुपनयनसंस्कारात्पूर्व पौराणिकस्तोत्रादीनां पठनस्य व्यवस्था विद्यते सभ्यसमाजे। तथोपनयसंस्कारानन्तरं वेदारम्भ क्रियते। एवं परम्परा शिष्टजनेषु अद्यत्वेऽपि दृश्यते।

तथा च सृष्टेरारम्भकालतो व्यासात् पूर्वमितस्तत प्रकीर्ण शतकोटिप्रविस्तरं पुराणं गुरुशिष्यपरम्परया उपदिष्टं भवतिस्म, किन्तु द्वापरान्ते आगन्तुककलिकालकुप्रभावाद् वेदपुराणयोर्लोपाशङ्कया साक्षात् परब्रह्मपरमात्मना व्यासरूपेणावतीर्य यथा याज्ञिकमंत्रान् संकलय्य ऋग्यजु.सामाथर्वनाम्ना वेदो विशालकायश्चतुर्भागेषु विभक्तस्तथा अद्यत्वेऽपि ब्रह्मलोके वर्तमानस्यादिपुराणस्य सारं सक्षिप्य चतुर्लक्षश्लोकेषु परिणमय्याष्टादशभागेषु विभज्य च ब्रह्मपद्मादीनि पुराणनामानि कृतानि। येन वेदानधिकारिणोऽपि भावुका जना अष्टाविंशतितमेऽस्मिन् कलियुगे वेदामृतस्य पानं सौकर्येण कुर्यु ।

श्रीमद्भागवते लिखितमस्ति यद् ब्रह्मादिदेवैरिन्द्रादिदिक्पालैश्च धर्मरक्षार्थं प्रार्थितेन स्वयं नारायणेन आगन्तुकस्य कलेर्मनुष्यान् अल्पायुषोऽल्पबुद्धीश्च ज्ञात्वा महर्षिपराशरद्वारा मत्स्योदरीगर्भाद् व्यासरूपेणावतीर्य पञ्चसहस्रवर्षपूर्व चत्वारो वेदा लेखवद्धा कृता —

**क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः।**
**ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये॥**
**पराशरात् सत्यवत्यामंशांशकलया विभुः।**
**अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्॥**

(श्रीमद्भागवते १२।६।४८, ४६)

एवं महर्षिणा व्यासेन विकीर्ण वेदं चतुर्पु भागेषु विभज्य अध्ययनसौविध्याय सुरक्षायै च विभिन्नेभ्य पैल-वैशम्पायन-जैमिनि-सुमन्तुभ्यः शिष्येभ्यो वितीर्ण। तदनन्तरं तेषा शिष्य-प्रशिष्य-तच्छिष्यपरम्परया वेदा अनेकशाखिनोऽभूवन्।

चतुर्णा वेदाना संकलनानन्तरं महर्षिणा व्यासेन वेदवर्णितसृष्टिप्रलयादि-प्रतिपादकमन्त्राणा संग्रहं कृत्वा आख्यानोपाख्यानगाथाकल्पशुद्धिभि र्देवर्षि-राजर्षि-महर्षिप्रभृतीना चरित्रं सम्वाद चावश्यकतानुसारं संक्षिप्य विशद्य वा स्वकविताचातुरीद्वारा सुगमं सरलं मनोहरं च निर्माय जागरितेतिहासस्वरूपं प्रदाय विषयक्रमेण १८ भागेषु विभज्य अष्टादश महापुराणानि अस्माकमक्षिलक्ष्यीकृतानि । एवं शतकोटिप्रविस्तर-श्लोकाना तात्पर्य विषयविभागानुसारं मौलिकरूपेण चतुर्लक्षश्लोकेषु सम्बद्धीकरण व्याससदृशस्यापूर्वप्रतिभाशालिन· सर्वज्ञस्य दिव्यदृष्टेः असम्प्रज्ञातसमाधिद्वारा प्राप्तर्तम्भरप्रज्ञासम्पन्नस्य अवतारिणो महा-पुरुषस्य चतुरस्रप्रतिभाया एव परिणामोऽस्ति। अस्यैव स्पष्टीकरण मत्स्यपुराणे कृतमस्ति।

श्रीमद्भागवते सूतेनोक्तमस्ति यद् भगवता वेदव्यासेन यथा वेद-रक्षाया भार· पैलादिभ्य. शिष्येभ्य प्रदत्तस्तथैव पुराणेतिहासस्य रक्षाया भारो मम जनके लोमहर्षणनामके सूते निहित । स हि षट्संख्या-कान् त्रय्यारुणि-काश्यप-सावर्णि-अकृतव्रण-वैशम्पायन-हारीतनामकान् शिष्यान् प्राध्यापयद्, ये षट् पौराणिका प्रोच्यन्ते—

**इतिहासपुराणानां पिता मे लोमहर्षणः ।**
**त्रय्यारुणिः काश्यपश्च सावर्णिरकृतव्रणः ।।**
**वैशम्पायन-हारीतौ षड् वै पौराणिका इमे ।**
**अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ।**

( श्रीमद्भागवते १२।७।५-६ )

## पुराणानां प्राचीनत्वं सर्वमान्यत्वञ्च

भारतीयै· ऋषिभिर्महर्षिभिश्च प्रणीताना संस्कृतसाहित्यस्य ग्रन्थाना स्वाध्यायेन प्रतीयते यत् पुराणं वेदश्च भारतीयसंस्कृतेः संरक्षकौ सहोदरौ प्रहरिणौ स्त. । वेदकालत एव भारतीयैर्विशिष्टै-र्विद्वद्भि स्वस्वग्रन्थेषु महता संमानेन सह पुराणानामुल्लेख कृतोऽस्ति । यतो हि वेदपुराणानामैहलौकिक-पारलौकिकाभ्युदयसाधकानामुपदे-शाना बलेनैव हिन्दुसमाजः सृष्टिकालतोऽद्यावधि सुस्थिरोऽस्ति, तथा विश्वस्मिन् सभ्यजातिषु अग्रणीर्वर्तते ।

वेदकालत एवारभ्य संस्कृतवाङ्मयस्य सर्वमान्याना ग्रन्थानामाधारेण पुराणाना प्राचीनतासिद्धये स्थालीपुलाकन्यायेन कियता प्रमाणाना दिग्दर्शनमस्ति अत्यावश्यकम् । वेदब्राह्मणारण्यकोपनिषदादिषु ग्रन्थेषु पुराणानामुल्लेख. कथङ्कारं कृतोऽस्तीतीदं निम्नाङ्किताना पङ्क्तीना दर्शनेन सम्यक् प्रतीयते—

## वेदेषु पुराणम्

ऋग्वेद-यजुर्वेद-सामवेदच्छन्दोभिः सह पुराणं द्युलोकनिवासिनो-देवगणाश्चोच्छिष्टात् ( प्रलये समेषा पदार्थानामवसानेऽप्यवशिष्टात् ) परमात्मन उत्पन्ना. —

ऋचः सामानि छन्दासि पुराणं यजुषा सह ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः ॥

( अथर्ववेदे ११।७।२५ )

(क) सना पुराणमध्येरात् (ख) पुराणमोक. सख्यं शिवं वाम् ।

( ऋग्वेद ३।५४।९,३।५८।६ )

अर्थात् (क) अयाह सनातनं पुराणमधीये (ख) हे अश्विनीकुमारौ युवयो स्थानं पुराणमस्ति, यतो हि पुराणैरेव भवतोर्द्वयोर्ज्ञानं जायते, तथा युवयोर्मित्रतया विश्वस्य महत् कल्याणं बोभवीति ।

## ब्राह्मणग्रन्थेषु पुराणम्

अथ नवमेऽहनि किञ्चित् पुराणमाचक्षीत ( शतपथब्राह्मणे ३।१२।१३ )

एवमिमे सर्वे वेदा निर्मिता ससंकल्पा. सरहस्याः सब्राह्मणा. सोपनिषत्का सेतिहासा सान्वाख्याता. सपुराणा. । ( गोपथब्राह्मणे २।१० )

## आरण्यकेषु पुराणम्

ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसी र्मेदाहुतयो देवानामभवन् । ( तैत्तिरीयारण्यके २।९ )

स यथाऽर्द्रैधाग्नेरभ्याहितात् पृथग्धूमा विनिश्चरन्ति एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद् ऋग्वेदो यजुर्वेद सामवेदोऽथर्वाङ्गिरस इतिहासपुराणम् विद्या उपनिषद । ( बृहदारण्यके २।४।११ ) ।

## उपनिषत्सु पुराणम्

यदा देवर्षिर्नारदोऽध्येतुं सनत्कुमारसमीपे गतवान् तदा तेन पृष्टं यदितः पूर्वं भवता किं किमधीतम्, तदा तेन तदुत्तरे एवमुक्तम्—

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथाथर्वाणं चतुर्थमितिहास-पुराणं पञ्चमं वेदाना वेदम् । ( छान्दोग्योपनिषद् ७।१।२ )

## सूत्रग्रन्थेषु पुराणम्

धर्मसूत्रेषु पुराणस्य विशिष्टं महत्त्वं वर्तते। केवलं साधारणेभ्यो जनेभ्य एव न हि, अपितु शासकवर्गस्यापि पुराणज्ञानमत्यावश्यक-मस्ति, यतो हि पुराणं वेदोपवृंहकं साहित्यमस्ति। यानि तत्त्वानि वेदेषु अतिसंक्षिप्ततया निर्दिष्टानि सन्ति, तेषामेव विस्तार पुराणेषु विद्यते। प्रजापालकस्य राज्ञो व्यवहारो वेद-वेदाङ्ग-स्मृति-धर्मसूत्र-पुराणेतिहा-सादिग्रन्थेषु सविस्तरमङ्कितोऽस्ति । इयता शास्त्राणां ज्ञाता राजा व्यवहार-न्यायौ कर्तु योग्योऽभिमतोऽस्ति । फलत पुराणस्योपयोग. राज्ञो व्यवहारस्य शिक्षायै नितान्तमावश्यकमस्ति। तथाहि—

तस्य प्रजापालकस्य नृपतेश्च व्यवहारो वेदो धर्मशास्त्रम् अङ्गानि, उपवेदाः पुराणम् । ( गौतमधर्मसूत्र १।१।२१ )

गौतमधर्मसूत्रे बहुश्रुतस्य परिभाषाया कथितमस्ति, यद् बहुश्रुतः स एव भवितुमर्हति, यो हि लोकव्यवहारं वेदं वेदाङ्गानि च सम्यग् जानाति, तथा वाकोवाक्येतिहासपुराणेषु च कुशलोऽस्ति । एवं बहुज्ञतायै पुराणाना दक्षता एकमावश्यकं साधनमस्ति—

स एव बहुश्रुतो भवति लोक-वेद-वेदाङ्गविद् वाकोवाक्येतिहासपुराणकुशलः ।
( गौ० ध० सू० ८।४।६ )

अतो राज्ञ स्वव्यवहारसञ्चालनार्थं पुराणस्याध्ययनं मननं चिन्तनं तदाचरणं च नितान्तमावश्यकमनिवार्यं चास्ति ।

ब्राह्मणानि कल्पा गाथा नाराशंसी इतिहासपुराणानि अमृतस्य कुल्याः ।
( आश्वलायनगृह्यसूत्रे ३।४ )

आभूतसम्प्लवात्स्ने स्वर्गजितः, पुनः स्वर्गे बीजार्था भवन्तीति भविष्यत्पुराणम् ।
( आपस्तम्बसूत्रे २।९४।५ )

## स्मृतिग्रन्थेषु पुराणम्

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्धयर्थं विद्या चाध्यात्मिकी जपेत् ॥
( याज्ञवल्क्यस्मृतौ १।१०१ )

वेदं धर्मं पुराणं च तथा तत्त्वानि नित्यशः ।
संवत्सरोपिते शिष्ये गुरुर्ज्ञानं विनिर्दिशेत् ॥
( उशनः स्मृतौ ४।३४ )

स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासाश्च पुराणानि खिलानि च ॥
( मनुस्मृतौ ३।२३२ )

मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः ।
इतिहासपुराणानि स भवेद् वेदपारगः ॥
( व्यासस्मृतौ १।५ )

## रामायणे पुराणम्

एतच्छ्रुत्वा रहः सूतो राजानमिदमब्रवीत् ।
श्रूयतां यत् पुरावृत्तं पुराणेषु मया श्रुतम् ॥
( वा० रामायणे १।९।१ )

## महाभारते पुराणम्

अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।
पश्चाद् भारतमाख्यानं चक्रे तदुपबृंहितम् ॥ (म०भा०आ०प०)

## व्याकरणे पुराणम्

वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावच्छब्दस्य प्रयोगविषयः ।
( महाभाष्ये पस्पशाह्निके १।१।१ )

## दर्शनशास्त्रे पुराणम्

य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खलु इतिहासपुराणस्य धर्मशास्त्रस्य च ।
( न्यायदर्शनभाष्ये ४।१।६२ )

## ज्यौतिषे पुराणम्

930-S
346

दिग्देशकालावरणादिभेदान्न छादको राहुरिति ब्रुवन्ति ।
यन्मानिनः केवलगोलविद्यास्तत्संहितावेदपुराणबाह्यम् ॥
( सिद्धान्तशिरोमणौ ५६ )

## नीतिशास्त्रे पुराणम्

धर्मतत्त्वं हि गहनमतः सत्सेवित नर ।
श्रुतिस्मृतिपुराणाना कर्म कुर्याद् विचक्षणः ॥
( शुक्रनीतौ ४।२६४ )

शुक्रनीतेरनुसारं न केवलं पौराणिकेन पञ्चलक्षणज्ञात्रा भाव्यं, किन्तु साहित्यशास्त्रनिपुणेन संगीतज्ञेन मधुरस्वरभाषिणा च तेन भाव्यम्—

साहित्यशास्त्रनिपुणः संगीतज्ञश्च सुस्वर. ।
सर्गादिपञ्चज्ञाता च स वै पौराणिकः स्मृतः ॥
( शुक्रनीतौ २।१७७ )

## पञ्चदश्यां पुराणम्

अद्वैतवेदान्तस्य सारसंग्राहकेण श्रीमता विद्यारण्यस्वामिवर्येण नर्मितायामद्वैतवेदान्तिनामपूर्वग्रन्थपञ्चदश्या महता सम्मानेन पुराणाना पञ्चमवेदत्वं स्वीकृतमस्ति—

सपुराणान् पञ्चवेदान् शास्त्राणि विविधानि च ।
ज्ञात्वाऽप्यनात्मवित् तेन नारदोऽतिशुशोच ह ॥

एवं वैदिककालत पञ्चदशीकालपर्यन्तं निर्मिताना मान्यानां संस्कृतग्रन्थानामाधाररूपेण पुराणाना प्राचीनत्वं निर्विवादं सिध्यति ।

## अर्थशास्त्रे पुराणम्

राज्ञा शिक्षादानावसरे कौटिल्यस्य मतमस्ति यद् राजहितकर्तु. अर्थशास्त्रज्ञस्य मन्त्रिण· कर्तव्यमस्ति, यत् स इतिहासपुराणद्वारा उन्मार्गे वर्तमानं तदनुमुखं वा राजानमवरोध्य सुमार्गे प्रचालयितुं प्रयासं कुर्यात्—

मुख्यैरवगृहीतं च राजानं तत्प्रियाश्रिताः ।
इतिवृत्तपुराणाभ्या बोधयेदर्थशास्त्रवित् ॥ ( अर्थशास्त्र ५।६ )

एवं कौटिल्यस्य दृष्टौ पुराणापेक्षया इतिहासस्य क्षेत्रं बहु विस्तृतमस्ति। तेन स्वकीयेऽर्थशास्त्रे पुराणस्य गणना इतिहासान्तर्गता कृताऽस्ति यथा पश्चिममितिहासश्रवणे ( ५।१३ ) । राजा दिवसस्य पश्चाद्भागमपराह्णमितिहासश्रवणे नयेत् । तत्रेतिहासजिज्ञासायामुच्यते—

पुराणमितिवृत्तख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्र चेतिहास: ।

( कौ० अर्थशास्त्रे ५।१३ )

वेतनभोगिनामधिकारिणा प्रसंगे कौटिल्यस्य कथनमस्ति यद् राजा कार्तान्तिक - ( फलितज्योतिषी ) नैमित्तिक - ( उत्पातनिमित्तज्ञाता ) मौहूर्तिक - ( शुभमुहूर्तबोधको विद्वान् ) पौराणिक- ( पुराणज्ञाता ) सूत-मागध-पुरोध -सर्वाध्यक्षेभ्य एकं सहस्रवेतनं दत्वा स्वकार्याय ते नियोक्तव्या ।

कार्तान्तिक-नैमित्तिक-मौहूर्तिक-पौराणिक-सूतमागधाः पुरोहितपुरुषाः सर्वाध्यक्षाश्च साहस्रा· ( कौ० अर्थशास्त्रे ५।३ ) ।

## दर्शनाचार्याः पुराणञ्च

शबरस्वामिन. कुमारिलभट्टस्य श्रीस्वामिशङ्कराचार्याणा च ग्रन्थानुशीलनेन प्रतीयते, यत्तै स्वव्याख्यासु पुराणाना यत् स्वरूपमुपस्थापितं वर्तते तद्वर्तमानपुराणेभ्यो भिन्नन्नास्ति ।

(१) शबरस्वामी जैमिनिसूत्रभाष्ये यज्ञसम्बद्धदेवतास्वरूपं निर्णयन् लिखति यद् अस्मिन् विषये इतिहासपुराणे उपलब्धमेकं मतमस्ति यद् देवतया तात्पर्यमग्निना सहास्ति, य: स्वर्गे निवसति—

का पुनरिय देवता नाम । एक तावन्मत या एता इतिहासपुराणेष्वग्न्याद्याः सङ्कीर्त्यन्ते नाकसदस्ता देवता इति । ( शाबरभाष्य जै० सू० १०।४।२३ )

(२) कुमारिलभट्टेन स्वकीये तन्त्रवार्तिके पुराणस्वरूपे तद्विषयसम्बन्धे च महन्मूल्यवद् वृत्तमुपात्तमस्ति, येन पुराणाना प्रामाणिकता सिध्यति । पुराणेषु कलियुगविषये उक्तमस्ति यत् शाक्यप्रभृतय· ( गौतमबुद्धादय: ) उत्पत्स्यन्ते, ये धर्मविषये विप्लवमुत्पादयिष्यन्ति, तेषा वचनानि क: शृणुयात्—

स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतव: ।
कलौ शाक्यादयस्तेषा को वाक्यं श्रोतुमर्हति ।।

( तन्त्रवार्तिके १।३।७ )

(३) स्वामिवर्यै पूज्यपादै. श्रीशङ्कराचार्यै: स्वशारीरकभाष्ये बहुत्र पुराणाना तद्विषयाणाञ्च निर्देश कृतोऽस्ति, तथा तेन पुराणानि अनेकत्र स्मृतिशब्देन व्यवहृतानि,

पुराणे चातीतानागताना कल्पाना न परिमाणमस्तीति स्थापितम्।
( वे० सू० शा० भाष्य २।१।३६ )

अपि च—

तथा सामर्थ्यमपि तेषा सम्भवति मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यधिगमात्। ( तत्रैव १।३।२६ )

एवमाचार्यपादैर्ब्रह्मसूत्रभाष्ये सनत्सुजातीयभाष्ये श्वेताश्वतरोपनिषदादिभाष्ये च प्रमाणरूपेण बहूनि पुराणवचनानि समुद्धृतानि सन्ति।

अपि च राष्ट्रभाषाया हिन्द्या आविर्भावकालतोऽद्यपर्यन्तं निर्मितेषु हिन्दीसाहित्यस्य मान्यग्रन्थेषु महाकविचन्दवरदाई-सूर-तुलसी-कबीर-गुरुनानक-केशवदास-रसखान-देवकवि-भूषण-गिरिधरदास-विहारी-प्रभृतिभिः कविभि स्वस्वग्रन्थेषु वेदेन सहैव पुराणानामपि नाम महता समादरेण संगृहीतमस्ति। तस्मात् पुराणाना प्राचीनत्वे सर्वमान्यत्वे च न काप्यस्त्यनुपपत्तिः[1]।

—:०:—

---

१. विशेषतो द्रष्टव्यम्—

(क) रामदासगौडमहोदयस्य हिन्दुत्वम्। (ख) स्वामिनो दयानन्दस्य धर्मकल्पद्रुमः। (ग) पं० बलदेवोपाध्यायस्य पुराणविमर्श। (घ) माधवाचार्यस्य पुराणदिग्दर्शनम्। (ङ) ज्वालाप्रसादमिश्रस्याष्टादशपुराणदर्पणम्। (च) कालूरामशास्त्रिणः पुराणवर्म। (छ) मम च पुराणतत्त्वमीमासा।

# द्वितीयः परिच्छेदः

## नामकरणम्

भारतीयहिन्दुपरम्पराया "यथा नाम तथा गुण." इत्याधारेण बहु विचार्य कस्यापि नामकरणं क्रियते, येन तद्व्यक्तेः गुणावगुणविशेषतादीनामाभासः सहसा जायते। धर्मशास्त्रानुसारं नामकरणमेकः षोडशसंस्कारेषु अन्यतम. सस्कारो मन्यते। अत. हिन्दुसमाजे कस्यापि नामकरणं महत्या सावधानतया क्रियते। न केवलं मानवा एव प्रत्युत प्राय. सर्वे ग्रन्थलेखका महाकवयोऽपि अस्या. प्रथाया. सम्यक् पालनं कुर्वन्ति। रामायण-महाभारत-पुराण-रघुवंश-कुमारसम्भव-अभिज्ञानशाकुन्तल-मेघदूत-शिशुपालवध-किरातार्जुनीय-नैषधीयचरित-दशकुमारचरित-शिवराजविजय-प्रतापविजय-परिजातहरण-रुक्मिणीहरण-उषापरिणयादिभिर्नामभि. तेषा काव्यनाटकादीना प्रतिपाद्यविषयाः स्पष्टरूपेण ज्ञायन्ते।

न ह्येतावदेव लेखकास्तु स्वग्रन्थाना नायक-प्रतिनायक-तत्पात्राणामपि ईदृक् नाम कुर्वन्ति, येन तच्चारित्रिकविशेषता स्पष्टतया प्रतीयते। वाल्मीकिरामायणनायकस्य भगवत श्रीरामचन्द्रस्य नामश्रवणमात्रेण तत्कालमर्थ. प्रतीयते यत् "रमन्ते योगिनो यस्मिन् स रामः" इति व्युत्पत्यनुसारं रामो मर्यादापालकतया सर्वप्रियो भूत्वा सर्वप्राणिना हृदयेषु रमणशीलोऽस्ति, तथा रावयति सर्वं लोकमिति रावण इति विवरणानुसारं दुर्दान्तत्वात् स स्वकर्मणा सर्वं प्राणिनं रोदयत्येव।

एव महाभारतनायकस्य धर्मराजस्य युधिष्ठिरस्य नाम्नाऽयमर्थो व्यक्तीभवति यद् युधि स्थिरः युधिष्ठिर इत्यनुसारं स सदा युद्धे स्थिर आसीत् तथा विविधेषु संकटेष्वपि न विचलतिस्म। तथा प्रतिनायकः दुर्योधनो दु.खेन युध्यते इति दुर्योधन इत्यनुसारं स दुराग्राही दुष्टशिरोमणिर्द्वेषी, अन्यायी युद्धप्रियश्चासीत्, तथैव दु.शासनः-दु.खेन शास्यते इत्यनुसारं दुर्दान्त. निजदुष्टतया विख्यात. कौरवसभाया सत्या द्रौपद्या नग्नीकरणे आत्मगौरवमनुभवतिस्म। तत्रैव भीमोऽपि शत्रूणां कृते भयङ्करत्वात् स्वगदया दुष्टस्य दुःशासनस्य वक्ष स्थलं विदार्य

तद्रुधिरं पातुं लालायित आसीत्, तथाऽन्यायिनो दुर्योधनस्योरुभङ्गं कृत्वा तद्रुधिरेण द्रौपदीकेशसंयमनाय मदोद्यत आसीत् । अत. पुराणानां नामापि अन्वयार्थकं सार्थकञ्चास्तीत्यस्य विवेचनमग्रे क्रियते ।

## पुराणशब्दस्य व्युत्पत्तिरर्थश्च

पुरति अग्रे गच्छतीति पुरा । तुदादिगणपठितात् पुर अग्रगमने इति धातोः औणादिके काप्रत्यये कृते पुराशब्दो निष्पद्यते, योऽव्ययो मन्यते,। कोशानुसारं च स त्रिपु अर्थेषु प्रयुज्यते—प्रवन्धे, अतीतकाले संकटे च । तथाहि—स्यात् प्रबन्धे पुरातीते संकटागमिके तथा । (मे० को० ७५)

(१) पुरापूर्वकाद् दैवादिकादण् प्राणने इति धातो. पचाद्यचि कृते पुराणशब्दो निष्पद्यते । अच्प्रत्ययान्तत्वात्-घजजप पुसि-इत्यनुसारं-पुराणशब्दस्य पुल्लिङ्गे प्रयोग· संभवितुमर्हति, किन्तु पुराणं पञ्चलक्षणम्[1] । पुराणं षोडशपणे पुराणं प्रत्नशास्त्रयोः[2] । पुराण ग्रन्थभेदे च क्लीबे त्रिपु पुरातने[3] । इत्याद्यनुसारं पुराणशब्दस्य नपुंसकलिङ्गे प्रयोगो भवति ।

(२) पुरा भव पुराणमिति विग्रहे 'पुरा' अव्ययात् "सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च (पा० सू० ४।३।२३) इति सूत्रात् ट्युप्रत्ययानन्तरं ट्कारस्येत्सज्ञाया लोपे च कृते युवोरनाकौ (पा० सू० ७।१।१) इत्यनेन योरनादेशे (अट्कुप्वाड्नुम्व्यवायेऽपि (पा० सू० ८।४।२३) इति पाणिनीयसूत्रेण णत्वे "पूर्वकालैकसर्वजरत् पुराण नव केवलाः समानाधिकरणेन" (पा० सू० २।१।४९) अथवा "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" (४।३।१०५) इत्यादिपाणिनिसूत्रेषु पुराणशब्दस्य निर्देशात् निपातनेन तुटोऽभावे पुराणशब्द सिध्यति ।

(३) पुरा पुरातनम् अनीति जीवयति बोधयति इति पुराणं ग्रन्थ-विशेषः, पुरा पूर्वकात् आदादिकात् अण् प्राणने इति धातोरचि णत्वे च कृते पुराणशब्दो निष्पद्यते ।

(४) पुरा अतीतान् अर्थान् अणति कथयति इति व्युत्पत्तौ पुरा उपपदात् भौवादिकात् अण् शब्दे इति धातो. पचादित्वाद् अचिप्रत्यये सति पुराणशब्द सिध्यति ।

---

१ मत्स्यपुराणे ५३।६४ । २ हेमचन्द्रकोष पृ० १३, पं० ७ । ३ नानार्थ-रत्नमाला पृ० ७७, पं० ८ ।

(५) पुरापूर्वकणीञ् प्रापणे इति धातोः औणादिके डप्रत्यये टिलोपे णत्वे च कृते पुराणशब्दो निष्पद्यते। अर्थात् पुरा+नी+ड इमे त्रयोऽवयवा मिलित्वा पुराणशब्दरूपेण परिणता भवन्ति।

(६) महर्षिणा यास्काचार्येण स्वकीये निरुक्तग्रन्थे पुराणशब्दस्य निर्वचनं कुर्वता प्रोक्तमस्ति यत् पुराणं कस्मात्? पुरा नवं भवति (निरुक्ते ३।६।३४) अर्थात् पुराणं कस्मादुच्यते? अतो यत् कदापि पूर्वं नवं स्यात्। निरुक्ते यास्काचार्यस्यैवं प्रकारेण निर्वचनेन पुराणे नवीनताया भावो नास्ति, किन्तु पुराणशब्दस्यार्थं प्राचीनोऽस्ति।

यद्यपि पुराणशब्दस्य - पर्यायवाचिन प्रत्न-प्रतन-पुरातन-चिरन्तनादयः शब्दाः सन्ति तथापि अत्र पुराशब्देन प्राचीनाख्यायिकादियुक्ता महर्षिव्यासद्वारा निर्मिता अष्टादश ग्रन्थविशेषा एव ज्ञायन्ते। यदि पुराणं कश्चिद् नवीनं कथयति तर्हि स एव कथयितुमुद्यतो भविष्यति, यस्य पूर्वोक्ताना व्युत्पत्तीना ज्ञानं नास्ति। विचारशीलास्तु व्युत्पत्तिमात्रत एव पुराणं प्राचीनतम ग्रन्थविशेषं मन्यन्ते। संस्कृतसाहित्यस्य सर्वे ग्रन्थकारा इममेवार्थं स्वीकुर्वन्ति तथा स्वयं पुराणान्यपि अस्यैवार्थस्य मान्यता प्रददति। तथाहि मत्स्यपुराणम्—

पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः[1]।

वायुपुराणमपि प्राचीनकालतोऽद्यावधि जीवितं साहित्यमेव पुराणं मनुते—

यस्मात् पुरा ह्यनतीदं पुराण तेन कथ्यते।
निरुक्तिमस्य यो वेद सर्वपापैः प्रमुच्यते[2]॥

पद्मपुराणानुसारं प्राचीना परम्परा व्यक्तीकर्तुं समर्थं शास्त्रमेव पुराणमुच्यते—

पुरा परम्परा व्यक्ति पुराणं तेन वै स्मृतम्[3]॥

ब्रह्माण्डपुराणे तु इतो भिन्नैव व्युत्पत्तिरुपलभ्यते—पुरा एतदभूत् अर्थात्—प्राचीनकाले ईदृगासीत्। अत एतत् पुराणमुच्यते—

यस्मात् पुरा ह्यभूच्चैतत् पुराण तेन तत् स्मृतम्[4]।

---

१ ५३।७२। २. १।२०३। ३ १।२।५४। ४. १।१।१७३।

एवं विभिन्नेषु पुराणेषु कृताया व्युत्पत्तौ ध्यानप्रदानेन प्रतीयते, यत् पुराणस्य वर्ण्यविषयाः प्राचीनकालतः सम्बद्धाः सन्ति। अपि च पुराण-शब्दश्रवणमात्रेणैव व्यासकृतानामष्टादशाना पुराणग्रन्थानां सहसा स्मरण जायते। प्राचीनानि सन्त्यपि पुराणानि रचनावैचित्र्य-वस्तु-वैचित्र्याभ्या सदा अभिनवानि प्रतीयन्ते। एवं सृष्टि-प्रलय-प्रसिद्धराजर्षि-वंशपरम्परा-मनुवर्णन-विशिष्टमानवाना पावनचरित्राणा च वर्णनं यस्मिन् ग्रन्थे विद्यते तत् पुराणमुच्यते[1]।

समीक्षाचक्रवर्तिना म०म० पं० मधुसूदनौझामहोदयेनात्मन. पुराणोत्पत्तिप्रसङ्गे विश्वसाहित्यस्येतिहासं पुराण प्रोच्यते।

## द्विविधा धारा

पुराणाना पर्यालोचनया प्रतीयते यत् प्राचीनकाले लोककल्याणार्थं शास्त्रसम्बन्धिन्यौ द्वे धारे प्रचलिते आस्ताम्—एका ऋषिधारा, द्वितीया च मुनिधारा। ऋषिभि· वेदं गृहीत्वा तस्य सुरक्षाया भारो गृहीत·, तथा मुनिभिः पुराण स्वीकृत्य तस्य प्रवचनस्य प्रचारस्य प्रसारस्य च कार्यं कृतम्, यस्य सङ्केतोऽस्माभिः मार्कण्डेयपुराणेऽवाप्यते। तदनुसारं सर्गादौ अव्यक्तजन्मनो ब्रह्मणो मुखेभ्यो वेदस्य पुराणस्य चाविर्भावो जात·। तेषु, ब्रह्मणो मानसपुत्रा· सप्तर्षयस्तस्माद्वेदं गृहीतवन्त, तथा मानसा मुनयः पुराणप्रचारं स्वीकृतवन्तः—

> उत्पन्नमात्रस्य पुरा ब्रह्मणोऽव्यक्तजन्मनः।
> पुराणमेतद् वेदाश्च मुखेभ्योऽनु विनिःसृताः॥
> वेदान् सप्तर्षयस्तस्माज्जगृहुस्तस्य मानसाः।
> पुराणं जगृहुश्चाद्या मुनयस्तस्य मानसाः॥

(मार्कण्डेयपुराणे ४५।२०, २३)

एवमृषिद्वारा गृहीता वेदधारा प्रारम्भतो यज्ञेषु तत्तद्देवान् निर्दिश्य हविषस्त्यागस्य महत्त्वं प्रददाति। तथा पुराणधारायाः प्रमुखं लक्ष्यं लोकवृत्तस्यानुशीलनपूर्वकं भक्तिद्वारा भगवत्प्राप्ते· समुपदेशदानमस्ति।

## ऋषि-मुन्योरन्तरम्

ऋषिशब्दस्य व्युत्पत्तिर्भवति—ऋषति = प्राप्नोति सर्वान् मन्त्रार्थान्,

---

१ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्॥ (वा० पु० ४।११)

ज्ञानेन संसारपारं पश्यतीति वा ऋषि । तौदादिकाद् ऋषी गतौ धातो-रौणादिकेन किप्रत्ययेन ऋषिशब्दो निष्पद्यते, यस्य सङ्कलितार्थो भवति विशिष्टज्ञानसम्पन्ना, संसारपारगमनशीला वा व्यक्ति । एवम्प्रकार-कस्यार्थस्य सङ्केतो विभिन्नेषु पुराणेषु प्राप्यते[1] ।

तथा वायुपुराणे ऋषिशब्दस्य चत्वारोऽर्था निर्दिष्टा सन्ति—गति-( ज्ञान ) श्रवण-सत्य-तपस्या. । ब्रह्मद्वारा यस्या व्यक्तौ इमे चत्वारोऽर्था नियता कृता स्युः, सैव व्यक्ति भवति ऋषि[2] । मत्स्यपुराणेऽपि[3] ।

निरुक्तस्य व्याख्याकर्तुर्यास्काचार्यस्य मतानुसारं ऋषिशब्दस्य व्युत्पत्तिलभ्योऽर्थो भवति तत्त्वसाक्षात्कारकर्ता व्यक्तिविशेष.—ऋषि-र्दर्शनात् ( २।११ ) तैत्तिरीयारण्यके ऋषिशब्दस्य व्याख्या कृतास्ति—अजान् ह वै पृश्नीस्तप्यमानान् ब्रह्म स्वयंभ्वभ्यानार्षात ऋषयोऽभवन्, तद् ऋषीणामृषित्वम् ( २।९ ) अर्थात् सृष्ट्यारम्भे तपस्यता ब्रह्मणो मानस-पुत्राणा समीपे वेद. स्वयं प्रादुर्भूत. । वेदस्यास्य प्रादुर्भावकारणा-दृषीणामृषित्वमस्ति । तप पूतोऽन्तर्ज्योति.सम्पन्नो मन्त्रद्रष्टा तत्त्वदर्शी ऋषिरुच्यते, यस्य संकेतं वायुपुराणमपि करोति[4] ।

ऋषधातु गतिहिंसयोरर्थयो. प्रयुज्यते । अत ब्रह्मज्ञानसम्पन्नो विद्या-सत्य-तप परिपूतो वा ब्राह्मण ऋषिरुच्यते, स एव यदा निवृत्तिसमये बलेन बुद्ध्या वा परमेऽव्यक्ते प्रविशति तदा परमर्षि प्रोच्यते । एवं गत्यर्थे प्रयुक्ताद् ऋषधातो. निष्पन्न. ऋषि सर्वजीवनिवृतिकारण भवति । अत एवास्य ऋषिता मन्यते । ब्रह्मणो मानसा- परमैश्वर्यशालिनः

---

१ गत्यर्थादृषतेर्धातो र्नामनिर्वृत्तिरादितः ।
यस्मादृषिपरत्वेन महास्तस्मान्महर्षय. ।। ( वायुपुराणे ७।७४ )
गत्यार्थादृषते र्धातोर्नामनिर्वृत्तिकारणम् ।
यस्मादेष स्वयंभूतस्तस्माच्च ऋषिता मता ।। ( म० पु० १४४।८३ )

२ ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ ।
एतत् संनियतस्त स्मिन् ब्रह्मणा स ऋषि स्मृत ।। ( वायुपुराणे ५९।७९ )

३ ऋषिर्हिंसा गतौ धातु विद्या सत्य तप श्रुतम् ।
एष सन्निचयो यस्माद् ब्रह्मणस्तु ततस्त्वृषिः ।। ( मत्स्यपुराणे १४४।८१ )

४. तस्मात्तु ऋषयस्ते वै भूतादौ तत्त्वदर्शिनः । ( वायुपुराणे ५९।८४ )

ऋषय. स्वयमुत्पन्ना. स्वनिवृत्तिबुद्धिद्वारा ते तस्मिन् परमे महति आश्रिता भवन्ति। अतस्ते परमतत्त्वज्ञानिनो महर्षय उच्यन्ते। तेषा परमैश्वर्यशालिना मानसा औरसा वा पुत्रा परमत्वाश्रयात् परर्षयः प्रोच्यन्ते। तैरुत्पन्ना ऋषयो निगद्यन्ते। तत्पुत्राश्च ऋषीका प्रोक्ता, ये स्त्रीपुरुषसंयोगजन्या जाता.। परत्वकारणात् महत्त्वाश्रयाच्च एते ऋषीका कथ्यन्ते। एषामृषीणामृषिपुत्रका ज्ञेयाः। यतस्ते महत्त्वं श्रुत्वा परिवर्तिनो जाता., अतस्ते श्रुतर्षय. कथ्यन्ते। एवं कोशेऽपि ऋषीणा सप्त भेदा अभिमताः सन्ति—

(१) ब्रह्मर्षि., (२) देवर्षि, (३) महर्षिः, (४) परमर्षि·, (५) काण्डर्षि. (६) श्रुतर्षि., (७) राजर्षिश्च। अर्थाद् राजर्षे. श्रुतर्षिः श्रेयान्, तत. काण्डर्षि, तत परमर्षि, ततो महर्षिस्ततो देवर्षिः, ततश्च ब्रह्मर्षि सर्वश्रेष्ठोऽभिमतोऽस्ति[1]।

ब्रह्मर्षे स्थानं देवर्षि-राजर्ष्यपेक्षयोच्चतरमस्ति, यतोऽस्य चरमं लक्ष्यं ब्रह्मलोको विद्यते। देवर्षे. स्थानं ब्रह्मर्षेर्निम्नतरं राजर्षेश्चोच्चतरमस्ति। यतो देवर्षेश्चरमं लक्ष्यं देवलोको भवति।

मत्स्यपुराणे पञ्चानामृषिजातीनामुल्लेखो विद्यते[2]। तदनुसारं (१) अव्यक्तात्मा (२) महात्मा (३) अहङ्कारात्मा (४) भूतात्मा ५) इन्द्रियात्मा चेति पञ्चप्रकारा ऋषयो भवन्ति। ननु भृगुर्मरीचिरत्रिरङ्गिरा पुलस्त्य. पुलहः क्रतु. मनुर्दक्ष वशिष्टश्चेत्येमे दश ब्रह्मणो मानसपुत्रा ऋषित्व-परत्वाभ्या द्वाभ्या धर्माभ्या युक्ता सन्ति। अत इमे महर्षय. कथ्यन्ते वायुपुराणे ब्रह्मणो मानसपुत्रा एव महर्षय उच्यन्ते—भृग्वादयो यथा सप्त कल्पे ह्यस्मिन् महर्षय। (७।७०) गीताया भगवान् श्रीकृष्णश्चात्मानं महर्षिषु भृगुं निर्दिश्य महर्षीणा विश्लेषण कृतवान्—महर्षीणा भृगुरहम्। (१०।२५) एषामैश्वर्यशालिना महर्षीणा पुत्रा ऋषय. शुक्र-बृहस्पति-कश्यप-च्यवन-उतथ्य-वामदेवागस्त्य-कौशिक-कर्दम-वालखिल्य.-विश्रव.-शक्तिवर्द्ध-

१ सप्त ब्रह्मर्षि-देवर्षि-महर्षि-परमर्षय.।
काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमादवराः॥ (रत्नकोशे २।७)

२. अव्यक्तात्मा महात्मा वाहङ्कारात्मा तथैव।
भूतात्मा चेन्द्रियात्मा च तेषा तज्ज्ञानमुच्यते॥
इत्येवमृषिजातिस्तु पञ्चधा नाम विश्रुता॥ (मत्स्यपुराणे १४४।८९)

नाश्च ऋषय. प्रोच्यन्ते, ये आत्मतपोबलेन ऋषित्वं प्राप्तवन्त.। एषामौरसा: पुत्रा ऋषीका भरद्वाज-दीर्घतम-शरद्वत्-पराशर-शृङ्गी-शङ्खनाद-वैश्रवणादय ऋषिपुत्रा सन्ति। एते सत्यबलेन ऋषित्वमलभन्त। एवंप्रकारा अन्येऽपि ऋषयो वा० पु० ५९ अध्याये विवेचिता ज्ञेया ।

एवंविधानामृषीणा माध्यमेनैवापौरुषेयाणा वेदाना विश्वस्मिन् आविर्भावो जात.। सर्वप्रथमम् ऋषिभि वर्णमयो विग्रहवान् वेद आत्मनो दिव्यै. श्रोत्रै. श्रुत । अतो वै वेदा श्रुतयोऽपि प्रोच्यन्ते। तदनन्तरं तेषामृषीणा शिष्यै. प्रशिष्यै. तच्छिष्यैश्चाविच्छिन्नपरम्परयाऽद्यत्वेऽपि वेदाना प्रचार प्रसारश्च निरन्तरं बोभूयते ।

पुराणेषु ऋषीणा विधेयकर्मसम्बन्धे विशिष्टरूपेण किञ्चिन्न प्रतिपादितमस्ति, प्रतीयते यत् प्रजापतेर्ब्रह्मणो मानसपुत्रा महर्षय एव ब्रह्मर्षयः प्रोच्यन्ते। पुराणेषु ब्रह्मणो मानसपुत्रातिरिक्ताना कियता ब्रह्मर्षीणा चरित्रस्य प्रासङ्गिक उल्लेखो विद्यते। तेनेदं ज्ञायते यद् ब्रह्मर्षयो वेदज्ञातारो ब्रह्मज्ञानिनस्तपोमूर्तयोऽलौकिकशक्तिसम्पन्नाश्च भवन्तिस्म, ये स्वतपोबलेनासम्भवमपि कार्य कदाचित् सम्भावयन्तिस्म ।

के के देवर्षय सन्तीतिविषये विशिष्टरूपेणोल्लेखस्तु नास्ति, किन्तु वायुपुराणे धर्मपुत्रौ नर-नारायणौ, क्रतुपुत्रा वालखिल्या., पुलहपुत्र. कर्दम, पर्वत, नारद, कश्यपपुत्रौ ब्रह्मवादिनौ असितदेवलौ च देवर्षय. प्रोक्ता सन्ति[1] ।

ब्रह्मर्षि-देवर्षिभ्यो राजर्षे स्थानं निम्नतरस्य स्तरस्य विद्यते। राजर्षिनाम्नाभिधानस्य कारणं प्रतीयते, यद् ये राजानः प्रजावर्गं रञ्जयन्त सर्वथा सत्यवादिनो धर्मात्मान. परमार्थचिन्तका भवन्तिस्म, त एव राजर्षय प्रोच्यन्तेस्म। पुराणानुसारं जनक-ययाति-शान्तनु-मान्धातृ-सगरप्रभृतयो राजान स्वधर्माचरणद्वारा राजर्षय, कथ्यन्तेस्म ।

---

१ देवर्षी धर्मपुत्रौ तु नरनारायणावुभौ ।
बालखिल्या. क्रतोः पुत्राः कर्दम. पुलहस्य च ॥
पर्वतो नारदश्चैव कश्यपस्यात्मजावुभौ ।
ऋष्यन्ति देवान् यस्मात्ते तस्माद्देवर्षय स्मृताः ॥ ( वा० पु० ५९।५६ )

ब्रह्मणो दशसु मानसपुत्रेषु मरीचि-अङ्गिरोऽत्रि-पुलस्त्य-पुलह-क्रतु-वसिष्ठा एते सप्तर्षिरूपेणावतीर्णा आसन्। महाभारतेऽपि एत एव मानसा सप्तर्षय. प्रोक्ताः सन्ति[१]।

एते वेदज्ञातार. प्रवृत्तिमार्गसञ्चालका. प्रजापतिपदप्रतिष्ठिता सन्ति। पुराणानुसारं प्रतिमन्वन्तरं भिन्ना भिन्ना. सप्तर्षयो भवन्ति। वर्तमाने मन्वन्तरे वसिष्ठ-कश्यप-अत्रि-जमदग्नि-गौतम-विश्वामित्र-भरद्वाजाः सन्ति सप्तर्षय । वैदिकसाहित्ये सप्तर्षिशब्द. सप्तर्षितारकपुञ्जस्य द्योतकरूपेणापि दृष्टिगोचरीभवति।

**मुनिः**

मनु अवबोधने धातो मनेरुच्च (४।१२२) इत्यौणादिकसूत्रद्वारा इ प्रत्यये मकारोत्तरवर्तिनोऽकारस्य चोकारे कृते मुनिशब्दो निष्पद्यते। मनुते, जानाति य स मुनि., मन्ता वेदशास्त्रतत्त्वार्थावगन्ता वा मुनिः। एतस्य व्युत्पत्तिगम्योऽर्थो भवति—वेद-शास्त्रतत्त्वावगन्तृत्वम्। शङ्खस्मृतौ मुनिशब्दस्य स्वरूपमुक्तमस्ति, यद् य एकान्ते निवसति, मार्गे वा गच्छतो यस्य यत्र सन्ध्या जायते तत्रैव च यस्तिष्ठति स मुनिरुच्यते—[२]

महाभारते लिखितमस्ति यद्वने निवसतो यस्य ग्राम पश्चाद्भवति ग्रामे वा वसतो यस्य वनं पश्चाद्भवति समुनिर्ज्ञेय । अर्थात् पृष्टस्य वस्तुन उपयोग-मकुर्वाणो यति मुनि र्निगद्यते[३]। वनपर्वणि मुने स्वरूपस्य सम्यग्विवेचनं विद्यते। तत्र मुनौ तीव्रतपस्या तथा क्षमाशीलता अत्यावश्यकौ गुणौ प्रोक्तौ स्त.।

पुराणेषु अनेकत्र मुनि-महामुनिशब्दयो प्रयोग उपलभ्यते। अमर-सिंहेन मुने. पर्यायो 'वाचंयम.' प्रोक्तोऽस्ति, यस्य शब्दार्थो मितभाषी भवति, किन्तु पुराणेषु ऋषि-मुन्योर्लक्षणे किमपि विशिष्टमन्तरं नहि प्रदर्शितमस्ति । भृगु-भव-मरीचि-अङ्गिर-पुलस्त्य-पुलह-क्रतु-अत्रि-वसिष्ठा एते नव महात्मान ऋषि-मुनिशब्दाभ्या विशेषिता सन्ति। (वि० पु० १।७।२६-२७) एवं विश्वामित्र-कण्व-नारदा अपि महर्षि-महामुनिभ्या द्वाभ्या शब्दाभ्या विशेषिता सन्ति।

---

१ मरीचिरङ्गिराश्चात्रि पुलस्त्य पुलहः क्रतु ।
वशिष्ठ इति सप्तैते मनसा निर्मिता हि ते ॥ (आ०प० ६५।१०)

२ शून्यागारनिकेत स्याद् यत्र सायं गृहो मुनि । (शङ्खस्मृतौ ६।७)

३. अरण्ये वसतो यस्य ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं स मुनिः स्याज्जनाधिप । (आ० प० ९१।९)

ऋग्वेदे मुनीना शक्तेराचरणस्य च यद् वर्णनमुपलभ्यते तदनुसारं मुनय. परिव्राजका योगिनो वा वक्तुं शक्यन्ते। एकत्र वेदे इन्द्रो मुनीना मित्रं प्रोक्तोऽस्ति। जैन-बौद्धवाङ्मयेऽपि मुनीना चरित्रचित्रणं प्राप्यते, तत्र तेषामादर्शमयश्रेष्ठपुरुषरूपेण दर्शनं जायते। जातकसाहित्येन गृहविहीनौ यतिमुनी श्रमणनाम्ना अभिहितौ स्त। बुद्धोऽपि मुनिरभिमतो विद्यते, यतस्तस्याष्टदशसु नामसु एको मुनिशब्दोऽपि वर्तते[1]।

गीताया दु.खेषूपस्थितेषु अनुद्विग्नमनाः सुखेषु प्राप्तेषु विगताभिलाषो रागद्वेषभयक्रोधादिरहितश्च मुनि स्थिरबुद्धि. प्रोक्तोऽस्ति[2]।

भारद्वाजसंहितायान्तु मन्त्रद्रष्टृत्वं संलीनमानसत्वं च ऋषि-मुन्योर्वैशिष्ट्यं व्यक्तीकृतमास्ते[3]। एवमृषिषु मुनिषु च विभिन्ना विशेषता विद्यते। अत ऋषिभि. वेदपरम्पराया मुनिभिश्च पुराणपरम्परायाः प्रचालने न कापि भवितुमर्हति विप्रतिपत्तिः।

## पुराणानामुपकरणानि

पुराणना कानि सन्ति स्रोतासि येषामाधारेण भगवता व्यासदेवेन तेषा प्रणयनं कृतमिति जिज्ञासायामिदमुच्यते यत् पुराणतत्त्ववेत्ता महर्षिर्व्यासश्चतुर्णामाख्यानानामुपाख्यानाना गाथाना कल्पशुद्धीनां चोपकरणानामाशयमादायाष्टादश महापुराणानि विरचयाञ्चकार[4]।

आख्यानोपाख्याने—तत्र स्वयं दृष्टार्थकथानकमाख्यानमुच्यते, परम्परया श्रुतं कथानकमुपाख्यानमाख्यायते[5]।

अर्थात्—यस्यार्थस्य साक्षात्कार. स्वयं वक्त्रा कृतोऽस्ति तदाख्यानं निगद्यते, यस्य चार्थस्य कथनं वक्त्रा अन्यव्यक्तिद्वारा श्रुतं विद्यते तदुपाख्यानं कथ्यते। एतदनुसारं मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य, सत्यव्रतस्य राज्ञो हरिश्चन्द्रस्य, धर्मिष्ठस्य राज्ञो ययातेश्च कथानकं

१. वि० पु० का भा० पृ० ६५ तथा पु० वि० पृ० ४०-४४।

२. दुखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते॥ (गीता २।५६)

३. ऋषयो मन्त्रद्रष्टारो मुनिः संलीनमानस। (भार० स० २।११)

४. आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।
पुराण-संहिता चक्रे पुराणार्थविशारदः॥ (विष्णुपुराणे ३।६।१५)

५. स्वयं दृष्टार्थकथनं प्राहुराख्यानकं बुधाः।
श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते॥ (अष्टादशपुराणदर्पणे २५)

यस्य केवल परम्परा श्रुताऽस्ति तद् रामोपाख्यान हरिश्चन्द्रोपाख्यानं ययात्युपाख्यानमुच्यते ।

केषाञ्चिद् विदुषा मते भेदोऽयं न दृष्टश्रुतकारणको विद्यते, अपितु महदल्पाकारको वर्तते । आकारे यत् कथानकं महदस्ति तदाख्यानं निगद्यते, अपेक्षाकृत स्वल्पाकारकं कथानकमुपाख्याननाम्ना प्रसिद्ध-मस्ति । यथा रामायणे रामस्य कथानकं व्यापित्वादाख्यानमुच्यते । तदेकदेशवर्तित्वात् सुग्रीवस्य कथानकमुपाख्यानं कथ्यते ।

गाथा—अज्ञातकर्तृकाणा लोकप्रख्याताना केषाञ्चिन्महापुरुषाणा वैशिष्ट्यबोधकाना श्लोकाना संज्ञा गाथाऽस्ति । प्राचीनसाहित्येषु अनेकानि एवंविधानि प्राचीनानि पद्यानि समुपलभ्यन्ते येषा कर्तृणा नामानि नोपलभ्यन्ते, यानि केषाञ्चिन्मान्यमहीपतीना प्रशंसायाम-सामान्येशौर्ये दानमहिम्नि च प्रतिपादितानि सन्ति। ईदृशा अज्ञातकर्तृका: परम्परया प्रचलिता लोकप्रख्याता श्लोका गाथापदेनोच्यन्ते । पुराण-गाथासु केषाञ्चिन्महापुरुषाणा सार्वभौमं जीवनदर्शनं संक्षेपत. एकस्मिन् द्वयोर्वा श्लोकयोरभिव्यक्तीकृतमस्ति । अधिकाशत इमा गाथा भारतीय-साहित्येष्वतीतकालत सम्बद्धा सन्ति, तथैतिहासिकव्यक्तीना दान-महत्त्वाभिषेकादीना वर्णनं कुर्वन्ति । यथा महाभारते[1] ययातिगाथा—

न जातु काम कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ।।
यत् पृथिव्या व्रीहियव हिरण्य पशव स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णा परित्यजेत् ।।

वायुपुराणे[2] पितृगाथा यथा—

एष्टव्या बहवः पुत्रा यद्येकोऽपि गया व्रजेत् ।
यजेत वाश्वमेधेन नील वा वृषमुत्सृजेत् ।।
गया यास्यति यः पुत्रः स नस्त्राता भविष्यति ।
गयाप्राप्तं सुतं दृष्ट्वा पितृणामुत्सवो भवेत् ।।

मत्स्यपुराणे[3] मनुमत्स्यसंवादप्रसङ्गे पितृगाथायामुक्तमस्ति, यत् पितृणा निरन्तरमियमिच्छा जायते यदस्माकं कुले एवं सत्पात्रवंशजो

---

१ म० भा० आ० प० ८५।१२-१३ । २. वा०पु० १०५।६-१० ।

३. अपि स्यात् स कुलेऽस्माक यो नो दद्याज्जलाञ्जलिम् ।
नदीषु बहुतोयासु शीतलासु विशेषत. ।। ( म०पु० २०३।३ )

भवेद् योऽस्मभ्यं जलपरिपूर्णासु नदीषु जलाञ्जलीर्दद्यात् नित्यं श्राद्धं वा कुर्यात्—

विष्णुपुराणे सप्तर्षिगाथा कार्तवीर्यगाथा च—

तत्रापि श्रूयते श्लोको गीतः सप्तर्षिभि. पुरा ।
खट्वाङ्गेन समो नान्यः कश्चिदुर्व्यां भविष्यति ॥
येन स्वर्गादिहागत्य मुहूर्तं प्राप्य जीवितम् ।
त्रयोऽभिसंहिता लोका बुद्धया दानेन चैव हि ॥
नूनं न कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञैर्दानैस्तपोभिर्वा प्रश्रयेण दमेन च ॥

**कल्पशुद्धिः**

कल्पशुद्धिशब्दस्य तात्पर्यनिर्णये विदुषामस्ति परस्परं मतभेदः। केचन कल्पशुद्धिशब्दस्थाने कल्पजोक्तिरिति पाठं मत्वा विभिन्नेषु कल्पेषूत्पद्यमानाना पदार्थाना विवरणमित्यर्थं कुर्वन्ति। श्रीधरस्वामिना तु कल्पशुद्धिरित्यस्यार्थ. श्राद्धकल्प इति कृतोऽस्ति। समीक्षाचक्रवर्तिनः पं० मधुसूदनौझा[2]महोदयस्य तथा म०म० पं० गिरिधरचतुर्वेदस्य च[3] मते कल्पशुद्धिशब्देन धर्मशास्त्रस्य सर्वे विषया अभीष्टा. सन्ति। कल्पस्य तात्पर्यं तौ वेदाङ्गं मन्येते, यत्र श्रौत-गृह्य-धर्मसूत्र-सदाचार-संस्कारा अन्तर्भवन्ति। शुद्धिपदेन तौ षड्विधा शुद्धि मन्येते। तथाहि—मलशुद्धि., स्पर्शशुद्धि, अघशुद्धि, एन शुद्धि, आत्मशुद्धि तथा मन.शुद्धिः।

तथा च भगवता व्यासदेवेन पुराणनिर्माणावसरप्रतिसङ्गे एषा चतुर्णामाख्यानोपाख्यानगाथाकल्पशुद्धीना सम्यगुपयोग. कृतोऽस्ति। अत इमानि सन्ति पुराणाना स्रोतासि उपकरणानि उपादानानि वेत्यत्र नास्ति काचित् संशीति.।

स्कन्दपुराणानुसारं पुराणेषु पञ्चलक्षणातिरिक्तो यावान् विवेच्यो विषयो विद्यते तावान् आख्यानपदेन प्रसिद्धोऽस्ति।

पञ्चाङ्गानि पुराणस्य चाख्यानमितरत् स्मृतम्।[4]

किन्तु मत्स्यपुराणानुसारं पञ्चलक्षणमेवाख्यानकमुच्यते—

पञ्चाङ्गानि पुराणेषु आख्यानकमिति स्मृतम् ॥[5]

---

१. वि० पु० ४।४।३८-३९, १०।४। २ पुराणोत्पत्तिप्रसङ्गे पृ० ३१।

३. द्रष्टव्यः—तस्य सुचिन्तितो लेखः पुराणपत्रिकाया द्वि० व० पृ० १०९-१११।

४. स्क० पु० प्र० ख० ७ ७५। ५. म० पु० (५३।६४)

## पुराणमितिहासश्च

पुराणसाहित्यस्येतिहासेन सहास्ति घनिष्ठः सम्बन्ध.। प्राचीनग्रन्थेषु द्वयोर्नाम सम्मिलितरूपेणोपलभ्यते। छान्दोग्योपनिषदि इयं कथास्ति यत्—एकदा यदा देवर्षिर्नारदो ब्रह्मविद्यामध्येतुं सनत्कुमारपार्श्वे उपस्थितस्तदा तेन पृष्टो यद् भवता इत पूर्वं किं किमधीतमस्ति? तदुत्तरे स स्वाधीतविद्यासु इतिहासपुराणयोर्नाम गृहीत्वा तत् पञ्चमं वेदं प्रावोचद्—

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमप्यथर्वाणमितिहासपुराणं पञ्चमं वेदानां वेदम्।[1]
४।१।६१

न्यायभाष्ये वात्स्यायनेनापि विषयभेदात् साहित्यस्य त्रयो भेदा स्वीकृता सन्ति। (१) यज्ञः, (२) लोकचरितम्, (३) व्यवहारव्यवस्थापनं च। एषु यज्ञो मन्त्रब्राह्मणात्मकस्य वेदस्य विषय.। लोकचरितमितिहासपुराणस्य विषय.। तथा व्यवहारव्यवस्थापनम्, मानवाना पुण्य-पापादीना निर्धारणञ्च धर्मशास्त्रस्यास्ति विषय ।

वस्तुतो द्रष्टु प्रवक्तुश्च दृष्ट्या एषु भेदो नास्ति, यतो हि ये ऋषयो मन्त्राणा द्रष्टार सन्ति, त एव इतिहासपुराणस्य धर्मशास्त्रस्य द्रष्टारो वक्तारश्च सन्ति। किन्तु एषु विषयविवेचनदृष्ट्या पार्थक्यं स्वीक्रियते।

यास्काचार्येण स्वनिरुक्ते पुराणेतिहासयोर्निरुक्ति कृताऽस्ति यत् पुरा नवं भवति पुराणम् तथा इतिहासस्य व्युत्पत्ति इति + ह + आस=इतिहासः ( इति=एवं प्रकारम्, ह=निश्चयरूपेण आस=वर्तमानमासीत् ) एवं पुराणशब्दस्यार्थो भवति यत् प्राचीनं सदपि नवीनं स्यात् तत् पुराणम् तथा इतिहासस्यार्थो भवति य प्राचीने काले वास्तविकरूपेण घटितघटनाया. सङ्केतं करोति स भवतीतिहास । दुर्गाचार्योऽपि निरुक्तवृत्तौ निदानभूतः 'इति ह एवमासीत्' इति य उच्यते स इतिहासः (२।३।१)।

स्वामिशङ्कराचार्येण स्वकीये छान्दोग्योपनिषद्भाष्ये—उर्वशी हाप्सराः पुरुरवसं चकमे (११।५।१।१)। इति शतपथब्राह्मणाधारेण उर्वशी-पुरुरवसो. संवादसूचकोंऽश इतिहासो मन्यते—असद्वा इदमग्र आसीत्, इत्यनुसारं सृष्टिप्रक्रियाघटितविवरणं पुराणं प्रोच्यते। इतिहासः, इत्युर्वशी-पुरुरवसोः संवादादिः, उर्वशी हाप्सरा इत्यादि ब्राह्मणमेव। पुराणम् असद्वा इदमग्र आसीत्, इत्यादि। (छा० उ० शा० भा० ७।१) एवं शङ्कराचार्यमते प्राचीना-

---

१. छा० उ० ७।१।१४। ( बृ० आ० उ० २।४।१० )

ख्यानोपाख्यानसूचको भाग इतिहासोऽस्ति तथा सृष्टिप्रक्रियाया वर्णनं पुराणं विद्यते, किन्तु सायणाचार्येण स्वकीये शतपथब्राह्मणभाष्ये एतद्विपरीतं सृष्टिप्रक्रियाप्रतिपादको ब्राह्मणभाग इतिहास. तथा उर्वशी-पुरुरवसोराख्यानं पुराणं प्रोक्तं वर्तते— आपो ह वा इदमग्रे सलिलमेवास— इत्यदि सृष्टिप्रतिपादकं ब्राह्मणमितिहासः। उर्वशीहाप्सरा पुरुरवसमैड चकमे— इत्यादीनि पुरातनपुरुषवृत्तान्त प्रतिपादकानि पुराणम्। (सा० भा० ११।५।६।८)

शुक्रनीत्यादावितिहास-पुराणयोर्लक्षणमित्थं कृतं विद्यते—

प्राग्वृत्तकथनं चैकराज्यकृत्यमिषादितः।
यस्मिन् स इतिहासः स्यात् पुरावृत्तं स एव हि ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं यस्मिन् पुराणं तद्धि कीर्तितम् ॥ (शु०नी० ४।६२-३)
धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्।
पूर्ववृत्तं कथायुक्तमितिहासं प्रचक्षते ॥ ( सं० वा० रा० १२ )
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ ( म० पु० ५३।६४ )

स्कन्दपुराणे लिखितमस्ति यल्लोकगौरवादितिहासपुराणं भिन्नं भिन्नं वर्तते—इतिहासपुराणानि भिद्यन्ते लोकगौरवात्। (कु० ख० ४०।१६८)

यद्यपि आलोचका. केवलं महाभारतमेवेतिहासं ब्रुवन्ति तथा रामायणं महाकाव्यं कथयन्ति, यतो हि स्वयं महाभारते महाभारतमितिहास-नाम्नाभिहितमस्ति[1]। देवीभागवतेऽपि कर्तृ. श्लोकसंख्यायाश्चोल्लेख-पूर्वकं महाभारतमितिहास. प्रोक्तोऽस्ति।[2]

तथा वाल्मीकीये रामायणे प्रतिसर्ग पुष्पिकासु—इत्यार्षे वाल्मीकीये महाकाव्ये……अमुकः सर्ग इत्युल्लिखितोऽस्ति। तथा ब्रह्मवैवर्तपुराण-

---

१ तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥ ( आ० प० १।५४ )
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा। ( स्व० प० ५।५१ )
इतिहासोत्तमादस्माज् जायन्ते कविबुद्धयः। ( आ० प० २।३८५ )
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः। ( आ० प० २।४१ )

२ सपादलक्षं च तथा भारतं मुनिना कृतम्।
इतिहास इति प्रोक्तं पञ्चमं वेदसम्मितम् ॥ ( दे० भा० १।२।२६ )

मपि अस्य समर्थनं कुर्वत् सिद्धान्तयति यद् महाभारतमितिहासोऽस्ति वाल्मीकीयरामायणञ्च महाकाव्यमस्ति।[1]

तथापि संस्कृतसाहित्यपरम्पराया रामायण-महाभारतयोरुभयो-रेवेतिहासनाम्ना ख्यातिरस्ति। अत एव राजशेखरेण द्वयोः सङ्ग्रहदृष्टचा स्वकाव्यमीमासायामितिहासो द्विप्रकारकोऽभिमतोऽस्ति। (१) एक-नायिका कथा—यथा रामायणम्, (२) पुराकल्पः बहुनायिका कथा यथा महाभारतम्।[2]

अतो रामायणमितिहासान्तर्गतमिति स्वीकार., प्राचीनशास्त्रीय-मर्यादानुकूलमेवास्ति। तथा च वाल्मीकीयं रामायणं वैयासिकं महा-भारतञ्चेति द्वे अपि इतिहासाख्यया प्रसिद्धे स्त इति निर्विवादम्। यथा— पुराणं सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितैरेभि. पञ्चभि. विषयैः सह दान-व्रत-तीर्थ-धर्म-भक्त्यवतारादीनामपि पर्याप्तं वर्णनं करोति तथैव इतिहासोऽपि न केवलं प्राचीनाना घटनानामेव वर्णनं करोति, प्रत्युत विभिन्नव्यावहारिकविषयाणामपि शिक्षा प्रदाय मानवहृदयेभ्यो मोहान्धकारमपि निवारयति, यस्य सङ्केतो महाभारते कृतमस्ति[3]।

एवं संस्कृतसाहित्यस्येतिहासो यद्यपि प्राचीनानामाख्यानाना वर्णनं करोति तथापि आधुनिकेतिहासवत् तस्य क्षेत्रं सीमितं नास्ति, किन्तु विविधविषयकलोकव्यवहारशिक्षा प्रदाय मानवहृदयेभ्योऽज्ञानावरण-मपसार्य एकस्या अभिनवचेतनाया अपि प्रकाशं प्रददाति। एवमितिहास-पुराणयोर्विषयभेदेऽपि वायुपुराणमात्मानं पुरातनमितिहासं कथयति तथा महाभारतमितिहासः सन्नपि आत्मानं पुराणं प्रख्यापयति।[4]

---

१. इतिहासो भारतं च वाल्मीकं काव्यमेव च। ब्र० वै० १३१।२३।

२. परिक्रिया पुराकल्पः इतिहासगतिर्द्विधा।
स्यादेकनायिका पूर्वा द्वितीया बहुनायिका॥ का० मी० २।

३. इतिहासप्रदीपेन मोहवारणघातिना।
लोकगर्भगृहं कृत्स्नं यथावत् सम्प्रकाशितम्॥ अनुक्र० प० १।८७।

४. इमं यो ब्राह्मणो विद्वान् इतिहासं पुरातनम्।
शृणुयाच्छ्रावयेद्वापि तथाध्यापयतेऽपि च॥
स्थानेषु स महेन्द्रस्य मोदते शाश्वतीः समाः। वायुपुराण ४।१०३।४८३।
द्वैपायनेन यत् प्रोक्तं पुराणं परमर्षिणा।
सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम्॥ आ० प० १।१७।

अपि च पराशरनन्दनो भगवान् वेदव्यासो मनसि महाभारतं निर्माय तत्प्रचारोपायं चिन्तयन् सहसोपस्थितं ब्रह्माणं यदा निवेदयामास—भगवन् ! लोककल्याणार्थं मयैकं महाकाव्यं विरचितं, परन्तु अस्य लेखकः पृथिव्यां न कोऽप्युपलभ्यते। तदा तन्निशम्य विधिरादिष्टवान्—वत्स ! त्वयाऽत्मीया रचना काव्यमुक्तम्। आजीवनं ते ब्रह्मवादिनी वाणी मिथ्या नाभवदत इतः परमिदं काव्यनाम्ना प्रसिद्धिं यास्यति। मुनिवर ! एतस्य लेखनाय गणेशस्य स्मरणं कुरुष्व स एवास्य लेखको भविष्यति[1]।

इदमस्य तात्पर्यं यद् ब्रह्मणा व्यासदेवेन च महाभारतं काव्यमप्युक्तम्। एवमितिहासपुराणशब्दौ परस्परं प्रयुक्तौ भवत स्म। अत एव विद्वद्भिरेकं द्वितीयस्य पूरकं मन्यते। पुराणेतिहासशब्दौ कदाचिद् भिन्नेषु-भिन्नेषु अर्थेषु प्रयुज्येतेस्म, कदाचिच्चैकस्मिन्नेवार्थे उभयोः प्रयोगो भवतिस्म। अतो द्वयोः परिभाषाया न कश्चन भेदो लक्ष्यते। अमरसिंहेन अमरकोशे इतिहासस्य यल्लक्षणं कृतं वर्तते तदेव लक्षणं नीलकण्ठेन स्वकीयाया महाभारतटीकाया पुराणस्य कृते कृतो विद्यते। इतिहासः पुरावृत्तम् ( अ० को० १।५ ) पुराणं पुरावृत्तम् ( म० भा० टी० नी० क० १।५।१ ) एवं पुराणशब्दः द्वयोः पुराणेतिहासयोः कृतेऽपि प्रयुक्तः प्राप्यते। किञ्चिदपि आख्यानं रूपात्मकं भवेत् तथ्यात्मकं वा स्यात् परं पुराणं प्रोच्यते। अतः पुराणान्तर्गतं पुराणमितिहासाश्चोभौ

१ उवाच स महातेजा ब्रह्माणं परमेष्ठिनम्।
कृतं मयेदं भगवन् काव्यं परमपूजितम् ॥
परं न लेखकः कश्चिदेतस्य भुवि विद्यते।
जन्मप्रभृति सत्या ते वेद्मि गां ब्रह्मवादिनीम्।
त्वया च काव्यमित्युक्तं तस्मात् काव्यं भविष्यति ॥
अस्य काव्यस्य कवयो न समर्था विशेषणे।
काव्यस्य लेखनार्थाय गणेशः स्मर्यतां मुने। अनुक्र० प० १।६१-७३।

मन्येते। याज्ञवल्क्यस्मृतौ विद्याना स्थाननिर्देशप्रसङ्गे केवलं पुराणस्य गणनाऽस्ति, यत्रेतिहासस्याप्यन्तर्भावो मन्यते विद्वद्भि [1]।

गर्गसंहितायाञ्च महाभारतं पुराणान्तर्गतमभिमतमस्ति—यथा तिथिनामेकादशी, नागेषु शेषनागः, पक्षिणा गरुड. श्रेष्ठो गण्यते तथैव पुराणेषु महाभारतं श्रेष्ठमस्ति[2]। नारदीयपुराणानुसारं तु पुराणशब्दस्यार्थ. वहुव्यापकोऽस्ति। पुराण न केवलमितिहास-मेवास्ति, अपितु तत् मानवकल्याणकारकं समस्तं संस्कृतवाङ्मय-मात्मसात्कुर्वाण सर्वहितसाधनं साहित्यं वर्तते[3]।

एवं पुराणस्य विशाले वाङ्मये त्रयाणा पुराण-रामायण-महाभार-ताना समन्वयो जायते। महाभारतस्य श्लोकसंख्या एकं लक्षम्, पुराणाना श्लोकसंख्या चत्वारि लक्षाणि, रामायणस्य च श्लोकसंख्या पञ्चविंशतिः सहस्राणि, संकलनया सपादपञ्चलक्षश्लोकानामिदं विशालं साहित्यं पुराणनाम्ना प्रसिद्धमस्ति[4]।

एतदतिरिक्तानामष्टादशानामुपपुराणौपपुराणादीना यानि महा-पुराणाना परिशिष्टानि सन्ति तेषा संख्या सपादपञ्चलक्षात् पृथगस्ति। एवं पुराण वाङ्मयं विषय-विस्तारदृष्ट्या विश्वस्मिन्नस्मिन्नद्वितीयं वर्तते। परन्तु कौटिल्येन स्वकीयेऽर्थशास्त्रे पुराणाना गणना, इतिहा-सस्याभ्यन्तरे कृताऽस्ति। तस्यदृष्टौ इतिहासस्य क्षेत्रं पुराणक्षेत्रापेक्षयाति-विस्तृतमस्ति। अत एव तेन पुराणेतिवृत्ताख्यानोदाहरणधर्मशास्त्रार्थ-शास्त्राणि इतिहासस्याभ्यन्तरेऽभिमतानि—

पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रञ्चेतिहासः। (५।१४)

---

१. पुराण-न्याय-मीमासा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्याना धर्मस्य च चतुर्दश ॥ या० स्मृ० १।१३।

२. यथा तिथीना हरिवासरो हि यथाहि शेष. फणिना फणीन्द्रः।
यथा गरुत्मान् दिवि पक्षिणा च तथा पुराणेष्विह भारतं च ॥
ग० सं० गो० ख० ६।२१।२६।

३. शृणु वत्स ! प्रवक्ष्यामि पुराणाना समुच्चयम्।
यस्मिन् ज्ञाते भवेज्ज्ञातं वाङ्मयं सचराचरम् ॥ ना० पु० १।९२।२१।

४. एवं सपादाः पञ्चैते लक्षा मर्त्ये प्रकीर्तिता.।
पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः ॥ मत्स्यपुराणे ५३।७।

वस्तुतो मानवसमाजस्य स एवेतिहासः पूर्णः मन्तुं शक्यो यस्मिन् सृष्टेरारम्भकालत एव सृष्टिविकासस्य क्रमबद्धं विवरणमुपस्थापितं स्यात्, किन्तु आधुनिकैरितिहासलेखकैः प्रणालीयं सर्वथोपेक्षिताऽस्ति। परं महतो हर्षस्य विषयोऽस्ति यद् इंग्लेण्डस्थेन प्रसिद्धेन विदुषा एच०जी० विल्सनमहोदयेन स्वकीये ग्रन्थे[1] इतिहासस्वरूपस्य व्यवस्थापने पौराणिक्याः शैल्या एवानुसरणं कृतम्। तेन स्वकीये इतिहासे मानवसमाजस्येतिहासलेखनात् पूर्वं सृष्टेरारम्भकालत एव मानवविकासस्येतिहासो लिखितो वर्तते। वास्तविकरूपेण इतिहासलेखनस्यायमेव पौराणिकः प्रकारोऽस्ति।

## पौराणिक-सूत-परिचयः

पाश्चात्त्येषु विद्वत्सु सुप्रसिद्धस्य विदुषः पार्जिटरमहोदयस्य मतमस्ति यत् प्राचीनभारते ऐतिहासिकपरम्परा द्वयी प्रचलिताऽऽसीत्। एका वेदसंबद्धा द्वितीया च पुराणैः संबद्धाऽऽसीत्। तत्राद्याया: परम्परायाः प्रचारका ब्राह्मणा विद्वांस आसन्, किन्तु द्वितीयस्याः परम्परायाः प्रचारस्य श्रेयोऽब्राह्मणानां प्राप्तं आसीत्। अस्याः कल्पनाया आधारस्तेनाभिमतो-यत् पुराणानां प्रचारकः तथा व्याख्याता लोमहर्षणसूतः सूतजातौ समुत्पन्न आसीत्।[2]

एतदनुसारं प्रतिलोमविवाहद्वारा क्षत्रियाद् ब्राह्मणकन्यायां समुत्पन्ना सन्ततिः सूत इति नाम्ना व्यवह्रियते, यस्या कार्यं रथसञ्चालनादिकं वर्तते। सूतस्यान्यकार्येषु पुराणप्रवचनमपि एकं कार्यमासीत्। अस्य मतस्यानुयायिनो जना सूतोपाधिधारिणं लोमहर्षणमेतन्निकृष्टवर्णसङ्करजातिकं मन्यन्ते। यदि स एव पुराणानां प्रथमः प्रचारकोऽस्ति तर्हि एतत्स्वीकारणमनुचितं न स्याद् यत् पुराणानां प्रचारकार्येऽब्राह्मणानामधिकार आसीत्।

किन्तु सावधानतया समीक्षायां क्रियमाणायां पार्जिटरमहोदयस्येयं कल्पना नितान्तं निराधारा निर्मूला अप्रामाणिकी च सिध्यति। येन

---

१. आउट लाइन आफ हिस्ट्री पृ० १।

२. क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः। मनुस्मृतिः १०।११।

लोमहर्षणेन नैमिषारण्यक्षेत्रे समवेताना ८८००० सहस्राणामृषीणा जिज्ञासापूर्ति. कृता, स सूतोऽवश्यं कथ्यतेस्म, किन्तु स उच्चकुलोत्पन्नो ब्राह्मणो ज्ञानी महाविद्वान् समादरणीयश्चासीत् । सूतनामकरणस्य कारणमिदमासीद् यत् स वेनपुत्रस्य महाराजस्य पृथो र्यज्ञेऽग्निकुण्डादुत्पन्न आसीत् । अग्निकुण्डे प्रसूतात् स संक्षेपतो जनै सूत इति व्यवह्रियतेस्म । अत. सूतस्तस्योपाधिरासीन्नतु स मनुस्मृत्याधारेण क्षत्रियाद् ब्राह्मणकन्यायामुत्पन्नो सूतजातीयो नासीत् ।

वायुपुराणे सूतस्य प्रामाणिकोत्पत्तिवर्णनप्रसङ्गे प्रोक्तमस्ति । यद् वेनपुत्रस्य महाराजस्य पृथो यज्ञावसरेऽग्निकुण्डात्सूत समुत्पन्न. । देवताना राजत्वादिन्द्रस्य संज्ञा क्षत्रिय इत्यस्ति तथा देवाना गुरुत्वाद् बृहस्पतिर्ब्राह्मणोऽभिमन्यन्ते । होतु प्रमादादिन्द्राय दीयमानेन हविषा सह बृहस्पतेर्हविषो मिश्रणा ज्ञातम्, तस्याहुतौ सूतोऽग्निकुण्डात् समुत्पन्न । एवं व्यत्ययेन उत्पन्नत्वात् सूतो वर्णसङ्कर. प्रोक्तोऽस्ति । स मनुस्मृत्याधारेण वर्णसंकरजातौ नोत्पन्न आसीत् ।[1]

ब्रह्मपुराणेऽप्युक्तमस्ति यद्यदा पृथोर्यज्ञावसरे सूतमागधौ यज्ञकुण्डात् समुत्पन्नौ । तदा ऋषिभि स्वसमीपे समाहूय तावुक्तौ यन् महाराजस्य पृथो स्तुति युवा कुरुतम् । इदं स्तुतिकार्य युवयोरनुरूपमस्ति, अयञ्च सर्वथा स्तुतियोग्योऽस्ति । ततस्ताभ्यामुक्तं यदावा देवर्ष्यादीनमवश्यं स्वकर्तव्यै· सन्तोषयितुमुद्यतौ स्वः, परमस्य तेजस्विनो राज्ञ गुणस्वरूपमवा न जानीवहे । ततः ऋषिभिस्तावाज्ञप्तौ यद् अस्य भविष्यस्य स्तुति कुरुतं युवाम्, यानि कर्माणि स पश्चात् पूरयिष्यति । तदनुसारं तावुभौ तेषा महर्षीणामाज्ञां शिरोधार्य राज्ञ. पृथोः भविष्यस्य स्तुतिं चक्रतुः । तत्कालादेव सूतमागधवन्दिभिः स्तुतिरूपेणाशीर्वादा. प्रदीयन्ते । तत.

---

१. वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः ।
सुत्यायामभवत् सूतः प्रथमं वर्णवैकृतम् ।।
इन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः ।
जुहावेन्द्राय दैवेन ततः सूतो व्यजायत ।।
प्रमादात्तत्र संजज्ञे प्रायश्चित्ता च कर्मसु ।
शिष्यहव्येन यत्पृक्तमभिभूतं गुरोर्हविः ।
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृत· ।। वायुपुराणे ६२।४२-४३ ।

यास्वस्तुत्या प्रसन्नो भूत्वा महाराजः पृथुः सूतायानूपदेशं मागध च मगधदेशं प्रादात्।[1]

एवमेवाक्षरशो वर्णनं वायुपुराणस्योपोद्घातपादे ६२ अध्याये १३६-१५२ श्लोकैरुपलभ्यते। विष्णुपुराणस्य प्रथमेऽशे १३ अध्याये पृथुचरित्रावसरेऽग्निकुण्डात्सूतस्योत्पत्ति निर्देशता भगवता व्यासेनोक्तं यत् ऋषिभिर्दत्तं सूतमागधाभ्या स्वभविष्यस्य स्तवादेशं श्रुत्वा पृथुना चिन्तितम् यत् मनुष्य. सद्गुणैरेव प्रशंसापत्रं भवति। अतो मयाऽपि सद्गुणा अर्जनीयाः। आभ्या स्तुतिद्वारा येषां कर्मणां वर्णनं करिष्यते अहमपि सावधानतया तथैव करिष्यामि। तदनन्तरं ताभ्यां तस्य भाविकार्याणामाश्रयणात् सम्यक् स्तुवद्भ्यामुक्तं यदयं महाराजः सत्यवादी दानशीलो मर्यादापालको लज्जाशील. क्षमावान् पराक्रमी दुष्ट-दलनकर्ता चास्ति। तथा चायं धर्मज्ञ. कृतज्ञो, दयावान् मितभाषी मुनी-नामानक. यज्ञपरायणः ब्रह्मण्य साधुसमाजसम्मानित. तथा व्यवहारिक-

---

१. तस्मिन्नेव काले तु यज्ञे पैतामहे शुभे।
सूत.सूत्यां समुत्पन्नः सौतेऽहनि महामतिः॥
तस्मिन्नेव महायज्ञे यज्ञे प्राज्ञोऽथ मागधः।
पृथोस्तवार्थं तौ तत्र समाहूतौ महर्षिभिः॥
तावुचु ऋषयः सर्वे स्तूयतामेष पार्थिव.।
कर्मैतदनुरूपं वा पात्रं चैव नराधिपः॥
तावुचतुस्तदा सर्वांस्तानृषीन् सूतमागधौ।
आवा देवानृषीश्चैव प्रीणयामः स्वकर्मभिः॥
न चास्य विद्मो वै कर्म नाम वा लक्षणं यशः।
स्तोत्रं येनास्य कुर्यावो राज्ञस्तेजस्विनो द्विजाः॥
ऋषिभिस्तौ नियुक्तौ तु भविष्यै. स्तूयतामिति।
यानि कर्माणि कृतवान् पृथुः पश्चान्महायशाः॥
ततः प्रभृति वै लोके स्तवेषु मुनिसत्तमाः।
आशीर्वादाः प्रयुज्यन्ते सूतमागधवन्दिभिः॥
तयोः स्तवान्ते सुप्रीतः पृथुः प्रादात् प्रजेश्वरः।
अनूपदेश सूताय मागधं मागधाय च॥ ब्रह्मपुराणे ४।६०-६७।

दृष्ट्या साधुषु मित्रेषु च समस्वभावो वर्तते। एवं प्रकारं सूतमागधद्वारा वर्णिता गुणा राज्ञा पृथुना धृताः ,तदनुसारं कार्यं च कृतम् ।[1]

अन्यच्च भविष्यपुराण हि ब्राह्मणद्वारा पठितस्य पुराणश्रवणस्याधिकारं प्रददाति, किन्तु न स्वयं शूद्रस्य पठनाधिकारं ददाति । अत पार्जिटरमहोदयस्यानर्गलप्रलापं को वा विद्वान् स्वीकर्तुं शक्नोति ? नच तस्यास्ति विद्वत्समाजे किमपि मूल्यम् ।[2]

अग्निपुराणमपि पृथोः यज्ञेऽग्निकुण्डादेव सूतमागधयोरुत्पत्ते स्पष्टरूपतया समर्थनं करोति ।[3] कूर्मपुराणे ब्रह्मणः प्रेरणया पृथुद्वाराऽनुष्ठीयमाने यज्ञे मायाश्रयं कृत्वा श्रीहरिः धर्मज्ञ-सर्वशास्त्र-प्रवक्तृ-गुरुभक्त-पौराणिकसूतरूपेणाविर्बभूवेति चर्चास्ति ।[4] नैमिषारण्ये महर्षिभि. कूर्मपुराणस्य प्रवचनं कर्तुं प्रार्थनां कुर्वद्भि. सूतस्य परिचयमेवं प्रदत्तम् ।[5] एवं स्वयं नारायण कूर्मपुराणप्रवचनाय सूतरूपेणावतीर्ण आसीत् ।

लोमहर्षणस्य सूतस्य सूनुरुग्रश्रवा अपि पुराणाना व्याख्याता वद्वानासीत् । यः सौतिरुक्तो महाभारते—लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे ( आ० प०

---

१. सूतः सूत्या समुत्पन्नः सौतेऽहनि महामतिः ।
तस्मिन्नेव महायज्ञे यज्ञे प्राज्ञोऽथ मागधः ॥
सूतेनोक्तान् गुणानित्थं स तदा मागधेन च ।
चकार हृदि तादृक् च कर्मणा कृतवान् स वै ॥ वायुपुराणे १।१३।५१-६४ ।

२. अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना ।
श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन ॥ ( प्र० स० प० ६।५ )

३. तस्माच्च समुत्पन्नौ निपुणौ सूतमागधौ ।
तत्स्तोत्रं चक्रतुर्वीरौ राजाभून्नररञ्जनात् ॥ अग्निपुराणे १८।१५ ।

४. नियोगाद् ब्रह्मणः सार्द्धं देवेन्द्रेण महौजसा ।
वेनपुत्रस्य वितते पुरा पैतामहे मखे ॥
सूतः पौराणिको यज्ञे मायारूपः स्वयं हरिः ।
प्रवक्ता सर्वशास्त्राणा धर्मज्ञो गुरुवत्सलः ॥ कू० पू० १४।१२-१३ ।

५. त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते सति ।
सम्भूतः संहिता वक्तुं स्वांशेन पुरुषोत्तमः ॥ कू० पु० पू० १।६ ।

४।१ ) स च राज्ञः परोक्षित. पुत्रं जनमेयं हरिवंशं श्रावयामास। यथा द्रोणस्यापत्यं पुमान् द्रौणिर्दशरथस्यापत्यं दाशरथि कथ्यते तथैव सूतस्यापत्यं पुमान् सौतिरुच्यते। अतो लोमहर्षणसूतस्य पुत्रत्वादुग्रश्रवा अपि सौतिरुक्तोऽस्ति। सौतिशब्दस्य व्याकरणव्युत्पत्तौ ध्याने दीयमाने स्पष्टं प्रतीयते यदत्र सूतो व्यक्तिवाचक. शब्दोऽस्ति न चास्ति स जातिवाचकशब्दः, यतो हि 'अत इञ् ४।१।९४' इति पाणिनीयसूत्रद्वारा व्यक्तिवाचकात् शब्दादेव इञ् प्रत्ययो जायते, न तु जातिवाचकात् शब्दादपि इञ् प्रत्ययो भवति। अतो ब्राह्मणजातौ उत्पन्ना व्यक्तिर्ब्राह्मण एव कथ्यते न तु ब्राह्मणि.। अतो लोमहर्षणसूतव्यक्तेरुत्पन्नत्वात्, उग्रश्रवाः सौतिरुच्यते इति हरिवंशटीकाया स्पष्टमुक्तमस्ति—अग्निजो लोमहर्षणः। तस्य पुत्रः सौतिरुग्रश्रवा., न तु ब्राह्मण्या क्षत्रियात् सूतः इति स्मृत्युक्तः। तद्धितानर्थक्यापत्तेः ॥१।४॥ अत एव पौराणिकाना डिण्डिमघोषोऽस्ति—अग्निकुण्डसमुद्भूतः सूतो निर्मलमानस.। महाभारतस्य प्रसिद्धटीकाकर्तुर्नीलकण्ठस्य तथा श्रीमद्भागवतस्य व्याख्यातु. श्रीधरस्वामिनश्चापि स्पष्टं मतमस्ति यत् पुराणप्रवक्ता सूतो ब्राह्मण एवासीत्।

कौटिल्येन स्वकीयेऽर्थशास्त्रे शङ्करजातीनामुत्पत्तिवर्णनप्रसंगे लिखितमस्ति, यद् वैश्यान्मागधवैदेहकौ (क्षत्रियाब्राह्मण्योः) क्षत्रियात् (ब्राह्मण्या) सूतः। पौराणिकस्तु अन्यः सूतो मागधश्च। ब्राह्मणात् क्षत्राद्वा विशेषः।

( ३।७।२९-३१ )

अस्यायं निकर्षोऽस्ति यत् कौटिल्यदृष्टौ वैश्यजातिपुरुषात् क्षत्रियजातिस्त्रियामुत्पन्ना प्रतिलोमजवर्णशङ्करसन्ततिः मागध उच्यते तथा वैश्याद् ब्राह्मण्यामुत्पन्नो वैदेहकः प्रोच्यते, पौराणिकौ सूतमागधौ तु इतो भिन्नौ ब्राह्मणक्षत्रियाभ्या श्रेष्ठौ स्तः। अनयो. सूतजातितो न कोऽप्यस्ति सम्बन्धः। अत एव भ्रमवशान् नैमिषारण्ये व्यासासने कथा कथयति लोमहर्षणे सूते हते बलरामस्य ब्रह्महत्या जाता यन्निवारणार्थं तेन प्रायश्चित्तस्वरूपं भारतस्य सम्पूर्णेषु तीर्थेषु यात्रा कृता। तदुक्तं तत्रत्यैः ऋषिभिः—

अजानता वाचरितस्त्वया ब्रह्मवधो यथा।
योगेश्वरस्य भवतो नाम्ना योऽपि नियामकः ॥[1]

---

१. श्रीमद्भागवते १०।७।३१।

पुराणेषु क्वचित् क्वचित् सूतस्य प्रतिलोमजकथनरहस्यमिदमस्ति यद् महाराजस्य पृथोः यज्ञे इन्द्राहुत्या बृहस्पतेराहुतेरभिभूततया लोमहर्षणस्य सूतस्योत्पत्त्या वर्णवैजात्यं जातम्। यज्ञीयपरिभाषानुसारं बृहस्पतिरस्ति ब्राह्मणः, इन्द्रश्च क्षत्रिय उच्यते। एतदभिप्रायेणैव बृहन्नारदीये पुराणे स्वयं सूत आत्मानं विलोमजमुक्तवान्।[1]

वस्तुतो लोमहर्षणः सूतस्तु योनिजो नासीत् तथापि तस्मिन् प्रतिलोमजो लाक्षिणक. प्रयोगोऽस्ति। वास्तविकरूपेणेदमस्ति तत्त्वमत्र यद् भगवान् व्यासो लोमहर्षणं सूतमितिहासपुराणमध्याप्य तत्प्रचाराय प्रसाराय च तमेव नियुक्तवानासीत्, यतो हि स ज्ञानी महाविद्वानग्निकुण्डात् प्रसूतो ब्राह्मणजातीय एवासीत्। ब्राह्मण एव पौराणिको भवितुमर्हतीत्यस्य स्पष्टमुल्लेखोऽग्निपुराणे वर्तते।[2]

एभि. प्रमाणैः यदि सूत उच्चकोटिको विद्वान् तथा ब्राह्मण सिध्यति तर्हि पार्टिजरसाहबस्येदं कथनं कथंकारं स्वीकर्तुं शक्यते यदब्राह्मणद्वारा पुराणानां प्रचारो जात इति।

वस्तुत. पुराणेषु सूताना कार्यस्य तथा क्षेत्रस्य मिश्रणं जातमस्ति। प्राचीने भारते सूत. प्रतिलोमजा जातिरासीद्। या मनुस्मृत्यनुसारं प्रतिलोमविवाहकारणात् क्षत्रियाद् ब्राह्मणकन्यायामुत्पन्ना व्यक्तिरासीत्। इतो भिन्नः सूतशब्दस्य प्रयोगो रथचालकायापि भवतिस्म। वायुपुराणे च सूतो देवर्षिराजर्षीणाञ्च वंशज्ञाता प्रोक्तोऽस्ति।[3]

गर्गसंहितायान्तु पौराणिकः सूत., वंशप्रशंसको मागध तथा प्रसङ्गानुसारं वक्ता विशुद्धबुद्धिर्वन्दी प्रोक्तोऽस्ति।[4]

---

१. विलोमजोऽपि धन्योऽस्मि यन्मा पृच्छथ सत्तमाः। ( बृ० ना० २।५ )

२. पृषदाज्यात्समुत्पन्न. सूतः पौराणिको द्विजः।
वक्ता वेदादिशास्त्राणा त्रिकालानल धर्मवित्॥ ( १५७।७९ )

३. स्वधर्म एव सूतस्य सद्भि दृष्टः पुरातनै।
देवाना च ऋषीणा च राजा चामिततेजसाम॥
वंशाना धारणं कार्यं श्रुताना च महात्मनाम्। ( वायुपुराणे १।१।३२ )

४. सूताः पौराणिकाः प्रोक्ताः मागधा वंशशंसकाः।
बन्दिनस्त्वमलप्रज्ञा. प्रस्तावसदृशोक्तय.॥ (ग०सं०गो० खण्ड १२।३६)

राज्ञामृषीणाञ्च वंशावल्या सुरक्षाया उत्तरदायित्वं न केवलं सूते एव सीमितमासीत्, अपितु हरिवंशस्यारम्भे विस्तरतो वृष्णिवंशं कथयितुं प्रार्थयन् जनमेजय. सिद्धवक्तारं वैशम्पायनं वंशकुशलं राज्ञा वंशप्रत्यक्ष-दर्शिनमपि कथयति।[1]

आत्मनोऽध्ययनस्य परम्परा व्यञ्जयता उग्रश्रवसा सूतेनोक्तं यद् अद्भुतकर्मशीलेन महर्षिणा वेदव्यासेन चतुर्लक्षश्लोकेषु निबद्धानि अष्टादश महापुराणानि मर्त्यलोकस्य प्राणिना कल्याणाय मम पितरं लोमहर्षणसूतं प्रति कथितानि आसन् मम पिता च तान्येव पुराणानि मामध्यापयामास। साम्प्रतमहं तानि पुराणानि युष्मान् श्रावयामि, यानि भवद्भि. मम पितु र्मुखाच्छ्रुतानि आसन्[2]।

एतेन स्पष्टं प्रतीयते यद् राजगृहसम्पर्के स्थितेषु विद्वत्सु ब्राह्मणेष्वपि देवर्षिराजवंशाना क्रमज्ञानस्योत्तरदायित्वमासीत्।

**उपकुलपतेः शौनकस्य परिचयः**

लोमहर्षणसूतस्य पुत्रः उग्रश्रवा सौति पुराणाना ज्ञाता वक्ता तथा महान् कथाकुशलो विद्वानासीत्। तेन पुराणविद्याया महान् परिश्रमः कृत आसीत् तथा तेन स्वपितुरेव पुराणानामध्ययनं कृतमासीत्। एकस्मिन्नहनि स नैमिषारण्ये द्वादशवर्षैः सम्पद्यमाने सत्रे यदा महर्षय. दैनिकं कृत्यं समाप्य विश्रामं कुर्वाणा आसन् तदा विनीतभावेनोपस्थायाञ्जलि बद्ध्वा तान् नैमिषारण्यवासिनो मुनीन् अभिवाद्य कुशलप्रश्नानन्तरं प्रोवाच— महर्षय.। भवन्त· कि श्रोतुमिच्छन्ति। अहं कस्मिन् प्रसंगे प्रवच्मि। तच्छ्रुत्वा तैरुक्तम्—लोमहर्षणकुमार! पूज्यपाद कुलपति शौनक साम्प्रतमग्न्युपासनाया संलग्नो वर्तते। स हि देवासुरसम्बन्धिनीर्बह्वी कथा जानाति। मनुष्य-नाग-गन्धर्वाप्सरसा कथाभिः स पूर्णपारितोऽस्ति। स श्रुति-स्मृति-पुराणेतिहासनामाचार्य एवास्ति। स हि सर्वेषामस्माकं सम्माननीयो विद्यते। अतो यावत् स नायाति तावद् भवता विश्रामो विधेयः। तस्मिन् समागते स यत् प्रक्ष्यति तमेव प्रसंग-

१ भवाश्च वंशकुशलस्तेषा प्रत्यक्षदर्शिवान्।
कथयस्व कुलं तेषा विस्तरेण तपोधन। (हरिवंश पर्वणि १।१६)

२ चतुर्लक्षमिदं प्रोक्त व्यासेनाद्भुतकर्मणा।
मम पितु र्मम पित्रा च मया तुभ्यं निवेदितम्॥
इहलोके हितार्थाय सक्षिप्तं परमर्षिणाम्। (वा० पु० ५१।७३)

मादाय भवता स्वं प्रवचनं प्रारब्धव्यम्। तत एवमस्तु—इत्युक्त्वा स सौति विश्रामं कर्तुमारब्धवान्।

तदनन्तरं मुनिकुलमणिर्विप्रशिरोमणि महामुनि शौनकः क्रमश. समस्तानि यज्ञकर्माणि विधिवत् सम्पाद्य तत्र स्थाने समागतो यत्रोत्तम-व्रतधारी महर्षिगणो यज्ञमण्डपे उग्रश्रवस सौते· समीपे विराजमान आसीत्। तस्मिन् समागते तै ऋषिभि तस्याभ्युत्थानं कृत्वा तस्मिन्नु-पविष्टे स्वस्वासने समुपविष्टम्। तदनन्तरं शौनकोऽब्रवीत्—तात! पुरा भवत. पितृपादै सर्वेषा पुराणाना विधिवदध्ययनं कृतमासीत्. किं भवताऽपि तेषा समेषा विधिवदध्ययनं कृतं वर्तते? पुराणेषु विपुला दिव्या कथाः कथिता विद्यन्ते, धार्मिकाणा राजर्षीणा तथा तप पूताना महर्षीणा च वंशा अपि वर्णिता सन्ति, ये चास्माभि भवतः पितु श्रीमुखाच्छ्रुता. सन्ति। इदानी तेषु भवतो मुखारविन्दात् सर्वप्रथमं विश्व-विख्यातं भृगुवंशवर्णनं श्रोतुमिच्छामो वयम्। अत कृपया भवता साम्प्रतं तत्सम्बद्धा एव कथा कथनीया। वयं सर्वे भवत कथा श्रोतुमुद्यताः स्मः। इदं सर्वं निशम्य उग्रश्रवसा सौतिना विशुद्धान्त.करणाना तेषा मुनीना तस्या विशालाया सभायामित्थं प्रोक्तम्—भृगुनन्दन! वैश्वम्पायनादिभिः श्रेष्ठै ब्राह्मणैः यानि पुराणानि सम्यक् पठितानि तथा तैः यादृशं तेषा पुराणाना वर्णन कृतमस्ति तत्सर्वं मया ज्ञातमस्ति। मम पित्रा च यस्याः पुराणविद्याया अध्ययनं कृतमासीत्, सा मयाऽपि तत एव पठिता, तथा श्रुता चास्ति। भवद्भिरादौ तस्य भृगुवंशस्य वर्णनं श्रोतव्यं यो हि देवर्षिभी राजर्षिभि र्मरुद्गणैश्च प्रशंसितोऽस्ति, तथा पुराणाश्रयेण संयुक्तोऽस्ति। मया श्रुतमस्ति यत् स्वयम्भुवा ब्रह्मणा वरुणस्य यज्ञे महर्षि र्भृगुरग्नितः समुत्पादित आसोदतो महर्षि. भृगुर्महान् तेजस्वी महर्षिजातो[1]।

महर्षेर्भृगोराश्रमः तस्य पश्चिमसमुद्रस्य तटे वर्तमान आसीद् यत्र नर्मदानदी समुद्रेण मिलति, यस्य प्राचीनं नाम भृगुकच्छ आधुनिकं च नाम भडौच इति विद्यते, योहि गुर्जरप्रान्ते सूरतेनगरसमीपेऽस्ति। महर्षे र्भृगो द्वे भार्ये आस्ताम्—एका दिव्या द्वितीया च पुलोमा। तत्र दिव्याया.

---

१. भृगुर्महर्षि र्भगवान् ब्रह्मणा वै स्वयम्भुवा।
वरुणस्य क्रतौ जातः पावकादिति नः श्रुतम्॥ मा० भा० आ० प० ५।७।

पुत्र आसीत् शुक्राचार्यस्तथा पुलोमाया पुत्र आसीत् महर्षिश्च्यवनः। इक्ष्वाकुपुत्रेणशर्यातिना स्वकीयायाःसुशीलाया कन्यायाःसुकन्याया विवाहश्च्यवनेन मुनिना सह कृतः, या हि स्ववैद्यावश्विनीकुमारौ स्वपातिव्रत्येन सन्तोष्य तयोरनुकम्पातश्च्यवनंमुनिं यौवनं प्रापितवती। च्यवनात् सुकन्याया प्रमतिः प्रादुर्भूतः, येन घृताच्या अप्सरसा सह विवाहं कृत्वा रुरुनामकः पुत्र उत्पादितः। रुरोः पत्नी जाता प्रमद्वरा, यस्या गर्भतः शुनकः समुत्पन्नः। अस्यैव शुनकस्य पुत्रो जातो महर्षि शौनकः, येन महाभारतकथा कथयितुमुग्रश्रवसं सौतिं प्रार्थयामास। तदनुसारं तेन महत्या प्रसन्नतया तदुत्तमतमं महाभारताख्यं महाख्यानम् ( इतिहासम् ) आदित एव उपक्रम्य कथितं यत् कृष्णद्वैपायनस्य महर्षे व्यासस्य परममभिप्रेतमस्ति[1]।




१. हन्त ते कथयिष्यामि महदाख्यानमुत्तमम्।
कृष्णद्वैपायनमतं महाभारतमादितः॥ म० भा० आ० प० ५९।६।

## व्यास वंश-परम्परा

विभज्य वेदं च तदर्थजातं चक्रे परामृश्य पुनः पुराणम् ।
तदीयमर्थञ्च विकृष्य चक्रे यो भारतं तत्र मनो ममास्ताम् ॥

द्वापरे युगे महर्षि व्यास पराशरमुनिद्वारा निषादराजस्य पोष्यपुत्र्या राज्ञ उपचीरवसोर्वीर्यजाया मत्स्यगन्धाया नाम्ना च सत्यवत्या भगवतो विष्णोरंशेन समुत्पन्न आसीत् । तस्य जन्म यमुनानद्या वदरदरीप्राये द्वीपे जातत्वाद् द्वैपायनो वादरायणो वेदाना विस्तारकरणाद् वेदव्यास कृष्णवर्णत्वाच्च कृष्णद्वैपायनोऽभवत्—

द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जात पराशराद् योगी व्यासव्या कलया हरे.[१] ।
पराशस्य वीर्येण पुत्रमेकमवाप्स्यसि ।
द्वीपे तु वदरोप्राये वादरायणमच्युतम्[२] ॥
द्वीपे जातो यतो वालस्तेन द्वैपायनोऽभवत् ।
वेदशाखाविभजनाद्वेदव्यासः प्रकीर्तितः[३] ॥
द्वापरान्तेषु विश्वात्मा विष्णुर्विश्वम्भर प्रभु ।
व्यासनाम्ना चरत्यस्मिन्नवतीर्य महीतले ॥
स पुनर्द्वापरे चास्मिन् कृष्णद्वैपानाख्यया ।
अरण्यामिव हव्याशी सत्यवत्यामजायत ॥
संक्षिप्य स पुनर्वेदाश्चतुर्धा कृतवान् मुनिः ।
वेदव्यस्ततया लोके वेदव्यास इति श्रुत.[४] ॥

( शि० पु० वा० सं० १।३४-३६ )

वीर्यं तेजो वलं चाल्यं मनुष्याणामवेक्ष्य च ।
हिताय सर्वलोकाना वेदभागान् करोति स.[५] ॥
पराशरात् शतवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभागो वेद चक्रे चतुर्विधम्[६] ॥
विष्णवशसम्भवो व्यास इति पौराणिका जगु ।

---

१. श्री० भा० १।४।१४ ।
२. म० पु० १४।१५ ।
३. दे० भा० २।३।४१ ।
४ शि० पु० उ० सं० ४४।४४ ।
५. वि० पु० ३।३।६ ।
६. श्री० भा० १२।६।४९ ।

द्वापरे द्वापरे विष्णुर्व्यासरूपेण सर्वदा ।
वेदमेकं तु बहुधा कुरुते हितकाम्यया ॥
अल्पायुषोऽल्पबुद्धीश्च विप्रान् ज्ञात्वा कलावथ ।
पुराणसंहिता पुण्या कुरुतेऽसौ युगे युगे[१] ॥
द्वीपे न्यस्ततया वालस्तस्माद्द्वैपायनोऽभवत् ।
जातमात्रो जगामाशु वृद्धिं विष्ण्वंशयोगत. ॥
एवं द्वैपायनो यज्ञे सत्यवत्या पराशरात् ।
चकार वेदशाखाश्च प्राप्तं ज्ञात्वा कलेर्युगम् ॥
वेदविस्तारकरणाद् व्यासनामाऽभवन्मुनिः ।
पुराणसंहिता चक्रे महाभारतमुत्तमम्[२] ॥
अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानममलं चक्रे तदुपबृंहितम्[३] ॥
पुराणकर्ता पुत्रस्ते भविष्यति वरानने ।
वेदविद् भागकर्ता च ख्यातश्च भुवनत्रये[४] ॥
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः[५] ॥
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनि ।
महाभारतमाख्यानं कृतवानिदमुत्तमम्[६] ॥

कूर्मपुराणे कृष्णद्वैपायनो व्यास. साक्षाद् विष्णुः प्रोक्तोऽस्ति ।[७] कौरवपाण्डवाभ्यां सह भगवतो व्यासस्य निकटतम. सम्बन्ध आसीत् । अस्यैव कृपया धृतराष्ट्रस्य पाण्डो. ज्ञानिनो विदुरस्य चोत्पत्तिरजनि । स समये समये स्वयं समुपस्थाय पाण्डवेभ्य सदुपदेशं प्रदाय धैर्यं धत्तुं शिक्षयतिस्म । स हि महाभारताद् युद्धाद् विरतये कौरवान् बहुशो बोधितवान्, किन्तु तैर्दुर्बुद्ध्या तदुपदेशो नाभिमत· । जन्मान्तरीयकथाप्रबोधनद्वारा तस्य प्रयत्नेन द्रौपद्या पञ्चभि. पाण्डवै सह पञ्चसु दिनेषु विवाहो जात । एवं भगवान् व्यास एक सत्पक्षपाती महान् व्यक्तिरासीत् ।

१. देवी० भा० १।३।१९-२० । २ देवी० भा० २।२।४१-४४ ।
३. म० पु० ५३।६९ । ४ देवी० भाग० २।३।३४ ।
५. म० भा० आ० प० १।५४ । ६ म० भा० आ० प० ६२।५२ ।
७ कृष्णद्वैपायनः साक्षाद् विष्णुरेव न संशय· ।
को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ॥ पू० ३०।६७ ।

भगवतो व्यासस्य जनक: पराशरो मुनिस्तथा पुत्रोऽमलात्मा श्रीशुकदेवमुनिरपि पुराणाना प्रचारे प्रसारे च महान्तं सहयोगं दत्तवन्तौ। मैत्रेयमुनेः प्रश्नानन्तरं पराशरेण मुनिना तमुद्दिश्यं विष्णुपुराणस्य प्रवचनं कृतम्।[1] अमलात्मना महामुनिना श्रीशुकाचार्येणापि ब्रह्मशापसन्तप्तं समुद्विग्नमनसं राजानं परीक्षितं श्रीमद्भागवतसप्ताहं श्रावयित्वा तदज्ञानं दूरीकृतम्, येनोपकृत स स्वयं राजा परीक्षित् सञ्जातज्ञान. सन् साञ्जलिरुक्तवान्—

एतन्निशम्य मुनिनाऽभिहितं परीक्षिद् व्यासात्मजेन निखिलात्मदृशा समेन।
तत्पादमूलमुपसृत्य नतेन मूर्ध्ना बद्धाञ्जलिस्तमिदमाह स विष्णुरातः॥

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना।
श्रावितो यच्च मे साक्षादनादिनिधनो हरिः॥
अज्ञानञ्च निरस्तं मे ज्ञानविज्ञाननिष्ठया।
भवता दर्शितं क्षेमं परं भगवतः पदम्[2]॥

वस्तुत पुराणाना प्रणयनस्य श्रेय स्वयं भगवतो व्यासस्यास्ति, प्रवचन-प्रचार-प्रसाराणा श्रेयस्तत्पितु पराशरमुनेस्तथा पुत्रस्य श्रीशुकदेवस्यास्ति। अतो व्याकरणस्य त्रिमुनिवत् पुराणस्यापि त्रिमुनित्वमिति कथनमनुचितं नास्ति। श्रीव्यासस्य वंश इयान् निर्मल परोपकारी विद्यावदातो ज्ञानविज्ञानसम्पन्नश्च विद्यते, यस्य चर्चा संस्कृतवाङ्मयस्य प्रतिशाखं जाताऽस्ति। महर्षिर्वसिष्ठस्तु स्वयं लोकपितामहस्य ब्रह्मणो मानस पुत्रएवास्ति। अस्मात् सत्यामरुन्धत्या श्रेष्ठ शक्तिमुनिर्जात.। शक्तेरदृश्यन्त्या पराशरमुनिर्जन्म लेभे। पराशराद् योजनगन्धाया नाम्ना काल्या (सत्यवत्या) भगवान् व्यासदेव. समुत्पन्न.। व्यासमुनेररण्या महाज्ञानी अमलात्मा श्रीशुकदेवमुनिर्जात. —

अरुन्धत्या वशिष्ठस्तु सुतानुत्पादयच्छतम्।
ज्यायसोऽजनयच्छक्तेरदृश्यन्ती पराशरम्॥
काली पराशराज्जज्ञे कृष्णं द्वैपायनं प्रभुम्।
द्वैपायनो ह्यरण्याञ्च शुकमुत्पादयत् सुतम्[3]॥

---

१ सोऽहं वदाम्यशेषं ते मैत्रेय परिपृच्छते।
पुराणसंहिता सम्यक् तां निबोध यथातथम्॥ वि० पु० १।१।३०।

२ श्री० भा० १२।६।१-७। ३ लिं० पु० पू० ६३।८३-८४।

एवं महर्षिर्वेदव्यासो वसिष्ठस्य प्रपौत्रः शक्ते पौत्र पराशरमुनेः पुत्र. श्रीशुकदेवस्य च जनकोऽस्ति, यस्य वन्दनायामधस्तन. श्लोक एव पर्याप्तोऽस्ति, महाभारतस्त शान्तिपर्वणो मोक्षधर्मेऽपि—

वसिष्ठस्य सुत शक्ति. शक्तेः पुत्रः पराशर ।
पराशरस्य दायादः कृष्णद्वैपायनो मुनि. ॥ ३४९।७
व्यासं वसिष्ठनप्तार शक्ते पुत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतात तपोनिधिम् ॥

एवम्भूतस्य परमपवित्रस्यापूर्वप्रतिभासम्पन्नस्य महात्मनो ज्ञानाब्धि-रत्नशिरोमणेर्विद्वत्कुलमणे महाज्ञानिनोऽवतारिणो महर्षेर्भवतो व्यासदेवस्य परिचयदानं मानवबुद्धे परं विद्यते। भगवान् सूतोऽप्यस्य परिचयमेवं दत्तवानस्ति।[1]

महर्षिर्व्यासो हि चतुर्लक्षात्मकमष्टादशभागेषु विभक्तमतिविशालं पुराणसाहित्यं निर्माय ज्ञानवैराग्यसम्पन्नमरण्यामुत्पन्नं महाप्रभाव-मात्मजं श्रीशुकदेवाचार्यमध्यापयामास। अद्भुतबुद्धिनाऽयोनिजेन तेन सूतेन सादरं पृष्ट स समस्तं पुराणगुह्यमुक्तवानिति मया साक्षाच्छ्रुतम्—

व्यासेन कृत्वातिशुभं पुराण शुकाय पुत्राय महात्मने यत् ।
वैराग्ययुक्ताय च पाठित वै विज्ञाय चैवारणिसम्भवाय ॥
सुतेन पृष्ट सकलं जगाद द्वैपायनस्तत्र पुराणगुह्यम् ।
अयोनिजेनाद्भुतबुद्धिना वै श्रुत मया तत्र महाप्रभावम्[2] ॥

पद्मपुराणे यथा स्वर्लोके देवाना मध्ये इन्द्रस्तस्माच्च देवगुरुर्बृहस्पतिः सर्वश्रेष्ठोऽस्ति तथैव भगवान् वेदव्यास समस्तेषु मुनिषु श्रेष्ठतमो ब्रह्मवित्तमश्च प्रोक्तोऽस्ति।[3]

महाभारतस्य शान्तिपर्वणि तु वैशम्पायनेन भगवान् व्यास आदि-पुरुषान्नारायणात् षष्ठ उक्तोऽस्ति—

पितामहाद् यं प्रवदन्ति षष्ठ महर्षिमार्षेयविभूतियुक्तम् ।
नाराणस्यांशजमेकपुत्रं द्वैपायन वेदमहाविभूतिम् ॥ ३४९।४

---

१. विष्णोरंशो मुनिर्जातः सत्यवत्या पराशरात् ।
विभज्य वेदांश्चतुरः शिष्यानध्यापयत् पुरा ॥
अष्टादश पुराणानि स कृत्वा भगवान् मुनि ।
मामेवाध्यापयामास भारताख्यानमेव च ॥ दे० भा० १।१४।१७ ।

२. दे० भा० १।३।३६, ३८ ।

३ यथा व्यासो मुनीन्द्रेषु व्यासेषु ब्रह्मवित्तमः ।
यथा दिवौकसा शक्रो गुरुः शक्राद् यथा वरः ॥ उ० ख० १९२।९ ।

व्यासवंशपरम्परा
|
नारायणः
ब्रह्मा
वसिष्ठः
शक्तिः
पराशरः
व्यासः
शुकदेवः

## व्यासनिवारभूमिः

आसाधारणप्रतिभस्य युगविधायकस्य भगवतो व्यासस्य निवासभूमिविषये न कोऽपि प्रमाणिकः सङ्केत उपलभ्यते। महामनस्विभिर्मनीषिभिस्तस्य विषये य उल्लेखः कृतोऽस्ति, न तेनापि तस्य सर्वाङ्गीणजीवनस्याभासो भवति। तथापि सूत्रात्मकसङ्केतेन प्रतीयते यत्तस्योत्तराखण्डस्य तपःपूतेन भूभागेनासीद् घनिष्ठतमः सम्बन्धः।[1] महाभारतस्य सभापर्वणि धर्मराजाय युधिष्ठिराय स्वेन्द्रियजयपूर्वकं सावधानतया सुसम्यक् प्रजापालनस्य सदुपदेशं प्रदाय वेदमार्गानुयायिभिः शिष्यैः साकं कैलासगमनस्यास्ति निर्देशः।[2] अपि च शान्तिपर्वणि मोक्षधर्मे व्यासविषये जनमजयेन पृष्टो वैशम्पायनः प्रोवाच—यत्तपोनिधिर्ब्रह्मनिष्ठो मे गुरुर्भगवान् व्यासदेवो वेदार्थज्ञानोपबृंहणकामनया हिमालयशिखरे निवसन् महाभारतं विरचितवान्। तपसि श्रान्तस्य तस्य सेवायां तत्परा वयं पञ्च (शुक-पैल-जैमिनि-सुमन्तु-वैशम्पायनाः) तेन सहैव तत्र स्थिता आस्म। अस्माभिः परिवृतो गुरुदेवस्तस्मिन् हिमवतः शिखरे भूतगणैः परिवृतो भूतनाथ इव शोभमानस्तत्र साङ्गस्य वेदस्य महाभारतस्य चार्थानावर्तयन्नस्मानध्यापयतिस्म। वयञ्च सततमुद्यताः

---

१. पुण्ये हिमवतः पादे मध्ये गिरिगुहालये।
शुचिः सनियमो व्यासः शान्तात्मा तपसि स्थितः॥ आ० प० १।२८।

२. स्वस्ति तेऽस्तु गमिष्यामि कैलासं पर्वतं प्रति।
अप्रमत्तः स्थितो दान्तः पृथिवीं परिपालय॥
एवमुक्त्वा स भगवान् कैलासं पर्वतं ययौ।
कृष्णद्वैपायनो व्यासः सह शिष्यैः श्रुतानुगैः॥ ३४१।१७, ८१

तमुपासमाना अध्ययनकार्य्म।[1] तस्मात्तस्य निवासभूमिरुत्तरापथो हिमालय एवासीत्तथा तस्याश्रमोऽपि भारतस्य पवित्रे वदरिकाश्रम आसीदिति निश्चेतुं शक्यते। यत्र समये समये समागत्य स धर्मात्मन: पाण्डवानुपदिशतिस्म।

वनपर्वण ८३ अध्याये कुरुक्षेत्रस्य सीम्नि व्यासस्थली-व्यासवनयोश्चर्चाऽस्ति यत्र पुत्रशोकसन्तप्तो हि व्यासो देहत्यागायोद्यतो जातः, परं दैवैर्निवारित। श्रीमद्भागवतानुसारं तु सरस्वतीनदी पश्चिमतटे वदरीवृक्षमण्डिते बदरिकाश्रमनाम्नाऽपि प्रसिद्धे शम्याप्रासे तस्याश्रम आसीद् यत्र नारदे निर्गते मन प्रणिधाय माया-पुरुषयोर्दर्शनानन्तरं सर्वानर्थनिवर्तक भक्तिप्रधानं श्रीमद्भागवतं विरच्य शुकमध्यापयत्।

ब्रह्मनद्या सरस्वत्या आश्रमः पश्चिमे तटे।
शम्याप्राम इति प्रोक्त ऋषीणा सत्रवर्द्धनः॥
तस्मिन् स्व आश्रमे व्यासो बदरीखण्डमण्डिते।
आसीनोऽप उपस्पृश्य प्रणिदध्यौ मन स्वयम्॥[2]

व्यासस्य बादरायण इति नाम महत्त्वपूर्णस्यैतिहासिकतथ्यस्य परिचायकमस्ति। अनेन स्वकीयज्ञानस्योद्भावना हिमालयस्याङ्के बदरिकाश्रमे एव स्थित्वा कृता। तस्य बादरायणनामकरण बदरिकाश्रमस्य पवित्रभूमो चिरन्तनसहवासस्य स्मारकमस्तीति वाचस्पतिगौरला।[3]

अहिर्बुध्न्यसंहिताया भगवतो व्यासस्य नामान्तरमपान्तरतमा इत्युक्तोऽस्ति, यो वेदव्याख्यातृरूपेण स्मृत.,कपिलहिरण्यगर्भयो समकालिकश्च प्रोक्तो विद्यते। एभिस्त्रिभिर्भगवतो विष्णोराज्ञया क्रमश. त्रय्याः, साख्यशास्त्रस्य, योगदर्शनस्य च विभागो विहित (११।५०–६०)।

एवं भारतीयवाङ्मये भगवान् व्यासो विशालसाहित्यकाररूपेणैकोऽवतारी महापुरुषोऽभिमत, परन्तु वैदिककालत. पुराणकालपर्यन्तमेकस्यैतादृशस्य दीर्घजीविनो मनुष्यस्यासम्भवं मान्यमाना.

---

१. वेदार्थान् वेत्तुकामस्य धर्मिष्ठस्य तपोनिधे।
गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः॥
वेदानावर्तयन् साङ्गान् भारतार्थाश्च चिन्तयन्।
तमेकमनसं दान्तं युक्ता वयमुपास्महे॥३४९।९-१३

२. श्री० भा० १।७।२३। ३ संस्कृत साहित्य का इतिहास पृ० २३३-२३४

ऋनिपर्ये ऽनुसन्धित्सवो विदेशीया विद्वासो व्यास इत्यभिधानमस्वीकृत्य प्रीनकात्मकं भावात्मकं कल्पनात्मकं वा नाम कथयन्ति ।[1] मैक्डोनल-स्याप्येतदेव मतमस्ति ।[2] अत एतेषां मतानुसारं व्यासशब्दो जाति-परम्परायां शिष्यपरम्परायां वंशपरम्परायां सम्प्रदायपरम्परायां उपाधिपरम्परायां वा पर्यायवाची शब्दोऽस्ति, न संज्ञावाचक. । एवमल-वेरुणिना व्यास पराशरमुने. पुत्र. प्रोक्त[3]स्तथा कीथ-मैक्डोनलाभ्याञ्च पाराशर्यो व्यास एक पौराणिको महापुरुष स्वीकृतोऽस्ति ।[4]

विष्णुपुराणानुसारमिदं समस्तं जगद् भगवतो विष्णोरेवोत्पद्यते, तत्रैव तिष्ठति, अन्ते च तत्रैव प्रविलीयते । अत एतदतिरिक्तमन्यत् किमपि न वास्तविकं विद्यते । प्रतिद्वापरं भगवान् विष्णुर्व्यासरूपेणा-वतीर्य मनुष्याणां बलं वीर्यं तेजश्चाल्पं ज्ञात्वा सर्वेषां जनानां हिताय वेदविभाजनं कुरुते, अष्टादशानां पुराणानां च निर्माणं विधत्ते । अस्य वैवस्वतमन्वन्तरस्य प्रतिद्वापरम् एकैको व्यास उत्पद्यते । इदानीं यावत् २८ व्यासा. सञ्जाता सन्ति । तत्र प्रथमे द्वापरे स्वयं ब्रह्मा व्यासो जात. । द्वितीये द्वापरे प्रजापतिर्व्यासो जात । तृतीयद्वापरस्य व्यास शुक्राचार्यो जात । एवं चतुर्थे बृहस्पति , पञ्चमे सूर्य , षष्ठे मृत्यु:, सप्तमे इन्द्र., अष्टमे वसिष्ठ , नवमे सारस्वत , दशमे त्रिधामा, एकादशे त्रिवृष , द्वादशे भरद्वाज , त्रयोदशेऽन्तरिक्ष , चतुर्दशे वर्णी, पञ्चदशे त्रय्यारुण , षोडशे धनञ्जय., सप्तदशे कृतञ्जय , अष्टादशे जय ऊनविंशतौ भरद्वाज , विंशतौ गौतम , एकविंशे हर्यात्मा, द्वाविंशे वाजश्रवा , त्रयोविंशे सोम-शुष्कवंशी तृणबिन्दु , चतुर्विंशे भृगुवंशी ऋक्षो व्यासो भवति, यो वाल्मीकिरपि प्रोच्यते स्म । पञ्चविंशे शक्ति , षड्विंशे पराशर., सप्तविंशे जातुकर्ण, अस्मिन्नष्टाविंशे द्वापरे सत्यवतीपुत्र कृष्णद्वै-पायनो व्यासो जातोऽस्ति—विव्यास वेदान् यस्मात् स तस्माद् व्यास इति स्मृत ( म०भा१आ०प० ६१।८८ ) एवमिदानीं यावत् २८ व्यासा जाताः सन्ति, ये प्रतिद्वापरं वेदविभागं पुराणनिर्माणं च कृतवन्तः । इत परं द्रोणाचार्यपुत्रोऽश्वत्थामा व्यासो भविष्यति ( वि०पु० ३।३।५-१७ ) ।

---

१. डब्ल्यू हॉपकिन्स: इण्डिया ओल्ड एण्ड न्यू, पृ० ६६

२ ए० ए० मैक्डोनल :—इण्डिया पास्ट पृ० १४६

३. अलबेरूनी का भारत भा० २ पृ० ३७

४ मैक्डोनल ऐण्ड कीथ. वैदिक इन्डैक्स पृ० ३३६

अस्मिन्नष्टाविंशतितमे द्वापरे समुत्पन्न कृष्णद्वैपायनो व्यास., अष्टादश महापुराणानि, महाभारतम्, वेदविभागम्, ब्रह्मसूत्रनिर्माणम्, योगभाष्यं च कृत्वाऽस्माकं महान्तमुपकारं कृतवान्। भगवान् कृष्णद्वैपायनः साक्षान्नारायणो ज्ञेय, यतो हि एतदतिरिक्त क. पुमान् इयद् विशालं दिव्यं साहित्य निमातुं शकुयात् ?

> कृष्णद्वैपायनं व्यासं विद्धि नारायण प्रभुम्।
> कोऽन्यो हि भुवि मैत्रेय! महाभारतकृद् भवेत्॥ (वि०पु० ३।४।५)

## पुराणानां कर्ता वक्ता श्रोता च

१ अष्टादशाना महापुराणानामादिकर्ता ईश्वरावतारः सत्यवतीगर्भसम्भवः पराशरमुनिपुत्रो भगवान् कृष्णद्वैपायनो महर्षिर्व्यासोऽस्ति।

२ पुराणानामादिवक्ता लोमहर्षण. सूतः तथा तत्पुत्र उग्रश्रवा· सूतश्चास्ति।

३ पुराणानामादिश्रोतारो नैमिषारण्यनिवासिनो निर्मलमानसा परोपकारिणः शौनकप्रभृतयोऽष्टाशीतिसहस्राणि ( ८८००० ) ऋषय सन्ति।

## पुराण-ब्राह्मणयोः पार्थक्यम्

शङ्का—स्वामिनो दयानन्दसरस्वतीमहोदयस्य कथनमस्ति यद् ब्राह्मण-ग्रन्थातिरिक्त पुराणं नास्ति, यतो हि ब्राह्मणग्रन्थेषु य इतिहासो वर्तते स एव पुराणं भवितुमर्हति। एतदतिरिक्तानि व्यासदेवकृतानि महापुराणानि पुराणानि न सन्ति।

समाधानम्—ब्राह्मणग्रन्थाः पुराणं नास्ति, किन्तु व्यासकृतानि अष्टादश महापुराणान्येव पुराणानि सन्ति, यतो हि ब्राह्मणग्रन्थ-पुराणयोर्मह-दन्तरमस्ति, यन्निम्नाङ्कितविचारधाराभिर्व्यक्तोभवति।

(१) यथाऽष्टादशसु पुराणेषु आरम्भे—अथ अमुकपुराणम्, एवमन्ते चेति अमुकपुराणं समाप्तम्, प्रत्यध्यायं पुष्पिकासु च, अमुकपुराणे अमुकोऽध्याय, इत्यादि लिखितं वर्तते, न तथा ब्राह्मणग्रन्थेषु आदौ मध्ये अन्त काण्डसमाप्तौ वा पुराणशब्दस्य प्रयोगो दृश्यते। यदि ब्राह्मणग्रन्था पुराणानि स्युस्तर्हि तत्रापि पुराणशब्दस्योल्लेखोऽवश्यं स्यात्।

(२) ब्राह्मणग्रन्थेषु प्रायो याज्ञिककर्मणा विधानमस्ति तथा याज्ञिक-कर्माणि च वेदस्य प्रधानमङ्ग वर्तन्ते। अतो ब्राह्मणग्रन्था वेद एव भवितु-मर्हन्ति न पुराणम्।

(३) ब्राह्मणग्रन्थाः केषाञ्चिद् वेदाना शाखा भवन्ति-यथा यजुर्वेदस्य माध्यन्दिन्याः शाखाया ब्राह्मणमस्ति शतपथब्राह्मणम्। यदि ब्राह्मण-ग्रन्था वेदस्य शाखाः सन्ति तर्हि पुराणानि कथं भविष्यन्ति ?

(४) ब्राह्मणग्रन्था ब्राह्मणभागा कथ्यन्ते। भागो नामावयवः। यत्रावयवो भवति तत्र अवयवी अपि कश्चिद् भवत्येव। तर्हि को ग्रन्थोऽस्ति, यस्य भागो ब्राह्मणग्रन्थोऽस्ति। मन्त्रब्राह्मणयोः वेदनामधेयम् (४।१।३१)इत्याप-स्तम्बश्रौतसूत्रानुसारं वेदस्य भागद्वयमस्ति (१) मन्त्रभाग. (२) ब्राह्मण-भागश्च। अतो ब्राह्मणग्रन्था पुराणाना भागो भवतुं नार्हन्ति, किन्तु वेदस्यैव भागा. सन्ति। अतो ब्राह्मणग्रन्था पुराण भवतुं नार्हन्ति।

(५) हिन्दुशास्त्रानुसारं कर्म द्विविधं भवति–श्रौतं कर्म, स्मार्त कर्म च। यस्मिन् कर्मणि वेदमन्त्रा प्रयुज्येरन्, वेदेष्वेव यस्य विधि प्रोक्त स्यात् तत् श्रौतं कर्म कथ्यते। कर्म कर्तुं मन्त्रा संहिताभागतो गृह्यन्ते विधिश्च ब्राह्मणभागत श्रौतसूत्रेभ्यश्च गृह्यन्ते। मन्त्र-ब्राह्मणयोर्भागयो-र्नामास्ति श्रुति। श्रुतिप्रतिपादितं च कर्म श्रौतं कर्म कथ्यते। श्रौतं कर्म च वैदिकं कथ्यते। अतो ब्राह्मणग्रन्था पुराणं भवतुं नार्हन्ति।

(६) केञ्चिदप्यृषिभिर्महर्षिभिश्च ब्राह्मणग्रन्थाना पुराणकथनाय कुत्रापि काऽपि सम्मतिर्न प्रदत्ताऽस्ति। अतो ब्राह्मणग्रन्था पुराणं भवितुं नार्हन्ति, किन्तु, व्यासकृतान्येव पुराणानि पुराणानि सन्ति।

(७) यत्र कुत्रापि पुराणाना पाठ उद्धृतोऽस्ति तत्र लिखितं वर्तते यदमुकपुराणे, यत्र च ब्राह्मणग्रन्थेभ्यो वचनान्युद्धृतानि सन्ति तत्र श्रुतिनाम्ना उद्धृतानि सन्ति। यदि ब्राह्मणग्रन्था पुराणानि स्युस्तर्हि शतपथब्राह्मणे इति शतपथपुराणे लिखितं स्यात्, किन्तु एतादृशं न कुत्राप्युपलभ्यते। अतो ब्राह्मणग्रन्थो न पुराणं भवितुमर्हति।

(८) ब्राह्मण-पुराणयोर्विषयेमहदन्तरमस्ति। महर्षिणा वात्स्यायनेन न्यायदर्शनस्य समारोपणादात्मन्यप्रतिषेध. इति न्यायसूत्रे भाष्य कुर्वता लिखितमस्ति यत्–यज्ञो मन्त्रब्राह्मणस्य लोकवृत्तमितिहासपुराणस्य। अस्येद तात्पर्य यद् यज्ञो मन्त्रस्य ब्राह्मणस्य च विषयोऽस्ति। पुराणे-तिहासयोर्विषयोऽस्ति लोकवृत्तम्। वस्तुत पुराणेषु लोकवृत्तमधिक-मस्ति ब्राह्मणग्रन्थेषु च क्वचित् प्रसंगात् लोकवृत्तमागतमस्ति।

(९) पुराणाना लक्षणं ब्राह्मणग्रन्थेषु न संघटते। अतो ब्राह्मणग्रन्था. पुराण भवतुं नार्हन्ति। यदा पुराणाना पञ्च लक्षणानि ब्राह्मणग्रन्थेषु न संघटन्त तर्हि ब्राह्मणग्रन्था पुराणानि कथंकार स्वीकर्तुं शक्यानि।

(१०) न्यायदर्शनस्य प्रवर्तक आचार्यो महर्षिर्गौतम , वैशेषिकदर्शनाचार्योऽस्ति कणादमुनि , वेदान्तदर्शनस्य रचयिता भगवान् वेदव्यास , मीमासादर्शननिर्माता जैमिनिमुनि·, साख्यदर्शनप्रणेता महामुनिकपिलो योगदर्शनप्रदर्शको भगवान् पतञ्जलिश्च "मन्त्रब्राह्मणयोर्वेदनामधेयम् ( आपस्तम्बश्रौतसूत्रम् (४।१।३१) मन्त्रब्राह्मण वेद इत्याचक्षते (बौधायनगृह्यसूत्रम् २।१।१) इत्यनुसारं मन्त्रब्राह्मणात्मसमुदायं वेदं स्वीकुर्वन्त पुराणब्राह्मणग्रन्थौ च भिन्नौ भिन्नावङ्गीकृतवन्त सन्ति ।

(११) एव पाणिनीयव्याकरणस्य भाष्यकारो भगवान् पतञ्जलि , मीमासादर्शनस्य भाष्यकार शबरस्वामी, न्यायादर्शनस्य भाष्यकारो वात्स्यायनमुनि तथा प्रस्थानत्रयीभाष्यकारा श्रीस्वामिवर्या शङ्कराचार्यपादा·, श्रीस्वामिनो रामानुजाचार्या , श्रीमध्वाचार्या , श्रीनिम्बार्काचार्या तथा श्रीवल्लभाचार्याश्च एकेन स्वरेण स्वीकृतवन्तो यद् ब्राह्मणग्रन्था न सन्ति पुराणानि, किन्तु इतो भिन्नानि व्यासकृतानि अष्टादश महापुराणान्येव सन्ति पुराणानि ।

(१२) राज्ञा शिवप्रसादेन सह ब्राह्मणे आख्यायिकाभाग एव पुराणमिति मन्यमानस्य स्वामिनो दयानन्दस्य लेखबद्धः शास्त्रार्थो निर्णयार्थम् अंग्रेजी-संस्कृतभाषयोर्महाविदुषो योरपनिवासिन: डा० थिवोसाहवस्य ( तात्कालिक प्रिंसिपल गवर्नमेन्ट संस्कृत कालेज वाराणसी ) समीपे समुपस्थापितो जात.। तस्मिन् विचारविमर्शानन्तरं तेनात्मनो निर्णय. प्रदत्तो यद् स्वामी दयानन्दो ब्राह्मणभागस्योपनिद्पभागस्य च वेदत्वं न स्वीकरोति, केवलं संहिताभागमेव स वेदं मनुते । तत्कथनमस्ति यत् संहिताभाग ईश्वरोक्तोऽस्ति तथोपनिषद्भागो जीवोक्तो विद्यते । किन्तु स इमा स्वोक्ति कथं प्रमाणयिष्यति यत् संहिताभाग स्वत प्रमाणमस्ति तथा ब्राह्मणभाग उपनिषद्भागश्च परत· प्रमाणे विद्येते ? दयानन्देन एनयो परत प्रामाण्ये यावन्ति प्रमाणान्युपस्थापितानि सन्ति, तेभ्य पुष्टतरे प्रमाणे दास्यमान एव तदुक्तिर्मान्या भवितुमर्हति । राज्ञः शिवप्रसादस्यायं प्रश्न समुचित एव प्रतिभाति यदेकस्य भागस्य भवान् (दयानन्द ) स्वत प्रमाणम् मनुते तर्हि उभयोः कथन्न मन्यते ? यथा यद्येकस्य परत प्रामाण्यं स्वीक्रियते तर्हि द्वयो. परत प्रामाण्य कथं न, अङ्गीक्रियते ? वेदं विहाय स्वत: प्रामाण्यं न कस्यापि ग्रन्थस्य मन्तु शक्यते, यतो हि अनादिकालतो हिन्दवो

ब्राह्मणोपनिषद्भागसहितं वेदं नित्यं मन्यन्ते। स्वामी दयानन्दो यानि शतपथब्राह्मणस्य बृहदारण्यकोपनिषदश्चोद्धरणानि दत्तवान्, तै. राज्ञः शिवप्रसादस्यैव पक्षः सुदृढो जायते। यदि कस्यचिद् ग्रन्थस्यैकभागः प्रामाणिको विद्यते तर्हि अपरभागोऽपि प्रामाणिको भवितुमर्हत्येव। (मन्त्रब्राह्मणयोर्वेदनामधेयम्) इत्येत् प्रक्षिप्तं वक्तुं नास्ति दयानन्द-स्याधिकार। एवन्तु कश्चिदपि पुमान् किमपि वस्तु पुरातनरुढि-विपरीतमुक्त्वा प्रक्षिप्तं कथयितुं शक्नोति। यदा दयानन्दसरस्वती ब्राह्मणभागस्य प्रामाणिकता न स्वीकरोति तदा तैत्तिरीयसहिताया ब्राह्मणभागस्य का गतिर्भविष्यति, य पर्श्वविभागतयात् कथमपि भिन्नो न विद्यते,' किम्वा स तैत्तिरीयब्राह्मणभागस्य सर्वान् मन्त्रान्, प्रक्षिप्तान् मन्यते ? तस्माद् ब्राह्मणभागस्य वेदाङ्गत्वान्न तत् पुराणं वक्तुं शक्यते। (पुराणवर्मणि पृ० ८७-८८)

## धर्ममीमांसायां पुराणानां प्रामाण्यम्

हिन्दुजाते सुदृढो विश्वासोऽस्ति, यद् धर्माधर्मयोर्निर्णये वेद एव सर्वा-धिको मान्य प्रामाणिकश्च ग्रन्थोऽस्ति, यतो हि वेदः साक्षादीश्वरस्या-नादिर्वाणी ज्ञानोपदेशस्यागार ऐहलौकिकी पारलौकिकी च समस्या समाधातुमाधारोऽस्ति। अत एव देशीयैर्विदेशीयैश्च विद्वद्भिरेक-स्वरेण वेदाय मान्यता प्रदत्ताऽस्ति। ये हि सिद्धान्ता वेदेषु निर्दिष्टा विद्यन्तेत एव स्मृतिद्वारा समर्थिता सन्ति तथा तेषामेव गुणगान-मुदाहरण-प्रत्युदाहरणद्वारा पुराणेषु कृतं विद्यते।[1] अपि च सर्वशास्त्रार्थ-निर्णये तिस्रो विद्या प्रमुखा. प्रोक्ता[2]।

वेदाना दुरूहार्थस्य ज्ञानं साधारणबुद्धिगम्यं नास्ति। अल्पज्ञाना जीवाना तदसम्भवं मत्वा मन्वादिभि महर्षिभि. समाधिद्वारा प्राप्तया निर्मलबुद्धचा वेदार्थान् स्मारं स्मारं तत्तत्स्मृतीना निर्माणं कृतम्। ततो भगवान् व्यास वेदप्रतिपादितानि स्मृत्यनुमोदितानि च

---

१. यच्च दृष्टं हि वेदेषु तद् दृष्टं स्मृतिभिः किल।
उभाभ्या यत्तु दृष्टं हि तत् पुराणेषु गीयते॥ (स्क० पु० रे० १।२३)

२. आत्मनो वेदविद्या च ईश्वरेण विनिर्मिता॥
शौनकोया च पौराणी धर्मशास्त्रात्मिका च या।
तिस्रो विद्या इमा मुख्या. सर्वशास्त्रविनिर्णये॥ (तत्रैव १।१७)

विविधानि धार्मिकतत्त्वानि सरलतया अवबोधयितुं प्राञ्जलया भाषया पुराणानि रचयाञ्चकार। अतो धर्मनिर्णये एषां त्रयाणामेव मुख्यता विद्यते। ऐषु त्रिषु सर्वोच्चस्थानं वेदस्यैवास्ति, ततः स्मृतेः, तदनन्तरम् पुराणानां प्रामुख्यमस्ति। व्यासस्मृतौ स्पष्टमुल्लखितं वर्तते यद् यत्र च त्रिषु श्रुति-स्मृति-पुराणेषु परस्परं विरोध उपलभ्येत तत्र श्रुतेर्वचनमेव प्रामाण्यं मन्तव्यम्, यदि च स्मृतिपुराणयोर्विरुद्धं किञ्चिद्वचनं प्राप्येत तदा तत्र स्मृतिरेव प्रमाणरूपेण ग्राह्या भवति।[1]

धर्मनिर्णयसम्बन्धे पूर्वमीमांसाप्रणेत्रा महर्षिणा जैमिनिना स्पष्टमुल्लिखितमस्ति यत् स्मृतौ पुराणेषु च यदि किञ्चिद्वचनं वेदविरुद्धं प्रतीयेत तर्हि तदुपेक्षणीयमस्ति, किन्तु वेदे स्मृतौ पुराणे चानुकूलं वचनं यदि मिलेत् तर्हि तद्वचनमनुमितश्रुतिमूलकं मत्वा प्रमाणकोटौ समानेयम्—विरोधे त्वनपेक्षं स्यादसति ह्यनुमाने ( पू०मी०सू १।३।३ )।

स्कन्दपुराणे लिखितमस्ति यत्—श्रुति-स्मृति-पुराणानि इमानि त्रीणि विदुषां नेत्राणि सन्ति। य एभिस्त्रिभिर्विचारयति स माहेश्वरांशो मन्यते।[2] देवीभागवतेऽयं प्रसंगः समायाति यदैकदा लोककल्याणभावनया देवर्षिर्नारदो नारायणं पप्रच्छ – भगवन्? शास्त्राणां बहुत्वाद् धर्मनिर्णये किं प्रमाणं मन्तव्यम्? तदाकर्ण्य नारायणेन स्पष्टमुक्तम्—देवर्षे? धर्मनिर्णये श्रुति-स्मृती नेत्रे मन्तव्ये तथा पुराणं हृदयमवगन्तव्यम्। अत एषु त्रिषु यत् किमप्युक्तं विद्यते तत् धर्मोऽवगन्तव्यः।[3]

## पुराणानां सुहृत्सम्मितता

अलङ्कारशास्त्रसरण्यनुसारमुपदेशात्मको ग्रन्थः त्रिषु भागेषु विभक्तो विद्यते (१) प्रभुसम्मित (२) सुहृत्सम्मित (३) कान्ता-

---

१. श्रुति-स्मृति-पुराणानां विरोधो यदि दृश्यते।
तत्र श्रौतं प्रमाणं तु तयोर्द्वैधे स्मृतिर्वरा॥ ( व्या० स्मृ० १।४ )

२. श्रुति स्मृतिः पुराणानि विदुषां लोचनत्रयम्।
यस्त्रिभिर्नयनैः पश्येत् सोऽंशो माहेश्वरो मतः॥ ( रे० ख० १।१५ )

३. बहुत्वादिह शास्त्राणां निश्चयः स्यात् कथं मुने!
श्रुति-स्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्॥
एतत्त्रयोक्त एव स्याद्धर्मो नान्यत्र कुत्रचित्। ( दे०भा० ११।१।२१ )

सम्मितञ्च। तत्र धर्मकर्मण्यारुच्यर्थं स्वामिसदृश आज्ञाप्रदायको वेद प्रभुसम्मित स्वीकृतोऽस्ति, स्मृतिशास्त्रमपि तथैव स्वीकृतं भवति। अत श्रुति-स्मृति-शास्त्रम् प्रभुसम्मित ज्ञेयम्। मित्रमिव हानिलाभौ उपदिश्य धर्मकर्मणि सदा तत्परार्थं प्रेरणाप्रदायक पुराणेतिहासग्रन्थः सुहृत्सम्मितोऽस्ति। स्त्रीवद्धाव-भाव-कटाक्षाभिनयादिद्वारा सन्मार्गे आकर्षका काव्यनाटकग्रन्था सन्ति कान्तासम्मिता। अस्यदं रहस्यं यद् आख्यानोपाख्यानकथानकादिद्वारा अनुकूलानि प्रतिकूलानि वोदाहरणानि प्रदाय धर्मकर्मणि प्रवृत्तयेऽधर्मकर्मणो निवृत्तये च तत्परता-प्रदर्शनाय सुहृत्सम्मितानां पुराणानां प्रमुखं कार्यं वर्तते।

वात्स्यायनेन ऋषिणा न्यायदर्शनभाष्ये लिखितमस्ति यत् श्रुति-पुराणानि विषयव्यवस्थानुसारमिन्द्रियवत् स्वस्वविषयेषु निरपेक्षाणि प्रमाणानि सन्ति। वेदस्य विषयो भिन्नोऽस्ति। इतिहासपुराणस्य विषय. पृथगस्ति। तथा धर्मशास्त्रस्य भिन्नो विषयोऽस्ति लोकव्यवहार-व्यवस्थापनम्—तथाहि समारोपणादात्मन्यप्रतिषेधः (४।१।६२) इति सूत्रभाष्ये—यथाविषयं प्रामाण्यमिन्द्रियवत्। अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य लोकव्यवस्थापना च धर्मशास्त्रस्य विषय.। अस्यायमभिप्राय—यथेन्द्रियाणि स्वस्वविषयग्रहणे स्वतन्त्राणि सन्ति प्रमाणानि। एकमिन्द्रिय-मन्यस्येन्द्रियस्य विषयं न गृह्णाति। दर्शने नेत्रमेव स्वतन्त्रं प्रमाणमस्ति। श्रवणे कर्णौ एव प्रमाणे स्त.। गन्धग्रहणे नासिकैव प्रमाणम्। स्पर्शे त्वगेव प्रमाणम् तथा रसास्वादने जिह्वैव प्रमाणमस्ति तथैव वेदस्मृतिपुराणानि अपि स्वस्वविषयग्रहण एव स्वतन्त्राणि सन्ति प्रमाणानि। सर्ग-प्रतिसर्ग-मन्वन्तर-वंश-वंशानुचरितादीनां क्रमबद्धवर्णनं तथा लोकवृत्तस्य संग्रहश्च पुराणानामेवास्ति विषय। अतोऽत्र विषये पुराणानामेव प्रामाण्यं न्यायसङ्गतं विद्यते।

अपि च लोकव्यवहारार्थमपि पुराणानामनुशीलनमत्यावश्यकमस्ति। अद्यत्वे न्यायालयेषु नियमाधारेण अभियुक्ता अपराधिनो निर्दोषा वा साध्यन्ते। कस्मिन्नपि अभियोगे प्राय त्रयो भागा भवन्ति—(१) अभियोगोपस्थितिः (२) वादप्रतिवादौ (३) उदाहरण-प्रत्युदा-हरणदानञ्च। सर्वप्रथमं वाक्कीलो न्यायालये स्वाभियोगमुपस्थापयति। ततस्तस्य वास्तविकतासिद्धये वादम् प्रतिवादं च कुरुते। तदनन्तरं

पुरातनं निर्णयं दृष्टान्ततया समुपस्थाप्य सिद्धान्तं निर्णेतुं न्यायाधीशं संकेतयति। यथा त्रयाणामप्येषामेकस्य न्यूनताया स्वपक्षसमर्थनं न सम्भवति तथैव धर्माधर्मनिर्णये वेदस्मृतिविधिनिषेधात्मकानि वाक्यानि अभियोगोपस्थापनमस्ति, तस्य त्यागसंग्रहयोर्विवेचकं दर्शनशास्त्रं वाद-प्रतिवादौ स्तः, तथा वेदविहितविधेरनुकूलाचरण-कर्तॄणा राम-नल-युधिष्ठिरादीना समादरदृष्टान्त तथा वेदप्रतिपादित-निषेधप्रतिकूलकर्तॄणा रावणदुर्योधनादीनामनादरदृष्टान्त उदाहरण-प्रत्युदारणे स्तः। अत· उदाहरण-प्रत्युदाहरणादिद्वारा आत्मोन्नतये तथा सर्वविधपतनान्निवृत्तये पुराणेतिहासादीनामनुशीलनं नितान्त-मुपकारि हितप्रदं च विद्यते।

## विनियोगज्ञानाय पुराणानामावश्यकता

वैदिकवाङ्मयस्य कर्मकाण्डविधीना सफलातायै ऋषि-छन्दो-देवता-विनियोगाना ज्ञानं नितान्तमावश्यकं विद्यते। एतानज्ञात्वा यो यजति अधीते जपति, जुहोति च, न तस्यानुष्ठानं सफलं भवति, न वा पूर्ण फलं जायते। अत एतेषा ज्ञानमत्यावश्यकं प्रोक्तमस्ति हेमाद्रौ दानखण्डे—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥
अविदित्वा तु य. कुर्याद् यजनाध्यापनं जपम्।
होममन्तर्जलानीति तस्य चाल्पं फलं भवेत्॥

यस्य पुंस ऋषे छन्दसो देवताया विनियोगस्य ब्राह्मणस्य मन्त्रस्य च यथार्थ ज्ञान विद्यते सोऽतिथिवत् सर्वेषामृषीणा वन्दनीय पूज्यश्चास्ति।[१] अत एषा ज्ञानमत्यावश्यकम्। भारतीयेऽध्ययनक्रमे स्वाध्यायोऽध्येतव्य इत्यादिना सर्वप्रथमं वेदस्याध्ययनं नितान्तमावश्यकमनिवार्यं च प्रोक्तमस्ति। वेदविद्याया अध्ययनेन दैवीशक्तेर्विकासान्मानव. सर्वेषु

---

१ यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्।
विनियोगं ब्राह्मणं च मन्त्रार्थज्ञानमेव च॥
एकैकस्य ऋषे सोऽपि वन्द्यो ह्यतिथिवद् भवेत। ( तत्रैव )

कार्येषु क्षमो जायते। अत एव भगवता मनुना वेदमनधीत्यान्यशास्त्रेषु श्रमशीलाय शूद्रसदृशाय पुरुषाय,वेदविहितकर्मणोऽधिकारो निषिद्धः।[१]

ऋषि-छन्दोदेवता-स्वरादीनामज्ञानवान् मन्त्रकण्टकः कथितोऽस्ति।[२] मन्त्रप्रयोक्तुः प्रतिपदं स्वर-वर्णाक्षर-मात्रा-विनियोगार्थाना सम्यग्ज्ञान-मपेक्षितमत्यावश्यकञ्चास्ति।[३] कात्यायनानुक्रमणिकानुसारं वैदिकाना सिद्धान्तोऽस्ति, यद् विनियोगं विना केवलं मन्त्राणा पाठो निरर्थकोऽस्ति। तादृशेन पाठेन पाठकस्य किमपि फलं न जायते।

कस्मैचित् कार्यानुष्ठानायैव मन्त्राणामाविर्भावो जातः। अनेन मन्त्रेणेदं कार्यं कर्तव्यमित्येवं मन्त्रस्य कार्येषु प्रयोगविधानमेव विनियोग उच्यते।[४] विनियोगस्य चत्वारि अङ्गानि भवन्ति (१) ऋषि, (२) देवता, (३) छन्द, (४) मन्त्रानुष्ठानं च।

(क) तत्र येनर्षिणा यो मन्त्रः समाधिद्वारा प्राप्तोऽस्ति, स ऋषिस्तस्य मन्त्रस्य द्रष्टा ऋषिरभिमतोऽस्ति। एवं प्रत्येकमन्त्रैः सह केषाञ्चिदपि ऋषाणामस्ति अवश्यं सम्बन्धः।[५]

(ख) यस्मिन् मन्त्रे यस्या देवताया लिङ्गं वर्तते, अथवा सर्वात्मकस्य परमात्मनो यस्याः शक्तेः वर्णनमस्ति, स एव तस्य मन्त्रस्य देवताऽस्ति[४]। तथा च यस्य च प्रयोजनस्य सिद्धये येन मन्त्रेण यस्या देवतायाः प्रार्थनं क्रियते, तस्य मन्त्रस्य सा देवता भवति।[६] देवताया प्रसादादेव

---

१ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ (म० स्मृ० २।१६८)

२ ऋषिश्छन्दो दैवतानि ब्राह्मणार्थं स्वराद्यपि।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते॥

३ स्वरो वर्णोऽक्षरो मात्रा विनियोगोऽर्थ एव च।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे॥ (मं दी. पृ १७)

४ पुराकल्पे समुत्पन्ना मन्त्राः कार्यार्थमेव च।
अनेन चेदं कर्तव्यं विनियोगः प्रकीर्तितः॥ (मदनरत्ने ५)

५. येन यदृषिणा दृष्टं सिद्धा प्राप्ता च येन वा।
मन्त्रेण तस्य तत्प्रोक्तमृषेर्भावस्तदर्थकम्॥ (मं दी. पृ १४)

६ यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या।
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते॥ (मं. दी पृ १४)

प्रत्येकं प्रयोजनं सिद्धयति, न केवलं मानवीयेनाधिभौतिकेन पुरुषार्थेण कार्यं सफलं भवितुमर्हति। अत एवोक्तं गीतायां भगवता श्रीकृष्णेन—

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ॥ (३।१२)

निरुक्तस्य दैवतकाण्डे यास्काचार्योऽपि—तद् यानि नामानि प्राधान्यस्तुतीना देवताना तद्दैवतमित्युपाक्रम्य। येषु मन्त्रेषु देवतानिर्देशो नास्ति, ते मन्त्रा यस्मिन् यज्ञे विनियुज्यन्ते तस्य यज्ञस्य देवतात्मकास्ते मन्त्रा भवन्तीत्युक्तवान्—यद्देवतः सयज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति।

(ग) वेदस्य प्रतिमन्त्रमक्षरसंख्या निर्धारिताऽस्ति। संख्यातवर्णानामाधारेण मन्त्राणामाधारेण वा वेदे गयत्री-जगती-बृहती अनुष्टुबादीनि सप्त छन्दांसि अभिमतानि सन्ति।

(घ) यज्ञादिकर्मसु को मन्त्रः कस्मिन् समये कथं पठनीय इति रहस्यज्ञानं मन्त्रानुष्ठानमस्ति।

अयमस्ति एतस्य सारांशो यदेषां चतुर्णामङ्गानां नाम विनियोगो विद्यते। वेदपाठमन्त्रजपादिकरणार्थमेषां (विनियोगस्य) ज्ञानं भवति अत्यावश्यकम्।

## विनियोगपूर्वकं वेदाध्ययनस्य सार्थकता

कात्यायनानुक्रमणिकायाम्, ऋषि-दैवत-च्छन्दांसि उपक्रमिष्याम इत्येवमुपक्रम्य कथितमस्ति यद् य ऋषिदेवतादि ज्ञात्वा वेदमन्त्रान् पठति, तस्य वेद तेजस्वी भवति, यश्चार्थज्ञानपूर्वकं पठति तस्य पठनं महातेजस्वि जायते। एवं मन्त्राणां जपेन हवनेन यज्ञेन वेदपाठेन च सम्पूर्णस्य पाठस्य फलं नूनं जायते— अथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति। जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते।[1]

## विनियोगं विना वेदपाठो निरर्थकः

ऋषि-देवता-छन्दो-विनियोगानजानानो यो वेदं पठति, पाठयति, जपति जुहोति वा तस्य स वेदः तेजोरहित यातयामश्च भवति तथा स शाखविहीनमिन्धनमिव पतति पापीयांश्च जायते—एतानि अविदित्वा यो अधीते अनुब्रूते जपति जुहोति यजति याजयते वा, तस्य ब्रह्म निर्वीर्यं यातयामं भवति। अथान्तराश्वगर्तं वा पद्यते स्थाणुं वर्च्छति प्रवामीयते भवति।[2] श्रीमता लोकमान्येन तिलकेनापि गीतारहस्ये ऋषि-देवता-

१-२. कात्यायनानुक्रमणिकायाम्। (१।१)

छन्दो विनियोगानज्ञात्वा यो वेदं पठति पाठयति जपति जुहोति यजते वा स पापीयान् भवतीति प्रोक्तम् ।[१]

एभिर्वचनैर्वेदाध्ययने विनियोगस्य परमावश्यकता प्रदर्शिताऽस्ति। अतो विनियोगं विना वेदाना पठनं पाठनं वा व्यर्थं तथा पापप्रदं कथितम्। पुराणानामध्ययनाभावे ऋषि-देवता-चरित्रात्मकस्य विनियोगस्य पूर्ण ज्ञानं न भवितुमर्हति तथा विनियोगं विना वेदाना स्वाध्यायस्य सर्वथा सम्भवति फलाभाव ।[२] अतो विनियोगाना सम्यग् ज्ञानाय पुराणानामनुशीलनं नितान्तमावश्यकमस्ति ।

भारतस्य शिक्षाप्रणाली वेदाध्ययनेनारभ्यते। वेदार्थज्ञानस्यातिगभीरतया शिक्षा-कल्प-व्याकरण-निरुक्त-च्छन्दो-ज्यौतिषाणा पण्णामङ्गानां प्रथमं ज्ञानमत्यावश्यकं विद्यते। निरुक्तमन्तरेण वेदार्थस्य ज्ञानं न सम्यक् सम्भवति। अतो वैदिकशब्दनिर्वचनार्थं निरुक्तमत्यावश्यकमस्ति— "नानिरुक्तविद् व्याकुर्यात्"। सहैव शब्दपरिज्ञानस्यापि मूलं व्याकरणमेवास्ति। तत् शब्दार्थपरिज्ञानमाध्यात्मिकाधिदैविकाधिभौतिकधर्मार्थकाममोक्षरूपा पुरुपार्था. निरुक्तमन्तरा न सम्भवन्ति। अतोऽर्थज्ञानाय निरुक्तमेवास्ति प्रधानम्। तस्माद्वेदार्थपरिज्ञानं न निरुक्तं विना सम्भवितुमर्हति। वेदार्थे शासनात्मकत्वान्निरुक्तस्य मुख्यं प्रयोजनं वेदार्थस्य स्पष्टीकरणमस्ति। अतो यास्काचार्येण वैदिकशब्दनिर्वचनार्थं काण्डत्रयात्मकस्य निरुक्तस्य पञ्चाध्यायात्मकस्य च निघन्टो. ग्रथन कृतम् एव निघन्टु-निरुक्तयोर्द्वयोर्वेदाङ्गत्वं स्पष्टम्। पदाना निर्वचनं निरुक्त निघन्टुस्तु शब्दसमाम्नायविपयकः शब्दकोश इति संक्षेपः।

**शब्दविमर्शः**

संस्कृतवाङ्मयस्य सर्वे शब्दा भागद्वये विभक्ता. सन्ति । एवे वैदिका शब्दा, द्वितीये च लौकिका शब्दा.। तत्र वैदिका शब्द लौकिकव्याकरणनियमैरावद्धा न भवन्ति, ते स्वयं निष्पन्ना शुद्धाश्च मन्यन्ते, तथा तेपा निरुक्तानुसारं विभिन्नप्रकारको व्यत्यय शिरोधार्य भवति। अत एव महावैयाकरणेन महर्षिणा पाणिनिना वैदिकप्रक्रियाय

१. अविदित्वा ऋषिं छन्दो दैवत योगमेव च।
याऽध्यापयेद् यजेद्वापि पापीयाञ्जायते हि सः॥ (गी र भूमिका)

२ विशेषता द्रष्टव्य —पं० नित्यानन्दपर्वतीयस्य संस्कारदीपक १-२१।

निर्माय बहुलं छन्दसीत्यादिसूत्राणा निर्माण कृतम् । लौकिकाः शब्दाश्च लौकिकै. व्याकरणैः निष्पाद्यन्ते लोके प्रयुज्यन्ते च ।

पुराणेषु वैदिकलौकिकोभयविधानां शब्दानां मिश्रणं वर्तते। अथापि अधिकांशाः शब्दा हि लौकिकव्याकरणनियमानुसारं प्रयुक्ताः सन्ति। कियन्तः शब्दा लौकिकव्याकरणनियमविरुद्धा अपि स्वतन्त्राः प्रयुक्ता सन्ति, ये आर्षा इति कथयित्वा समाधीयते पौराणिकैः ।

## आर्षशब्ददिग्दर्शनम्

| | | |
|---|---|---|
| (१) सत्यं परं धीमहि | श्रीमद्भागवते | १।१।१ |
| (२) पुत्रेतितन्मयतया तरवोऽभिनेदु | ,, | १।२।२ |
| (३) गावो बहुगुणा ददुः | ,, | ३।३।२६ |
| (४) यथा दारे प्रजावती | ,, | ३११।१४।३८ |
| (५) न याचतोऽदात् समयेन दायम् | ,, | ३।१।८ |
| (६) तयो· निपतमानयो. | ,, | ३।१६।३४ |
| (७) कुतोऽन्यथा स्मा(द्रमत स्व आत्मनः | ,, | ५।६।५ |
| (८) निवेशयित्वा निजराज्य ईश्वरः | ,, | १।१०।२ |
| (९) स्वराज्ये स्थाप्य धर्मजम् | ,, | ३।३।१६ |
| (१०) भस्मन् हुतं कुहकराद्धम् | ,, | १।१५।२१ |
| (११) सत्राजित. स्वतनयाम् | ,, | १०।५६।१ |
| (१२) नन्दालये सवलया व्रजती विरेजुः | ,, | १०।५।११ |
| (१३) निशामय तदुत्पत्तिम् | मार्कण्डेयपुराणे | ८१।१ |
| (१४) विशन्त्यो मद्विभूतयः | ,, | ६०।३ |
| (१५) आयान्तं चण्डिका दृष्ट्वा | ,, | ८८।३ |
| (१६) आत्मनो वेदविद्या च ईश्वरेण | स्कन्दपुराणे | ५१।१७ |
| (१७) सर्वानन्तफलाः प्रोक्ताः | मत्स्यपुराणे | ७४।४ |
| (१८) मूर्खागमेन रहिता:नि | ,, | १५८।७६ |
| (१९) ॐ कारमय गृह्य | ,, | १३८।४८ |
| (२०) पूर्ववद् गुरु ऋत्विग्भ्यः | ,, | ६०।३ |
| (२१) देवाना मातरो दृष्ट्वा | ,, | ६४।७ |
| (२२) विशेषान् शूद्रराज्ञस्तु | ,, | ४७।२।४६ |
| (२३) तस्याग्रतो नृपः स्नायात् | अग्निपुराणे | १८५।१३ |

| | | |
|---|---|---|
| (२४) पूज्य देव चतुर्मुखम् | वामनपुराणे | ४६।३६ |
| (२५) महान्ति पापन्यपि नारदाणु | ,, | ६६।११ |
| (२६) कुण्डिनं न प्रवेक्ष्यामि अहत्वा | ब्रह्मपुराणे | १६६।६ |
| (२७) आगता पतिना विना | शिवपुराणे | ३।२४ ४१ |
| (२८) भारतेषु स्त्रिय. पुंसः | कूर्मपुराणे | ४७।२१ |
| (२९) लोकान् प्रकल्पयित्वा तु | वायुपुराणे | ६।३४ |
| (३०) सद्भाव एषो भवते मयोक्तः | विष्णुपुराणे | २।१३।४४ |

एवं पराणेषु कुत्रापि छन्दोभङ्गभिया सन्धिः, कुत्र च सन्ध्यभावः कुत्रचिद् विभक्तिपरिवर्तनं क्वचन लिङ्गव्यत्यय, आत्मनेपदस्थाने परस्मैपदप्रयोगः, परस्मैपदस्थाने चात्मनेपदप्रयोग कुहचिच्च परस्मैपदिभ्यो धातुभ्य. शानच्प्रत्ययः आत्मनेपदिभ्यः धातुभ्य शतृप्रत्यय.। क्वचन-स्वरादिभ्य धातुभ्यो भूतकाले अडागमाभाव, क्वचन व्यञ्जनादिभ्यो धातुभ्योऽडागमः, निरुपसर्गकधातुभ्यो ल्यप्प्रत्ययः। कुत्रचित् सोपसर्जकजातुभ्यो ल्यबभावः। एवं बहवोऽपाणिनीयाः प्रयोगा दृष्टि-गोचरी भवन्ति। यान् कियन्तो लिपिकाराः च. तु हि-आदिपदानि प्रयुज्य शुद्धं कर्तुं प्रयतन्ते, किन्तु नेदमुचित प्रतिभाति, यतो हि व्याव-हारिकसस्कृतशब्दाना प्रयोगकर्तॄणां पुराणाना कृते एते अपाणिनीयाः प्रयोगा भूषणमेवास्ति न दूषणम्। विशेषत. ११२ पृष्ठे द्रष्टव्यः।

**पारिभाषिकशब्दप्रयोगः**

सर्वेषु शास्त्रेषु पारिभाषिकशब्दानां सन्निवेशो विद्यते, यो हि तस्य शास्त्रस्य नैजी विशेषता। तदनुसारमेव पुराणेष्वपि पारिभाषिकशब्दानां प्रचुरमात्रायां प्रयोगोऽस्ति। यथ-सर्ग-प्रलय-मन्वन्तर-युग-कल्प-परार्द्ध-सन्धि-सन्ध्यशादयः शब्दा। व्याकरणनियमव्युत्पत्यनुसारं लोकव्यवहारे सामान्यरूपेण योऽपि अर्थ सम्भवेत्, परन्तु पुराणेषु प्रयुक्तनामेषां शब्दाना स एवार्थोऽभिमतो भविष्यति, यो हि व्यासपरिभाषया निश्चितो भवेत्। अत. पुराणानामनुशीलनसमये तेषा यथार्थेष्वर्थेषु अवश्य ध्यान प्रदेयमन्यथा वैपरित्यभ्रमोऽनिवार्यतया सम्भवेत्।

**वाक्यभेदः**

यथा प्रकाशतेजसोरग्नेः स्वाभाविकं रूपं विद्यते तथैव ब्रह्मण शक्तेः मायाया अपि स्वरूपं सत्त्वरजस्तमोमयं त्रिगुणात्मकं वर्तते, यस्य संकेतः श्वेताश्वतरोपनिषदि दृश्यते-अजामेका लोहितकृष्णशुक्लाम् (४।५)। एवं

जगत कारणभूतायाः प्रकृतेः त्रिगुणात्माकत्वात् प्रकृतिजन्यं समस्तं विश्वमपि त्रिगुणात्मकं स्वीकृतमस्ति। एवं त्रिगुणस्य व्यापकता वेदेषु वेदसम्मतसमस्तशास्त्रेषु च समानरूपेण विद्यमानाऽस्ति। अत एव भगवता श्रीकृष्णेनापि गीताया वेदस्य त्रैगुण्यविषयकत्व स्पष्टमुक्तमस्ति- त्रैगुण्यवि॰ या वे॰ा निस्त्रैगुण्यो भवार्जुन। (२।४१) एतदनुसारमेव वेदशास्त्र-मर्मज्ञैः मुनिभिर्वेदे पुराणे श्रुतिसम्मतशास्त्रेषु च (क) भयानक-(ख) रोचक- (ग) यथार्थभेदत त्रिप्रकारकाणि वाक्यानि कथितानि सन्ति[१]।

## (क) भयानकं वाक्यम्

तत्त्वदर्शिभि विद्वद्भि पापजनकेभ्योऽधर्मकार्येभ्यो निवृत्तये यानि भयप्रदानि वचनानि वेदेषूक्तानि सन्ति तानि भयानकानीत्युच्यन्ते[२]—

यथा यजुर्वेदे—अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते। ( ४०।९ )

अस्मिन्नीशावास्यमन्त्रेऽक्षरार्थमगृहीत्वा तात्पर्यार्थमेव गृह्यते। मायोपासना महापापमस्ति। ततो निवृतये जीवानामन्धकारप्रवेशभय प्रदर्शितमस्ति। यतो मायानिवृत्ति जीवानां प्रमुखं लक्ष्यमस्ति। एव पुराणेष्वपि पापकर्मणो निवृतये भयानकशब्दानामस्ति प्रयोगो यथा—

आमन्त्रितस्तु य. श्राद्धे योषितं सेवते द्विजः।
पितरस्तस्य तं मासं तस्य रेतसि शेरते ॥ वा॰ पु॰ ९८।६०

गत्वा च योषित श्राद्धे यो भुङ्क्ते यश्च गच्छति।
रतोमूत्रकृताहारास्तं मासं पितरस्तयो ॥ ब्र॰ पु॰ २२०।१०८

---

१. वेदेष्वथ पुराणेषु तन्त्रेऽपि श्रुतिसम्मते।
भयानकं रोचकं च यथार्थमिति भेदत.॥
वाक्यानि त्रिविधान्याहुस्तद्विदो मुनय. पुरा। ध॰ क॰ द्रु॰ ख॰ ६ पृ॰ ५२

२. पापादज्ञानसम्भूताद्विषयाद् भीतिकृद्वचः।
भयानकमिति प्राहुर्ज्ञानिनस्तत्वदर्शिनः॥ ध॰ क॰ द्रु॰ पृ॰ ५३
मुक्तोऽध्यात्मलक्ष्ये च रुचिकृद्वचनं सुरा.।
रोचकं तद्धि निज्ञेयं श्रुतौ तन्त्रपुराणयोः॥ (ध॰ क॰ द्रु॰ पृ॰ ५४)

### (ख) रोचकं वाक्यम्

स्त्रीपुरुषयोः धार्मिककृत्येषु प्रवृतये वेदपुराणतंत्रशास्त्रेषु यत् प्रशंसात्मकं रुचिकरं च वाक्यमुक्तमस्ति तद्वैदिकप्रक्रियानुसारमर्थवादवाक्यं रोचकं च कथ्यते[१]—

यथा—(क) गावां मण्डूका ददत शतानि। (तै० सं०)

(ख) सर्पाः सत्रमासत। (शा० दी० जै० सू०, शा० भा०)

इत्यनयोर्द्वयोर्वाक्योरेतावदेव तात्पर्यमस्ति यत् (क) मण्डूकसदृशाः तुच्छजन्तवोऽपि यदा गोदानं कर्तुं प्रभवन्ति, तर्हि सर्वसाधनसम्पन्नैः सर्वश्रेष्ठैर्मनुष्यैरवश्यं गोदानं कर्तव्यम् (ख) एवं विषधरा सर्पा अपि यज्ञं कर्तुं क्षमन्ते, तर्हि सकलकार्यक्षमैर्मनुष्यैस्तु यज्ञानुष्ठानमवश्यमेव विधेयम्। यदि कश्चित् समालोचकोऽर्थवादे ध्यानमदत्वा मण्डूकसर्पद्वारा क्रियमाणगोदान-यज्ञानुष्ठाने अवास्तविके मत्वा लोकव्यवहारे एवं कार्यमसम्भवं मत्वा वेदमाक्षेप्तुमुद्यतो भवेत्तर्हि तस्य शास्त्रतात्पर्यानभिज्ञतैव स्यात्। (शावरभाष्य तर्क पा० १।२।३५) वेदवत्पुराणेष्वपि विविधशुभकर्मसु सन्मार्गे च रुचिवर्द्धनाय रोचकपद्धतरेनुरणं कृतं विद्यते। यथा—

यावत् पादं नरो भक्त्या गच्छेद् विष्णुप्रदक्षिणे।
तावत् कल्पसहस्राणि विष्णुना सह मोदते॥
(प० पु० ७।११।५२)

प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम्।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात्॥
(श्री० भा० ११।२७।५२)

### (ग) यथार्थं वाक्यम्

अक्षरार्थानुसारि तत्त्वज्ञानोपदेशकं विधिनिषेधात्मकं वाक्यं यथार्थमुच्यते[२]—

यथा ऋग्वेदे—अक्षैर्मादिव्य, कृषिमित् कृषस्व (१०।३४।१३) यजुर्वेदे च मागृधः कस्य स्विद्धनम् (४०।१) अनयोर्वेदवाक्ययोर्द्यूतं न कर्तव्यं, मनसा कृषिः कार्या, कृषिकर्म परमो धर्मोऽस्ति, परधने मनो न नेयम्। इति आदेशा दत्ताः सन्ति। ते वस्तुतः तथैव सन्ति द्यूतव्यसनहीनस्य कृषिकर्तुः परधनाकाङ्क्षिणश्च धनीभवनं यशस्विभवनञ्च प्रत्यक्षसिद्धमस्ति।

---

२. अध्यात्मतत्त्व-संश्लिष्टं तत्त्वज्ञानोपदेशकम्।
वचो यथार्थं संप्रोक्तं यूयं जानीथ निर्जराः॥

अस्या एव पद्धतेः पुराणेष्वपि अनुकरणं कृतमस्ति। यथा तीर्थसेवनप्रसङ्गे पद्मपुराणे—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्तिश्च स तीर्थफलभाग्भवेत्॥ (प०पु०उ०ख० २३७।३२)

प्रसंगेऽस्मिन् संयम-ज्ञान-तपश्चर्यादिभिः तीर्थसेवनफललाभस्य यत् समर्थनं कृतमस्ति, तद् वास्तविकरूपेण तथैवास्ति।

एवं वेदवाक्यवत् पुराणवाक्येष्वपि भयानक-रोचक-यथार्थवादैः संगतिं कृत्वाऽर्थकरणं श्रेयस्करं बुद्धिमत्ता शास्त्ररहस्यज्ञता तथा शास्त्रप्रियता चास्ति। अत्र विषये विस्ताराय द्रष्टव्यो धर्मकल्पद्रुमस्य तृतीयो भागः पुराणदिग्दर्शनञ्च।

**वेदपुराणयोरर्थपद्धतिः**

यथा सर्वेषां शास्त्राणां स्वे स्वे विशेषविषया भवन्ति, येषां मुख्यतया प्रतिपादनं तेषु तेषु शास्त्रेषु कृतमस्ति तथैव पुराणानामपि द्वौ विशेषविषयौ स्तः (१) सृष्टिप्रक्रियाया विवेचनम् (२) आख्यानानां कथनञ्च। यथा पुराणानां सृष्टिविषयकसिद्धान्तज्ञानाय विभिन्नदार्शनिकसिद्धान्तानां ज्ञानमस्ति नितान्तमावश्यकम् तथैव येषां प्रतिपादनं दर्शनशास्त्रेषु विशेषरूपेण कृतं विद्यते। एवमेव पौराणिकानामाख्यानानां रहस्यस्य यथार्थज्ञानाय तत्तदाख्यानानां मूलस्य वेदवाङ्मयस्य ज्ञानमावश्यकं वर्तते, यत्राख्यानानां बीजं निहितमस्ति। अतो वैदिकानामाख्यानानामाधारेण पौराणिकाख्यानादीनामर्थकरणं नितान्तमावश्यकमस्ति। अद्यत्वे वेदार्थनिर्णये यास्काचार्यप्रणीतस्य निरुक्तस्यैव प्राधान्यं मन्यते, यतो हि वैदिकसाहित्यसागरस्यैकमिदमेव ग्रन्थरत्नमत्याचारिणां यवनसम्राजाममानुषिकैः कृत्यैरग्निसादवशिष्टं वर्तते, यत् पूर्ववत् सुरक्षितं सदस्माकं कृते गुरोः कार्यं करोति।

यथा निरुक्ते एकस्यैव वेदमन्त्रस्याध्यात्मिकाधिदैविकाधिभौतिका अर्थाः क्रियन्ते तथैव पुराणानां कियत्सु स्थलेष्वपि आध्यात्मिकाऽधिभौतिकाधिदैविकाश्चार्था संघटन्ते। यदि कस्मिंश्चित् पुराणे आध्यात्मिकस्यार्थस्य मुख्यताऽस्ति, तर्हि द्वितीयस्मिन् पुराणे आधिभौतिकस्यार्थस्य प्राधान्यमस्ति तथा तृतीयस्मिन् पुराणे आध्यात्मिकस्यार्थस्य मान्यताऽस्ति यथा ब्रह्मदुहितृविषयककथायाःसंकेतःश्रीमद्भागवते ब्रह्मवैवर्तेदेवीभागवते च वर्तते परं त्रिषु पुराणेषु इयं कथा भिन्नभिन्नरूपेण कथिताऽस्ति। श्री

मद्भागवतस्य तृतीये स्कन्धे कथेयमाधिभौतिकस्यार्थस्याभिप्रायेणोक्ताऽस्ति। ब्रह्मवैवर्ते आध्यात्मिकस्यार्थस्य निर्देशोऽस्ति। तथा देवीभागवते आधिदैविकस्यार्थस्यास्ति संकेतः। अतोऽधिकारिभेदाद् यथा वेदेषु एक एव मंत्रः प्रसंगानुसारमर्थभेदादनेकेषु कार्येषु प्रयुज्यन्ते तथैव पुराणेष्वपि प्रसंगानुसारमधिकारिभेदाद् विभिन्नार्थकरणे न काप्यऽस्ति विप्रतिपत्ति र्नवा किमप्यनुचितम्। पुराणेषु यत्र यत्र वेदविज्ञानं मनोरञ्चनोपाख्याने वक्तुं यत्नः कृतोऽस्ति, तत्र तत्र पुराणानां वर्णनशैली इयती गभीरा रहस्यमयी च जाताऽस्ति, यस्या अनेकेऽर्था भवन्ति, या न साधारणबुद्धिगम्या भवति। यथेन्द्रवृत्रासुरयोः प्रसिद्धयुद्धकथा। कथेयं श्रीमद्भागवते विष्णुपुराणे च महता विस्तरेण लिखिताऽस्ति। भक्तिमार्गानुसारं वृत्रो भगवदनुगृहीत आसीत्। शापादसुरयोनौ समुत्पन्नः। अत एवेन्द्रेण सह युध्यतोऽस्य माहान् उदारतापूर्णो व्यवहारो दृश्यते। इन्द्रस्य हस्ताद् वज्रे निपतिते तस्मिन् प्रहारकरणं तु दूरमासीत्, किन्तु महत्या उदारतया तमुत्थापयितुं कथयता तेन यस्या नीतेः उपदेशो दत्तस्तच्छ्रुत्वा महेन्द्रो लज्जितो जातः[1]। वृत्रासुरस्योक्तौ भक्तिमार्गस्य तद्रहस्यं निहितमस्ति यच्छ्रुत्वा भक्तहृदयं गद्गदं भवति। अत्रैकत्र भक्तिरसस्य प्रवाहो वहति, तर्हि अपरत्र विज्ञाननिर्भरणी निःसरन्ती दृश्यते। वैज्ञानिका हीन्द्रवृत्रासुरयुद्धं वर्षाविज्ञानं कथयन्ति, यतो हि ते वृत्रोपाख्याने रूपकेण वर्षा विज्ञानं मन्यन्ते। यास्कमुनिनाऽपि स्वकीये निरुक्ते वृत्रोपाख्यानं वर्षाविज्ञानमभिमतमस्ति—तत्र को वृत्रः ? मेघ इति नैरुक्ताः। त्वाष्ट्रोऽसुर इत्यैतिहासिकाः। अपां च ज्योतिषश्च मिश्रीभाव कर्मणो वर्षकर्म जायते (निरुक्त २।५।२)

अस्य व्याख्यां कुर्वता दुर्गाचार्येण लिखितं यत्—तस्मिन् हते वृत्राख्ये मेघे हते प्रस्यन्दिरे आपः। तदभिमानिनी एषा। एवं ब्रह्मणः स्वपुत्र्याः सरस्वत्याः पश्चात् कामातुरत्वेन गमनमपि सान्ध्याविज्ञानमस्ति। सन्ध्या सूर्यस्याग्रे गच्छति सूर्यात् सन्ध्योत्पत्तिरपि जायते। अतः सन्ध्या सूर्यस्य पुत्री कथ्यते। पुराणमर्मज्ञा विद्वांसो वदन्ति, यत् पुराणानामर्थेषु महत्या सावधानतया सूक्ष्मदृष्ट्या चोहापोहो विधेयः। पुराणेषु कुत्रचिदियान् सूक्ष्मो विषयोऽस्ति, य उपरिदृष्ट्या

---

१. इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः।
तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः॥
(श्री० भा० ६।१२।६)

परस्परमसंगतं विरुद्धं च प्रतीयते, किन्तु प्रकरणोपक्रमोपसंहारपूर्वकं विचारे क्रियमाणे न कोऽपि दोषलेशो भवति।

पुराणेषु कियन्ति एवंविधानि अस्पष्टानि वचनानि सन्ति, येषां बाह्योऽर्थो न मनसि रोचते। अतस्तेषां वास्तविके व्याख्याने तेषां प्रामाणिकीना टीकानामवलोकनमपि नितान्तमावश्यकं भवति। यथा—

चतुर्भिश्चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां तस्मै होत्रात्मने नमः॥

अस्य श्लोकस्य व्याख्या नीलकण्ठेन महाभारते एवं कृताऽस्ति, ययाऽस्य श्लोकस्य वास्तविकं रहस्यं व्यक्तीभवति। आश्रावय-इति चतुरक्षरम्। अस्तु श्रौषट-इति चतुरक्षरम्। यज-इति द्व्यक्षरम्। ये यजामहे-इति पञ्चाक्षरम्। द्व्यक्षरो वषट्कार इति (गणनया) सप्तदशभिरेभिरक्षरैर्यो हूयते तस्मै होत्रात्मने नमः। श्लोकोऽयं वामनपुराणे सारोद्धारमाहात्म्यप्रकरणे कश्यपद्वारा कृतायां विष्णुस्तुतौ वायुपुराणे तथा महाभारते शान्तिपर्वणि भीष्मस्तवराजे चाङ्कितोऽस्ति। अतः पुराणानामर्थंकरणे महत्या सावधानताया आवश्यकताऽस्ति।

## भाषायास्त्रैविध्यम्

अखिललोकनायकस्य भगवतो महापुरुषस्य विष्णोर्महामायायाः प्रकृतेस्त्रिगुणत्वात् सर्वं वस्तु त्रिगुणं भवितुमर्हति, तथा च वाक्यस्यापि त्रिगुणवद् वेदे पुराणे तन्त्रशास्त्रे च भाषाया अपि त्रैविध्यं विलोक्यते। तत्राद्या (१) समाधिभाषा (२) द्वितीया लौकिकीभाषा (३) तृतीया च परकीयाभाषा[1]।

## (१) समाधिभाषा

समाधिभाषा सा प्रोच्यते, यया ऋषिभिः वेदस्यातिगभीरं समाधिगम्यं तत्त्वं ज्ञात्वा तथैव कठिनशब्दद्वारा पुराणेषु प्रयोगः

१. श्रुतौ पुराणे तन्त्रे च त्रिधा वर्णनरीतयः।
दृश्यन्ते क्रमशः सर्वास्ता वच्मि भवता पुर॥
समाधिभाषा प्रथमा लौकिकी च तथाऽपरा।
तृतीया परकीयेति शास्त्रभाषा त्रिधा मता॥ (ध० क० ख० ६ पृ० ५६)

कृतोऽस्ति। सात्त्विकानामधिकारिणां कृते इयं समाधिभाषा सर्वाधिका उपयुक्ता भवति[१]।

वेदेषु समाधिभाषाया अधिकः समावेशो लभ्यते। समाधिभाषा-द्वारा कृतस्य वर्णनस्याक्षरार्थस्तु सरलं प्रतीयते, परन्तु नास्य भाव. शीघ्रं हृदयङ्गमं भवति। यथा ऋग्वेदे—

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् (१०।१२९।१)

तथैव विष्णुपुराणेऽपि समाधिभाषाद्वारा ब्रह्मणोऽतिरिक्तस्य सर्वस्य वस्तुनोऽभाव वर्णयित्वा सृष्टेः पूर्वावस्था प्रदर्शिताऽस्ति—

नाहो न रात्रिर्न नभो भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत्।
श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत्॥ (१।२।२३)

## (२) लौकिकीभाषा

लौकिकीभाषा सा प्रोच्यते, यद्वारा ऋषिभि समाधिगम्यस्य तत्त्वस्य लौकिकरीत्यनुसारं लौकिकभावसहायतया ज्ञानाय कियद्भिः रूपकै सरललोकभाषया प्रयासः कृतोऽस्ति। इयं भाषा राजसायाधि-कारिणेऽधिका उपयुक्ताऽस्ति[२]।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्य पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥ (श्वे०उ० ४।६)

तथा ऋग्वेदे (१।१६४।२) मुण्डकोपनिषदि (३।१) च।

अस्मिन् मन्त्रे जीवब्रह्मणो पक्षिद्वयरूपेण प्रतिपादनं विद्यते। यथा लोके द्वौ पक्षिणौ एकस्मिन् वृक्षे उपविष्टौ फलं भुञ्जाते तथैव

---

१. प्रकाशयति या ज्ञानं कार्यकारणब्रह्मणोः।
समाधिसिद्धभावैर्या सम्पूर्णा सर्वतस्तथा॥
तत्त्वज्ञानमयी तद्वद् या हि वर्णनपद्धतिः।
ज्ञेया समाधिभाषा सा सात्त्विकायोपकारिका॥ (तत्रैव पृ० ५७)

२. लौकिकी रीतिमाश्रित्य वर्णयेद् याऽतिसंस्फुटम्।
तथा समाधिगम्यानां भावानां प्रतिपादिका॥
सम्पूर्णा लौकिकैस्तद्वद् रसैर्भाषाऽस्ति लौकिकी।
इयं राजसिकायैव पुरुषायाधिकारिणे॥ (तत्रैव ख० ६ पृ० ५८)

शरीररूपे वृक्षे अश्रितो जीवरूपः पक्षी स्वकृतस्य कर्मणः फलं भुङ्क्ते, परन्तु ब्रह्म कर्तृत्व-भोक्तृत्व रहितं केवल साक्षिमात्र तिष्ठति। एवं छान्दोग्ये प्रजापतिप्राणेन्द्रियाणा परस्पर विरोधपरिहारोऽपि लौकिकभाषोदाहरण ज्ञेयम्। अस्या एव वैदिकशैल्या अनुकरणं कुर्वता भगवता वेदव्यासेन श्रीमद्भागवतस्य चतुर्थस्कन्धे पुरञ्जनपुरञ्जन्योरुपाख्यानं लौकिकभाषाद्वारा व्यक्तीकृतं विद्यते। अस्मिन् पुरञ्जनोपाख्याने एकस्य विलासिनो राज्ञ जीवनस्य चित्रणं कृतं विद्यते, यत् पठित्वा कश्चिदपि सहृदयो दुःखानुभव विना न स्थातुमर्हति। यदा ईदृक् प्रभुत्वशाली सर्वसाधनसम्पन्नो राजा विलासिताचक्रे पतित्वा स्वस्वरूपं विस्मरति, यस्य परिणामो भवति अपमानपूर्वकं सर्वनाशः, तर्हि का दशा भविष्यति साधारणस्य जनस्य। अत्र भगवता व्यासेन जीवनस्य सत्यं स्वरूपमुपस्थापितमस्ति। एवमस्मिन् प्रसंगे लौकिकभाषाद्वारा जीवस्य इति कर्तव्यताया निर्देशो महता कौशलेन कृतोऽस्ति।

समाधिभाषा सा स्वर्गस्य मन्दाकिनी अस्ति, यया केवलं देवताभिरेवानन्दोऽनुभूयते, किन्तु लौकिकीभाषा मृत्युलोके प्रवहनशीलाया भागीरथ्या सा धाराऽस्ति, यया मन्दमतयोऽपि जीवा लाभान्विताः भवन्ति। महाभारते गृध्र गोमायुसम्वादोऽप्येतत्कोटिक एवास्ते।

### (३) परकीया भाषा

परकीया भाषा सा प्रोच्यते यस्यामितिहासद्वारा धर्मस्य तत्त्वं प्रबोधितमस्ति, तथा तत्र प्रत्यक्षरूपेणासम्भवं प्रतीयमानानां वैज्ञानिकसिद्धान्ताना निरूपणं कृतं विद्यते।[१]

यथा ऋग्वदे कथितमस्ति यदेको वृषभोऽस्ति, यस्य चत्वारि शृंगाणि त्रय पादा द्वे शिरसी हस्तास्तु सप्त सन्ति। सः त्रिषु स्थानेषु बद्धो भूयो भूयो रावं कुर्वन् मनुष्येषु प्रविष्टोऽस्ति—

---

१. इतिहासमयी शश्वत् कर्णयो र्मधुराऽमला।
मनामुग्धकरी तद्वत् चित्ताह्लादविवर्द्धिनी॥
धर्मसिद्धान्तसंयुक्ता समासबहुला नहि।
ज्ञेया सा परकीयेति शास्त्रवर्णनपद्धति॥
इमामज्ञानिने तद्वत्तामसायाधिकारिणे।
विशेषतो हितकरीमाहुस्तत्त्वदर्शिनः॥ (ध० क० द्र० पृ० ५९)

चत्वारि श्रृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धा वृषभो रोरवीति महादेवो मर्त्या आविवेश ।। (४।५८।३)

अत्र मन्त्रे यादृशस्य वृषभस्य वर्णनमस्ति, न तादृग् वृषभोऽद्यावधि केनचित् कुत्रापि दृष्टः श्रुतो वा । अत्र वर्णनानुसारं चतुःश्रृंगी त्रिपाद् द्विशिराः सप्तहस्तो वृषभोऽसम्भव प्रतीयते । अस्य रहस्यं न सम्यगवबुध्यते । स्वस्वसिद्धान्तानुसारमस्य मन्त्रस्यार्थं वैदिका यज्ञपरं शाब्दिका व्याकरणपरं धार्मिकाश्च धर्मपरं कुर्वन्ति । एवं पुरुषसूक्तेऽपि सहस्रपादाक्षिशिरा पुरुष परकीयाया भाषाया उदाहरणमस्ति ।

परकीयाया भाषाया उदाहरणं पुराणेषु प्रचुरमात्रायामुपलभ्यते । पद्मपुराणस्य श्रीमद्भागवतमाहात्म्ये लिखितमस्ति यत्—एकदा देवर्षिर्नारद. कलियुगस्य दोषान् द्रष्टुं भूतले भ्रमन् यमुनातीरे दृष्टवान् यद् अतिदुःखिता एका युवती उपविष्टाऽस्ति तथा तस्याः पार्श्वे द्वौ अचेतनौ दीर्घ निःश्वसन्तौ वृद्धौ स्थितौ स्त । तेन साश्चर्यं पृष्टा सा उक्तवती भगवन् ! मम नाम भक्तिरस्ति, इमौ च ज्ञानवैराग्यौ मे तनयौ स्त । अहं द्रविणदेशे उत्पन्ना कर्नाटके वर्द्धिता, गुर्जरे जीर्णा जाता, पुनः वृन्दावनप्रभावेण युवती समभवम् । कृपया कथय यदहं कथं युवती अस्मि तथेमौ मे तनयौ कथं वृद्धौ जातौ स्त । वस्तुतः ससारे मातुर्वृद्धत्वं पुत्रयोर्युवत्वमेव घटते । तत्कथं वैपरीत्यं जातम् ? ।[१]

अस्मिन् प्रसंगे मातुर्युवतीत्वं पुत्रयोर्वृद्धत्वमसम्भवमिव प्रतिभाति, परन्तु वस्तुतः सन्दर्भेऽस्मिन् भक्तिर्माता, ज्ञानवैराग्यौ तनयौ प्रोक्तौ स्तः । कलियुगस्य कुप्रभावेण ज्ञानवैराग्ययोः ह्रासात् तयोः मृतप्रायोवृद्धरूपेण वर्णनं विद्यते, परन्तु सर्वसुलभत्वाद् भक्तेरुपासका अधिकाः सन्ति, तस्य प्रचारोऽपि सर्वत्राऽस्ति । अतः सा युवती उक्ताऽस्ति । एवं राजा परीक्षिता कलिनिग्रहसमये एकस्य वृषभस्य पादत्रये भङ्गे एकेन पदा स्थितिः, गवा सह राज्ञो मनुष्यवद् वार्तालापः

१. एका तु तरुणी तत्र निषण्णा खिन्नमानसा ।
वृद्धौ द्वौ पतितौ पार्श्वे निःश्वसन्तावचेतनौ ।।
साऽह तु तरुणी कस्मात् सुतौ वृद्धाविमौ कुत. ।
घटते जरठा माता तरुणौ तनयाविति ।। (१।३८, ५३)

राजद्वारा पादसंयोजनमित्यादीनि असम्भवकार्याणि परकीयाया भाषाया उदाहरणानि सन्ति। परकीयायां भाषायां धर्मस्य कस्याप्यङ्गस्य वर्णनं दृष्टान्तद्वारा कृतमस्ति। यथा सत्यस्य महिमानं बोधयितुं महाराजस्य हरिश्चन्द्रस्य चरित्रचित्रणम्। भक्तेः महिमानं बोधयितुं भक्तराजयोः ध्रुवप्रह्लादयो कथावर्णनम्। सतीधर्मस्य प्रभावं प्रकटयितु सती-सीता-सावित्री-पार्वती-अरुन्धती-अनसूया-दमयन्ती-प्रभृतीनामुत्कृष्टचरित्रवर्णनम्। पितृभक्तेः महिमानं द्योतयितुं श्रवणकुमारस्य कथानकम्। धर्मपालनाय युधिष्ठिरस्य कथा। अतिथिमहत्त्वं दर्शयितुं राज्ञो रन्तिदेवस्य मोरध्वजस्य च कथा। शरणागतस्य रक्षायै राज्ञः शिवेरुपाख्यानम्। एवविधानामुपाख्यानानां श्रवणेन निरसेऽपि हृदये सरसस्य भावस्य सञ्चारो वोभूयते।

एवं वेदवदेव पुराणेष्वपि स्थले स्थले त्रिप्रकारा भाषा मिलति या अस्मै विचित्राय विश्वस्मै स्वाभाविकैवास्ति। संसारे सर्वेऽधिकारिण समाना न भवन्ति, नापि सर्वदा एकप्रकारको भावो रुचिकरो भवति। अत पुराणेषु वेदे तन्त्रशास्त्रे च एव विधानमुपलभ्यते। एवंविधाया त्रिप्रकाराया भाषाया यथार्थरहस्यस्य ज्ञानं विना पुराणाना रहस्यं ज्ञातुं न शक्यते। ऋषिभि सर्वप्रकाराणामधिकारिणा कल्याणाय त्रिविधाया भाषाया वर्णनं कृतम् विद्यते।

ये केवलमक्षरार्थस्याधारेण पुराणाना रहस्यं ज्ञातुं चेष्टन्ते, ते महदनर्थं कुर्वते। तैरभिधेयातिरिक्तलाक्षणिकस्य व्यङ्ग्यस्य वार्थस्य ज्ञानाय प्रयत्नो विधेय.। अभिधया वृत्त्या केवलमभिधेयस्यार्थस्य ज्ञानं भवति। अतो लाक्षिणकस्य व्यङ्ग्यस्य चार्थस्य ज्ञानाय लक्षणा वृत्तिर्व्यञ्जना वृत्तिर्वा नूनमाश्रयणीया। अतः पुराणानां वास्तविकस्य रहस्यस्य ज्ञानाय त्रिविधाया भाषाया ज्ञानमस्ति नितान्तमावश्यकम्—विशेषतो द्रष्टव्यो धर्मकल्पद्रुमः, पुराणदिग्दर्शनञ्च।

परकीयाया भाषायामितिहासस्य सम्बन्धे सत्त्वेऽपि लौकिकभाषायां सर्वथेहासो नास्ति। तत्र बहुविधमलङ्कारिकं वर्णनं कस्मिन्नेकस्मिन् पुराणे तिसृणा भाषाणा प्रयोगो नास्ति। एकस्य तत्त्वस्य कस्मिंश्चित् पुराणे समाधिभाषाद्वारा कुत्रचित् लौकिकभाषाद्वारा तथा कुहचिच्च परकीयभाषाद्वारा वर्णनम् विद्यते। एवमेकस्यैव तत्त्वस्य कुत्रचिद् आध्यात्मिकभावे कुहचिद् आधिदैविक-

भावे तथा कुत्रचित् आधिभौतिकभावे वर्णनमस्ति। यथा विष्णुपुराणे प्रथमांशस्य प्रथमेऽध्याये सृष्टिवर्णनप्रसंगे प्रकृति-पुरुष-संयोगात् महत्तत्त्व-अहङ्कार-मनः-पञ्चज्ञानेन्द्रिय-पञ्चकर्मेन्द्रिय पञ्चतन्मात्रा-पञ्चमहाभूताना यद्वर्णनम् कृतमस्ति तत् समाधिभाषाद्वारा कृतमस्ति। एवमेव समाधिगम्यत्वस्य देवीभागवतस्य नवमस्कन्धीये द्वितीयेऽध्यायेऽपि लौकिकभाषाद्वारा विचित्ररूपेण वर्णनं कृतमस्ति।

देवीभागवते लिखितमस्ति यत् प्रलयकाले भगवान् विष्णुरेकाकी एवासीत्, परन्तु यदा कालप्रेरणया तस्मिन् सिसृक्षा जागृता तदा तेन स्वं शरीर भागद्वये विभक्तम्, वामभाग स्त्रीरूपेण-दक्षिणभागश्च पुरुषरूपेण परिणतौ, यौ प्रकृतिपुरुषौ प्रोच्येते। तेन पुंसा स्वशक्तिस्वरूपिणी प्रकृति दृष्ट्वा तया सह परिणयसम्बन्धं कृतवान्। परिणामस्वरूपे तस्या गर्भो जात, यः शतमन्वन्तरं प्रकृतेः उदरे वर्तमान आसीत्। अनन्तर तत एकमण्ड निःसृत यत् समस्तायाः सृष्टेराधारो विद्यते।

विष्णुपुराणे यत् सृष्टितत्त्वं समाधिभाषाद्वारा वर्णितमस्ति तदेव देवीभागवते लौकिकभाषया व्यक्तीकृत वर्तते। उभयोर्भाव एक एवास्ति, परमुभयत्रास्ति भाषावैचित्र्यम्। एवमेतदेव तत्त्वं श्रीमद्भागवतस्याष्टमे स्कन्धे द्वादशेऽध्याये वर्णितं विद्यते, यत्र भगवतो दुरत्यायाा मामाया महिम्नो वर्णनपूर्वक शिवसम्बन्धेन सृष्टे विषयो व्यक्तीकृतोऽस्ति। ब्रह्म मायातीतं वर्तते, परमेश्वरे मायायाः सम्बन्ध उपाधिरस्ति, येन तन्मनसि सृष्टि कर्तुमिच्छायां जातायां प्रकृतिं दृष्ट्वा तद्वीर्यं स्खलितं ततो विविधाना वस्तूनामजायत समुत्पत्तिः। इममेवाध्यात्मिकभावमादाय श्रीमद्भागवते वर्णन कृतमस्ति, यद् भगवतो मोहिनीरूपं दृष्ट्वा श्रीशिवो मुग्धो जातः तथा तस्य पश्चाद् धावतस्तस्य वीर्यं स्थले स्थले स्खलितं येन स्वर्णरजतादीना खनिः सञ्जात।[1]

---

१. तस्यानुधावता रेतश्चस्कन्दामोघरेतसः।
शुष्मिणो यूथपस्येव वासितामनुधावतः॥
यत्र यत्रापतन् मह्यां रेतस्तस्य महात्मनः।
तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन् महीपते!॥

श्रीमद्भागवते ८।१२।३२-३३।

महाभारते स्त्रीपर्वणि विदुरेण धृतराष्ट्रस्य चित्ते विरागमुत्पादयितुं यस्य संसारगहनस्य वर्णनं कृतमस्ति। तत्र रूपकद्वारा समाधिगम्य-विषयो लौकिकभाषया वर्णितोऽस्ति, यत्र संसार भयावह कान्तारं कथयित्वा मुक्तये उपाय प्रदर्शितोऽस्ति।

शिवपुराणे ब्रह्मविष्ण्वोर्ज्योतिलिङ्गस्यान्वेषणायोर्ध्वाधोगमनेऽपि यदा ज्ञानं न जातं तदा ताभ्या ज्ञातं यदावयोरप्युपरि महत् किमपि तत्त्वं विद्यते। पश्चाद् द्वाभ्यामपि पारस्परिको विवादस्त्यक्त। अस्येदं तात्पर्यमस्ति, यद् अनादिरनन्तो विराट् पुरुष एवं सच्चिदानन्दमयं ब्रह्मलिङ्गमस्ति। अत्र लिङ्गस्यार्थोऽस्ति चिह्नं येन चिह्नेन कस्यापि पदार्थस्य बोधो भवति, तत् पौराणिकभाषया लिङ्गमुच्यते। जीवस्य साधारणस्य तु वार्तैवकाऽस्ति। ब्रह्मा विष्णुरपि यस्यान्वेषणं कर्तुं न पारयत.। अतोऽहङ्कारो न कर्तव्य। इदमेव शिवपुराणे वर्णितताया-स्तस्या लौकिकभाषाया अस्ति रहस्यम्।[१]

## पुराणानां भाषाशैली

पुराणाना भाषा महती सुबोधा तथा शैली चात्यन्त हृदयग्राहिणी वर्तते। कश्चिदपि ग्रन्थकारः स्वप्रतिपाद्यस्य विषयस्य यथार्थं निरूपणं कयाचिद् भाषया शैल्या वा करोति, यतो हि लेखकानां वास्तविक-भावनाभिव्यक्तिसाधनं भाषाशैली एवास्ति। अतो यो लेखकः यस्या भाषाशैल्याः स्वाभीष्टं विषयं व्यक्तिकरणे समर्थो भवति, स तस्या एव भाषाशैल्या स्वकीये ग्रन्थे अवलम्बन करोति। अत एव दर्शनशास्त्रस्य समेषां सूत्र-भाष्य-वार्तिक-व्याख्याकाराणामाचार्याणां दार्शनिक विषयानुकूलैव भाषाशैली भवति। तथा सरसविषयाणां विन्यासार्थं कविभिर्भाषाशैली माधुर्यमण्डितकोमलकान्तपदावल्या अनुकूला प्रयुज्यते।

एवमर्थप्रधानानां पुराणाना भाषाशैल्या एकं विशिष्टं स्थानम्

---

१. भित्वा पातालनिलयमंगत्वा दूरतरं हरि।
नापश्यत्तस्य संथानं स्तम्भस्यानलवर्चम॥
श्रान्त. स सूकरहरिः प्रायः पूर्वरणाङ्गणम्। शि० पु० वि स० ७।१८।

अस्थि। यथा कश्चित् सुहृत् स्वमित्र-कल्याणाकामनया प्रेरितो भूत्वा तं कथोपदेशद्वारा स्वं वक्तव्यं हृदयङ्गमं कारयति तथैव पुराणमपि समस्तानां मानवानां हितभावनया स्वोपदेशप्रदस्य कथानकस्य माध्यमेन सुहृदिव स्वं मन्तव्यमर्थं बोधयत्येव।

काव्येतिहासयोः परस्परं भिन्नताया प्रदर्शनं कुर्वता यूनानी-समालोचकेन अरस्तुना कथितमस्ति, यत् कवेरैतिहासिकस्य च पार्थक्यं पद्ये गद्ये लेखे वा नास्ति, किन्त्वनयोः मुख्यमन्तरं त्विदमस्ति-यदितिहासः कथयति-किं जातम्। तथा काव्यं कथयति यत् किं भवितु-मर्हति? एवं काव्यमितिहासापेक्षया विशेषरूपेण तत्त्वप्रधानमुदात्त-ञ्चास्ति, यतो हि काव्यं सार्वभौमं सार्वजननीनं च भावं व्यञ्जयति तथेतिहासो विशेषमेककालिकं च तत्त्वं प्रकाशयति।

एवं पुराणं न तु केवलमितिहासोऽस्ति, न च काव्यं वाऽस्ति, अपितु अनयोः पार्थक्यात् पुराणानां वर्णनशैल्या भाषाया विभिन्नता स्वाभाविकी अस्ति। आत्मनो वर्णनशैल्या विशेषतयैव विश्ववाङ्मये पुराणानां विशिष्टं स्थानमस्ति। पुराणानां प्रमुखमुद्देश्यमस्ति सर्वसाधारणस्य हृदयावर्जनं विधाय धर्मे प्रवृत्तिविधानं सर्वसाधारण-पर्यन्तं वैदिकतत्त्वानामुपस्थापनं च। अत एव पुराणानि उपदेश-प्रदप्राचीनकथानां वर्णनमाध्यमेन श्रोतॄणां मनसि पापात्मक-प्रवृत्तितः पृथक् पुण्यात्मकप्रवृत्तौ अग्रेसरीं कुर्वन्ति। आत्मनो धार्मिक-प्रवृत्तिं लक्ष्यीकृत्यैव पुराणानि प्रवर्तन्ते। तानि पापपुण्ययोः विशिष्टं फलं प्रदर्श्य एकतो वर्जनायान्यतो ग्रहणाय च सुहृत्सम्मितमुपदेशं ददति, किन्तु प्रभुसम्मितवेदवत् पुराणेषु काव्यस्य सर्वेषां रसानां स्थाने-स्थाने उपयोगः कृतोऽस्ति। विशेषतया एषु वीररसस्य बहुलं वर्णनमस्ति। अस्यएतत् तत्कारणं प्रतीयते यत् साधारण जनता एतानि अधिकानि समाद्रियन्ते। अतो वैष्णवपुराणेषु देवासुरसंग्रामस्य भीषणं चित्रमङ्कितमस्ति। पौराणिकवर्णनेषु अलङ्काराणामधिकः समावेशोऽस्ति। वैदिकवाङ्मये यासां कथानां बीजमवाप्यते तासां पुराणेषु घटाटोपेन वर्णनं कृतमस्ति। इन्द्रद्वारा वृत्रवधस्य यद् वेदेषु संकेतमात्रमस्ति पुराणेषु तस्य विस्तरतो वर्णनमुपलभ्यते। त्रिपुरस्य कल्पनाऽपि वेदे निगूढमस्ति। अगस्त्योर्वश्योः कथा वेदत एव समा-गताऽस्ति। इन्द्र-वरुण-कुबेर-सूर्य-रुद्र-चन्द्रमसादीनां स्वरूपकल्पनाऽपि

वेदत एवाऽऽगताऽस्ति। तेषु गुणानुरूपस्य कल्पनाऽपि कृताऽस्ति। तीर्थ-दान-श्राद्धादीनां महिम्नि अतिशयोक्तीनां सीम्नि च ध्यानं न दत्तमस्ति। एषां मुख्यमुद्देश्यं सरलतया जनतासु धार्मिकप्रवृत्तीनां जागृतिरेव लक्ष्यते।

भूगोल-खगोलयोर्वर्णनेऽपि एकप्रकारा पद्धतिः पुराणेषु समादृताऽस्ति। मत्स्य-विष्णु-श्रीमद्भागवतादि पुराणेषु द्वीपाना विचित्रतया वर्णानं कृतमस्ति। अस्यां भौगोलिककल्पनाया प्रत्येकद्वीपाना चतुर्दिक्षु कश्चिद् रसात्मकः समुद्रोऽस्ति। पृथिव्या मध्यभागे लोकालोकनामकः पर्वतोऽस्ति, यत्र सूर्य उदेति। सूर्यस्योपरि चन्द्रमा अस्ति। सुवर्णमयस्य सुमेरो र्महत्ता प्रायः प्रत्येकपुराणेषु दत्ताऽस्ति, क्रोशस्यापि विचित्रं प्रमाणं पुराणेषु प्राप्यते। यदि चतुर्णां क्रोशानामेकमाधुनिकं योजनं स्वीक्रियेत तर्हि साम्प्रतिकी भूपरिधिः अल्पीयसी स्यात्।

पुराणनुसार सुमेरुपर्वतस्य निम्नप्रदेशे भारतवर्षस्यावस्थितिः कथिताऽस्ति परमद्यत्वे सुमेरो सम्यग्ज्ञानं नास्तिऽयदि तत्स्थाने आधुनिकं पामीरपाठारं स्वीक्रियेत तर्हि किञ्चित् सगतिः सम्भवति। द्वीपैः सह तत्रत्यनिवासिनामाचारविचाराणा संक्षिप्त उल्लेखः पुराणेषु कृतोस्ति, परमद्यत्वे भौतिकजगतः कोऽपि लाभो नास्ति। द्वीपाना समुद्राणा च वर्णनं विलोक्य यदि कश्चित् कथयेत् यत् सूतैः पुराणेषु एवंविधा कल्पना स्वकपोलकल्पनया कृतास्ति। अथवैषां सम्बन्धोऽतिन्द्रियजगताऽस्ति तर्हि न किमप्यनुचितं मन्तुं शक्यते। पुराणेषु वर्णित-जम्बूद्वीपे एकस्माद् विशालाज् जम्बूवृक्षात् पतितपक्वफलरसेन जम्बूनदनामिका नदी वहति, यत्रत्या भूमिः स्वर्णमयी अस्तीत्यत्र नाधुनिकं जगद् विश्वसीति। देवतानामसुराणां राज्ञां च राज्य-कालस्यापीयमेव स्थितिरस्ति। येषां यावतां वर्षाणा संख्या प्रदत्ताऽस्ति तावद्वर्षन्तं जीवनधारणस्य क्वचन दर्शन न भवति। एकैक युद्ध लक्षवर्षपर्यन्त चलति। एकैकस्य मुनेः समाधिः सहस्रवर्षपर्यन्तं तिष्ठति। कश्चन शतवर्षपर्यन्तं गर्भावस्थायामेव तिष्ठति। एतादृशानां वर्षाणां वर्णनं कि प्रमाणकं स्वीक्रियते इति मनसि न सम्यग् रोचते।

पुराणानां भाषा उपदेशानुरूपा व्यवहारिकी चाऽस्ति। सा व्याकरणवन्धनमक्षरशोऽनुकरणं न करोति। प० बलदेवोपाध्यायेन पुराणभाषायाः तुलना तया पुण्यसलिलया भगवत्या भागीरथ्या सह कृताऽस्ति, या आत्मनो मूलप्रवाहे आग्रहं कुर्वाणा अपि इतस्तत

आगच्छन्तीना जलधाराणा तिरस्कार न करोति, प्रत्युत सा ता अपि आत्मनि सम्मेलयित्वा स्वगन्तव्यस्थलपर्यन्त प्रापयति। पुराणानां भाषा पाणिनीयव्याकरणाश्रृखलात: उन्मुक्ता भूत्वा तद्भिन्नशब्द-रूपाणामपि ग्रहणे न संकुचति। अत: पौराणिकभाषायां कियन्तोऽपाणिनीया अपि प्रयोगा मिलन्ति। तानार्षान् कथयित्वा टीकाकारैः समाधान कृतमस्ति। यतोहि ते न वैदिकव्याकरणस्य सर्वथा अनुकूलाः सन्ति। अत: आर्षप्रयोगा बहुल छन्दसि, व्यत्ययो बहुलम् इत्यादि-वैदिकसूत्राणामाधारेण वैदिकप्रक्रियायां सुसङ्गता अभिमन्यन्ते।

वस्तुत: पुराणेषु ये अपाणिनीया: प्रयोगा उपलभ्यन्ते ते छन्दो-भङ्गभिया एव तद्रूपे स्वीक्रियन्ते। अपाणिनीयपदाना केवलं पुराणानां पद्यभागे एव प्रयोग उपलभ्यते, यत्र छन्दसा रूपाणाञ्च रक्षाकरणमेव प्रधान कारणमस्ति। तानि एव पदानि पुराणाना गद्यभागे पाणिनीय-व्याकरणानुरूपाणि उपन्यस्तानि सन्ति। यत्र कुत्रापि प्राक्तनजन-साधारणभाषापाली-प्राकृतादीनामपि प्रभावोऽपि परिलक्ष्यते। पुराणेषु यत् संशोधकै पाणिनीयव्याकरणनियमानुसारं संशोधनं क्रियते। तस्यानावश्यकता व्यक्तीकुर्वता प० बलदेवोपाध्यायेन स्वकीय मतं व्यक्तीकृतमस्ति यद् व्यावहारिकसंस्कृतस्य प्रयोगकर्तॄणां पुराणाना कृते एषामपाणिनीयप्रयोगाणा सत्ता भूषणमेवास्ति न दूषणम्।[1]

व्यावहारिकशब्दौघान् पुराणानि प्रयुञ्जते।
अपाणिनीयप्रयोगस्तु भूषण न तु दूषणम्॥[2]

## वेदपुराणयोराविर्भावक्रमविमर्शः

स्वाध्यायोऽध्येतव्य इत्यनुसारं भारतीयस्याध्ययनस्य क्रमो वेदत एवारभ्यते। धर्मशास्त्रेषु वेदं विहाय केवलमन्यस्य साहित्यस्याध्ययनेन मानवो वेदविहितकर्मणोऽधिकारी नाभिमतोऽस्ति। वेदाध्ययनेन दैव-बलविकाशपूर्वकं सकलज्ञानविज्ञानयो क्षमता पात्रता च सम्पद्यते। अता भारतीया शिक्षणप्रणाली वेदत एवारभ्यते। वेदार्थज्ञानस्य चातिगभीरतया षडङ्गाना ज्ञानमत्यावश्यक वेदार्थोपबृंहणार्थञ्च स्मृति-पुराणानुशीलनं नितान्तमुपकारीति वेदपुराणयोर्विकाशक्रमस्य संक्षिप्तो विमर्श आरभ्यते।

---

१. पुराणविमर्श पृ० ५८१-५८२। २. तत्रैव पृ० ५८३।

कोषादौ द्वौ ॐकार-प्रणवशब्दौ समानार्थकौ तथा पर्यायवाचिनावभिमतौ स्तः[1]। पुराणेषु एकाक्षरोऽविनाशी ॐकाररूपः प्रणवो ब्रह्मवाचकः प्रतिपादितोऽस्ति तथा ब्रह्म बृहद् व्यापकञ्चाभिमतमस्ति। पौराणिकमान्यतानुसारं समस्ता त्रिलोकी ॐकारात्मके प्रणवस्वरूपिणि ब्रह्मण्येव स्थिताऽस्ति। प्रणवात्मकं ब्रह्मैव जगदुत्पत्ति-स्थिति-प्रलयकारणं विद्यते। शब्दशास्त्रानुसारं त्रयाणामकारोकारमकाराणामक्षराणां योगेन ॐशब्दो निष्पद्यते। ॐकारो जाग्रत्-स्वप्न-सुषुप्तिधर्मयुक्तः साक्षाद् ब्रह्मणोऽभिन्नं रूपमभिमतं विद्यते तथा स सर्ववेदाधिपतिरुद्घोषितोऽस्ति। विष्णुपुराणानुसारं वेदादीना प्रकृतिभूतं ओमित्येवंरूपं व्यवस्थितमेकमक्षरं ब्रह्मेत्यभिधीयते, भूर्भुवः स्वरिति व्याहृतित्रयं प्रणवावस्थितमीर्यते। एवं प्रणवात्मकाद् ब्रह्मणो भिन्नस्य वस्तुनोऽभावादोकारे सर्वं प्रतिष्ठितमस्ति[2]। सूर्यो हि विष्णोरतिश्रेष्ठोऽशोऽस्ति तथा विकाररहितोऽन्तर्ज्योतिस्वरूपः ॐकार तस्य वाचको निर्दिष्टो वर्तते। तदुच्चारणेन मन्देहानाम राक्षसा विनश्यन्ति।[3]

शाब्दिकनिष्पत्तिविचारेण ॐशब्दे येषा त्रयाणामकारोकारमकाराणा योगो विद्यते, तत्र प्रत्येकं सृष्टिकर्तुब्रह्मण, पालकस्य विष्णोः, संहारकर्तुः शिवस्य च वाचको वर्तते। अतः ॐकारः सर्वशक्तिमतः पूर्णस्य परमेश्वरस्य रूपमस्ति। भगवता श्रीकृष्णेन सच्चिदानन्दघनस्य ब्रह्मणः त्रिप्रकारको नामनिर्देश. कृतोऽस्ति। यथा—ॐ, तत्, सत्, इति। अनेन नामत्रयेणैव सृष्टेरादिकाले ब्राह्मण-वेद-यज्ञादीना रचना जाता। एषु त्रिषु नामसु प्रणवस्यैव मान्यता दत्ताऽस्ति।[4]

ॐकारस्य महत्त्वप्रतिप्रादने उपनिषदा समुद्घोषो विद्यते, यत् सर्वे वेदा यस्य पदस्य वर्णनं कुर्वन्ति, समस्तं तपश्चरणं यत्प्राप्तिसाधनं वर्तते,

---

१ ॐकारप्रणवौ समौ। अ० को०=१।४

२. ध्रुवमेवाक्षरं ब्रह्म ओमित्येवं व्यवस्थितम्।
प्रणवावस्थितं नित्यं भूर्भुवः स्वरितीर्यते ।।=वि० पु० ३।३।२२

३ ॐकारो भगवान् विष्णुस्त्रिधामा वचमा पतिः।
तदुच्चारणनस्ते तु विनाश यान्ति राक्षसाः ।।
वैष्णवोऽशः पर सूर्यो योऽन्तर्ज्योतिरसंप्लवम्।
अभिधायक ॐकार स्तस्य तत्प्रेरकः पर. ।।=तत्रैव२।८।५५-५६

४ ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविध स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ।।=गीता० ७।२३

तथा यत्संकल्पने मुमुक्षवो ब्रह्मचर्यस्य पालनं कुर्वन्ति संक्षिप्तरूपं ॐ एव तत् पदमस्ति। अत एवेदमक्षरं प्रवणमेव ज्ञात्वा यः साधको यत् पदमिच्छति तदेव स प्राप्नोति। इदं श्रेष्ठमालम्वनमस्ति। एतदेव ज्ञात्वा साधको ब्रह्मलोके महिमसमन्वितो भवति।[१]

प्रणवस्य महिम्नो वर्णनप्रसङ्गे योगेश्वरस्य भगवतः श्रीकृष्णस्य घोषणाऽस्ति यत् सर्वाणीन्द्रियद्वाराणि संयम्य मनो हृद्देशे निरुद्ध्यात्मनः-प्राण च स्वमूर्ध्नि संस्थाप्य परमात्मसम्बन्धिन्या योगधारणाया स्थिरीभूय य. पुरुषः ॐ इत्येकाक्षरं ब्रह्मोच्चारयति तथा तदर्थस्वरूपं निर्गुण ब्रह्म चिन्तयन् शरीरं त्यजति स परमां गतिं (मोक्षम्) लभते।[२]

उपनिषदि ॐ इदं पदं परमात्मनोऽतिसन्निहितं नाम मतं विद्यते। नाम्नोऽस्योच्चारेण स तथैव प्रसीदति यथा संसारिण स्वप्रियनामग्रहणेन प्रसन्ना भवन्ति।[३] श्रीस्वामिशङ्कराचार्येणापि ब्रह्मणोऽर्थं निर्दिशता प्रोक्तं यत् प्रणवद्वारा मन इन्द्रियाणि च संयम्य प्रणवब्रह्मरूपया नौकया विद्वान् भयङ्करजलप्रवाहस्य पारं गच्छति[४]। उपनिषदीदमपि प्रतिपादितमस्ति यत् ॐकाराद्भिन्नं किमपि तत्त्वं नास्ति-ॐकार एतदक्षरमेव सर्वमस्ति। भूत भविष्यं वर्तमानं च तस्यैव व्याख्यानं विद्यते। अत इदं सर्वमोङ्कर एव। एवनदिरिक्तं यत् किमपि त्रिकालातीतं वस्तु वर्तते तदपि ॐकार एव।[५] ओमिति ब्रह्म, ओमितीदं सर्वम् (तै० उ० ३।८।१)।

पुराणस्य कथनमस्ति यत् स्वायम्भुवेन मनुना प्रणवमहितस्य भगवन्नाम्नो जपप्रभावेण त्रैलोक्यदुर्लभा मनोवाञ्छिता सिद्धिः प्राप्ताऽऽसीत् तथा सप्तर्षीणामुपदेशेन औत्तानपादिना ध्रुवेणैतन्मन्त्रप्रभावेण त्रिलोक्या सर्वोत्कृष्टमक्षयमुच्चतमं पदं प्राप्तम्। भगवता पतञ्जलिनाऽपि प्रणवं (ओङ्कारम्) ईश्वरवाचकमुद्घोष्य कथितं यत् साधकाय योगिने तस्य प्रणवस्य जपः, तदर्थस्वरूपपरमेश्वरस्य चिन्तनं च परमं श्रेयस्करं विद्यते, यतो हि प्रणवजपेन विघ्नानामभाव आत्मस्वरूपस्य च ज्ञानं जायते।[६] प्रणवः एव सम्पूर्णे वेदे श्रेष्ठोऽभिमतोऽस्ति।[७]

---

१. क० उ० १।२।१५-१७। २. गी० ८।१२-१३। ३ छा० उ० शा० भा० १।१।११। ४. श्वे० उ० शा० भा० ६।८। ५. मा० उ० १।

६. तस्य वाचकः प्रणवः। तज्जपस्तदर्थभावनम्। ततःप्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च। (यो० सू० १।२७-२९)

७. यत् प्रणवः छन्दसां मध्ये ऋषभः। =तै० आ० ५।३

ॐ वेदानां साङ्केतिकं रूपं प्रतीकं वा विद्यते तथाऽक्षयज्ञानस्य पुराणसाहित्यस्य च मूलं स्रोतोऽस्ति। अत्र— अ×उ×म् इत्येषां त्रयाणामक्षराणां योगोऽस्ति। तत्र अ परमेश्वरस्यास्ति वाचक., म्— वैयक्तिकस्य जीवात्मन तथा मध्यस्थ उकारः शक्त्या, लक्ष्म्याः मातुर्वा-वाचकोऽस्ति। अतो मध्यस्थोऽयमुकारो जीवात्म-परमात्मनोः संयोजकोऽभिमतोऽस्ति। श्रुत्या आत्मोपलब्धौ प्रणवं कारणरूपेण विवृण्वत्या प्रोक्तं यद् यथाऽरणेर्मन्थनात् पूर्वमरणौ स्थितस्याग्नेर्ग्रहणं दर्शनं वा न भवति, किन्तु मन्थने कृते स दृष्टिगोचरो जायते तथैवाग्निस्थानीय आत्मा उत्तरारणिस्थानीयप्रणवद्वारा मननादिभि. अधरारणिस्थानीये देहे ग्रहीतुं शक्यः।[1]

## पुराणानां प्रादुर्भावक्रमः

प्रलयसमये न दिनं न च रात्रिः नवाऽकाशो न च भूमिः नान्धकारो नापि प्रकाशो नैतदतिरिक्तं किमप्यासीत्, तदा केवलं श्रोत्रेन्द्रियादीनां बुद्धे श्चाविषय एकमात्रं प्रधानपुरुषात्मकं ब्रह्म वासीत्।[2]

एवमिदं दृश्यमानं प्रपञ्चजातमनन्तस्य गर्भे विलीनमासीत्। ग्रहनक्षत्रतारादीना पाञ्चभौतिकाना पदार्थाना कुत्रापि सत्ता नासीन्। दीर्घकालानन्तरं प्रलयावसाने ब्रह्मणि एकोऽहं बहुस्यामिति भावना समुद्बुद्धा। परिणामस्वरूपे च तस्य नाभिकमले ब्रह्मणः प्रादुर्भावो जात.। तस्य मुखात् प्रथममोङ्कार एवाविर्भूत.। अतः शास्त्रेषु ॐकारं मङ्गलवाचकं ज्ञानागारं वेदबीजं ब्रह्मस्वरूपं माङ्गलिकं च मन्यते[3]।

---

१ वह्नेर्यथा योगिनस्तस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाश.।
स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे॥ =श्वे०उ० १।१३

२. नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत्।
श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमास्तदासीत्॥=वि०पु० १।२।२३

३. ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मण. पुरा।
कण्ठ भित्वा विनिर्यातौ तेन माङ्गलिकावुभौ॥

अपि च श्रीमद्भागवते—

ततोऽभूत् त्रिविदोङ्कारो योऽव्यक्तः प्रभव स्वराट्।
यत्तल्लिङ्ग भगवतो ब्रह्मण. परमात्मनः॥
स्वधाम्नो ब्रह्मण. साक्षाद् वाचक. परमात्मनः।
स सर्वमन्त्रोपनिषद्वेदबीज सनातनम्॥ =१२।६।३९-४१

समस्तंवैदिकवाङ्मयमस्यैवोङ्कारस्य व्याख्यानमस्ति। भूत भविष्य-वर्त्तमानादिकं सकलं जगच्चास्मिन्नेवान्तर्निहितं वर्तते—ओमित्येतदक्षर-मिदं ँ सर्वं तस्योपाख्यानभूतं भवद्भविष्यदिति सर्वमोकार एव। यच्चा त्रिकाला-तीतं तदप्योकार एव ( माण्डूक्य उ० १।११ ) !

यथा एकस्मिन् विशाले वृक्षे स्कन्ध-नाल-शाखा-उपशाखा-पल्लव-पत्र-पुष्प फलादीनि अन्तर्हितानि तिष्ठन्ति, अनन्तैः प्रयत्नैरपि चर्मचक्षु-र्द्वारा तेषा प्रत्यक्षं न सम्भवति, किन्तु पृथ्वी-जलोष्म-वाय्वाकाशादीना तत्त्वाना सुयोगे ते अङ्कुरितास्तथा विकसिताः सन्तः। सर्वेषा दृष्टिगोचरी भवन्ति तथैव प्रलयदशाया कस्यापि वेदसाक्षात्कारो न भवति, किन्तु सृष्टिसमये ईश्वरीयनियन्त्रणैः ॐकारे वेदरूपेण प्रस्फुटिते सर्वप्रथमं ब्रह्मा तं गृह्णाति। तदनन्तरं निर्मलमानसाना महर्षीणा तत्साक्षात्कारो जायते। भगवतो नाभिकमलादुत्पद्यमानेन ब्रह्मणा सर्वप्रथमं वेदाना ग्रहणं कृतम्, अतः स वेदस्याविष्कारकः कथ्यते—यो ब्रह्माणं विदधाति पूर्वं यो वै वेदानंप्रहिणाति तस्मै। ( श्वे० उ० ६।१८ )

ॐकारे त्रयो वर्णा मन्यन्ते अ+उ+म्। एभिरेव त्रयो लोका धार्यन्ते। एभ्य एव त्रिभ्यो वर्णेभ्यो वेदस्य विकासो जातोऽस्ति।[1]

एषामेवोङ्कारे स्थिताना त्रयाणा वर्णाना व्याख्या गायत्र्या त्रयः पादा. सन्ति। अत एव गायत्री त्रिपदा कथ्यते। यथा ॐकारस्य प्रत्येकवर्णाना व्याख्यानं त्रिपदाया गायत्र्या एकैकः पादस्ति तथैव त्रिपदाया गायत्र्या एकस्यैकस्य पादस्य व्याख्यानं वेदस्यैकैकं काण्ड-मस्ति। वेदे त्रीणि काण्डानि सन्ति (१) कर्मकाण्डम्, (२) उपासना-काण्डम्, (३) ज्ञानकाण्डञ्च। एवं काण्डत्रयात्मको वेदो गायत्र्या एव विकसितं रूपमस्ति। यथा त्रिवर्णात्मक. ॐकार एकमेवाक्षरमस्ति। तथैव त्रिपदा गायत्री अपि एक एव मन्त्रोऽस्ति, यस्या विकसितं रूपं काण्ड-त्रयात्मको वेदोऽस्ति। अत एवाथर्ववेदादौ गायत्री वेदमाता कथ्यते।[2]

---

१. तस्यासन् त्रयो वर्णा अकाराद्या भृगूद्वह !
धार्यन्ते यै त्रयो भावा गुणानामर्थवृत्तयः।
ततोऽक्षरसमाम्नायमसृजद् भगवानज.॥ =श्री० भा० १२।६।४२

२ (क) स्तुता मया वरदा वेदमाता। =अथर्ववेद

(ख) वेदाना मातर मावित्री सम्पदमुपनिषदमुपासते।=गोपथ पू० १।३६

(ग) आगच्छ वरदे देवि ! त्र्यक्षरे ब्रह्मवादिनि !
गायत्रि ! छन्दसा मातः ! ब्रह्मयोनि ! नमोऽस्तुते॥=गा०आ०पृ० ११

कल्पादावीश्वरस्य निःश्वासरूपेणाविर्भूतो नादात्मकः काण्डत्रयो वेदरूपः शब्दराशिरनन्ते व्योममण्डले वीचितरङ्गतया व्याप्त आसीत्। यं केचन कृतधर्माणो महर्षयः साक्षात्कृतवन्तः। एवं येन ऋषिणा यो मन्त्र साक्षात् कृतः स तस्य मन्त्रस्य द्रष्टा ऋषिः प्रोच्यते। अत एवोक्तं—ऋषयो मन्त्रद्रष्टार.। ततस्ते स्वस्वशिष्यानध्याप्य शाखा-प्रशाखाभेदेन वेदं विस्तारयामासुः।

तथा च काण्डत्रयात्मको वेदः पूर्वमेक एवासीत्, यो ब्रह्मण आरभ्य व्यासपर्यन्तं गुरुशिष्यपरम्परया प्रचलित उपदिष्टश्च भवतिस्म। द्वापरान्ते महर्षिणा व्यासेन तस्यैकस्यैव वेदस्य स्तुतिप्रधानान् पद्यात्मकान् मन्त्रान् संगृह्य ऋग्वेदनाम्ना, यजनप्रधानान् गद्यात्मकान् मन्त्रान् संकलय्य यजुर्वेदनाम्ना गीतिप्रधानान् मन्त्रान् एकत्रीकृत्य सामवेदनाम्ना तथा आभिचारिकान् मन्त्रसमूहान् संगृह्य अथर्ववेदनाम्ना च क्रमशः चतुर्णां होतृ-अध्वर्यु-उद्गातृ-ब्रह्मनामकानामृत्विजा यज्ञेषूपयोगाय चत्वारो विभागाः कृताः।[1] वेदविभागकरणादेव भगवतः कृष्णद्वैपायनस्य नामान्तरं वेदव्यास इति प्रसिद्धम्।

येषु वेदमन्त्रेषु येषा केषाञ्चिदपि सम्वादरूपेण आख्यानोपाख्यानादि-रूपेण च किञ्चिद्रहस्यं व्यक्तीकृतं वर्तते, तमितिहासं प्रचक्षते येषु च मन्त्रेषु सृष्टिप्रक्रियाया निर्देशोऽस्ति तत्पुराण प्रोच्यते। एवं वेदस्य चतुर्भिर्भेदैः सह इतिहासपुराणयोरपि सम्मेलने एकस्यैव वेदस्य पञ्च भेदा अजायन्त। अत एव पुराणं पञ्चमो वेदः कथ्यते—इतिहासपुराणं पञ्चमं वेदानां वेदम् ( छान्दोग्योपनिषद् ७।२।१ ) एवं च वेदवर्णिताख्यायिकादियुतं सृष्टिप्रक्रिया प्रतिपादकं गुरुशिष्यपरम्परया प्रचलितं सन्दर्भमितिहासपुराणमुच्यते।

अतो महर्षिव्यासद्वारा सङ्कलितानामष्टादशाना पुराणानामुल्लेख. तत्पूर्ववर्तिषु ग्रन्थेषु कामं न मिलेत्, किन्तु पारिभाषिकपुराणशब्दस्य प्रयोगस्तेषु असङ्गतं नास्ति। एवं वेदविकासे पञ्च क्रमा उपलभ्यन्ते (१) ॐकारात्मको वेदः (२) गायत्र्यात्मको वेदः (३) काण्ड-

---

१. ऋक् पादबद्धो गीतिस्तु साम पद्यमयं यजुः।
एवं चतुर्षु वेदेषु त्रिधैव विनियुज्यते॥
अग्नि-वायु-रविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्‌यजुः सामलक्षणम्॥ ( म० स्मृ० १।२३ )

त्रयात्मको वेद. (४) चतुर्वेद. (५) इतिहासपुराणात्मको वा वेदश्च ।[1]

प्रधानतया ऋत्विजा सम्बन्धे होता ऋग्वेदी, अध्वर्युर्यजुर्वेदी, उद्गाता च सामवेदी भवेदिति निर्णयानन्तरं ब्रह्मा कस्य वेदस्य ज्ञाता स्यादिति प्रश्ने पूर्वोक्ताना त्रयाणा वेदाना ज्ञानातिरिक्तं ब्रह्मणश्चतुर्थस्याथर्ववेदस्य ज्ञानमत्यावश्यकमुक्तम् । अत एवैतरेयब्राह्मणे ब्रह्मत्वं केन क्रियते इत्यस्योत्तरे त्रय्या विद्यया ( ५।५।८ ) इत्युक्तं संगच्छते । अस्येदं तात्पर्यं यत् चतुर्वेदज्ञ एव ब्रह्मपदेऽधिष्ठातुं शक्य , यतो हि स समस्तस्य यज्ञस्य नियन्त्रण करोति । अनस्तस्य सर्ववेदज्ञातृत्वं नितरा सिध्यति । अपि च राक्षसादिकृतविघ्नादिनिवारणस्य ब्रह्मणो विधेयत्वात्तस्याथर्ववेदवैदुष्यमत्यावश्यम् । यज्ञीयकार्यनिर्वाहार्थमेव वेदे संहिताविभाजनं जातम् । अत एव बृहदारण्यके—अरेऽस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस ( २।४ )

## पुराणेषु पाठान्तरम्

यद्यपि प्राचीनेषु ग्रन्थेषु अनेके पाठभेदा उपलभ्यन्ते, पर पुराणेषु सर्वतोऽधिका पाठभेदाः प्राप्यन्ते । एकैकस्य पदस्यानेके पाठभेदा दृश्यन्ते । अस्य कारणपर्यवेक्षणेन प्रतीयते यत् पाठानामनेकताया मुख्यं कारणं देश. कालो व्यक्तयश्च भवन्ति । यस्य ग्रन्थस्य यावान् व्यापक. प्रचार. प्राचीनत्वं च भवति तस्मिन् तावदेवाधिकं पाठान्तरं स्वाभाविकतया जायते । अन्यान्यधार्मिकग्रन्थवत् पुराणाना पाठान्तरे किञ्चिद्बन्धनं नास्ति । स्वरचिह्नोच्चारणकारणादिभिर्वेदेषु पाठान्तरस्य सम्भावना न विद्यते, यतो हि तेषामुच्चारणाय प्रयोगाय च शिक्षा ग्रन्थेषु नियमा निर्दिष्टाः सन्ति । अशुद्धोच्चारणेन घोरप्रत्यवायस्यानर्थकारिणामनिष्टाना सम्भावनाऽपि तत्र तत्र प्रदर्शिताऽस्ति ।

स्वरवर्णवैपरीत्योच्चारणेन मन्त्रो न स्वमर्थं साधु व्यनक्ति, तदनुष्ठानेन न किमपि फलं जायते, प्रत्युत तस्य फलं विपरीतमपि जायते । मिथ्याप्रयुक्तो मन्त्रो वज्रो भूत्वा यजमानमेव विनाशयति ।[2] इन्द्रवधस्य कृते यजमानस्य वृत्रासुरस्य यज्ञे मन्त्रप्रयोक्तृ-ऋषिद्वारा

---

१. विस्तरतोऽस्य विवेचनं द्रष्टव्यं पुराणदिग्दर्शन-पुराणविमर्शयोः ।

२. मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ पा०शि० ५२ ।

स्वरस्य वैपरीत्योच्चारणेःजाते स्वयमेव वृत्रासुरः पराजितो जात इन्द्रश्च विजयी बभूव।

प्राचीनकालत एव वेदेषु स्वरवर्णोच्चारणं प्रति पद-क्रम-घन-जटा-शिखा-मालादीनामेवंभूता व्यवस्था कृताऽस्ति न तथा विश्वस्मिन् केषु धार्मिकेषु ग्रन्थेषु कृताऽस्ति। सुदूरदक्षिणप्रान्तवर्तिना भट्टाना पूर्ववर्तिना बङ्गीयभट्टाचार्याणां काश्मीरस्य कवीना काश्याश्च कर्मकाण्डिना वैदिकमन्त्रोच्चारणे भौगोलिकविषयताया सत्यामपि अद्भुता समानता उपलभ्यते। एवमन्यान्यधर्मावलम्बिनां ग्रन्थेषु अपि पर्याप्ता सावधानता दृश्यते। व्याकरण-दर्शनादिष्वपि समये समये जायमानेषु भाष्य-वार्त्तिक-वृत्तिषु परिवर्तनस्य सम्भावाना नास्ति। आचार्यशिष्य-प्रशिष्य-परम्परया अनन्तकालतोऽद्यपर्यन्तं तत्कण्ठस्थीकरणस्य प्राचीना पद्धतिर्न परित्यक्ता। तस्या एवास्ति परिणामो यदस्या विपरीत-परिस्थितावपि प्रतिशास्त्रमेवंविधा अनेके दिग्गजा विद्वास उपलभ्यन्ते येषां सम्पूर्णा विषया न कण्ठस्थाः, किन्तु स्पष्टा अवश्यं सन्ति। एवंविधाया जागरुकताया तेषु तेषु ग्रन्थेषु पाठान्तरस्य कल्पना कथंकारं स्थानं लभेत? परं पुराणेषु श्रद्धालवोऽपि तत्तच्छास्त्राणा विशिष्टा विद्वासः प्राय. पुराणेषु उदासीना एव तिष्ठन्ति, न तेषामुपयुक्तं सम्मानं ते कुर्वन्ति। धर्मशास्त्रस्य निबन्धग्रन्थेषु पुराणस्य पर्याप्तः समादर विहितोऽस्ति, परं तत्रापि ब्राह्मे, पाद्मे, वैष्णवे, लैङ्गे, कौर्मे, मात्स्ये, वाराहे, वामने, गारुडे, ब्रह्माण्डे इत्याद्युक्त्वैव तेषामुद्धरणं दत्तमस्ति। तेषा स्पष्टं विवरण न प्रदत्तमस्ति, यस्य परिणामोऽयं भवति यत् तत्तत्पुराणेषु तेषा वचनानामुपलब्धिर्दुलभा जाताऽस्ति।

पुराणानामुपदेशाधिकारं निम्नकोटिकेषु विद्वत्सु परित्यज्य उच्चकोटिका विद्वासः शास्त्रार्थकलायामाकृष्टा भूत्वा तत्सज्जीकरणे एव उद्यता जाता.। अग्रे यदा सम्प्रदायवादिन आचार्या जनसम्पर्के आत्मनः सिद्धान्तानुपस्थापयितुमावश्यकतामनुभूतवन्तः तदा तैः स्व-स्वमत-पोषकाणा पुराणाना टीका लिखित्वा लेखयित्वा वा स्वस्वसम्प्रदाय-पुष्ट्यर्थं तर्क-युक्ति-प्रमाणाना प्रयोगः कृतस्तथा तत्तत्पुराणपाठं स्थिरं विधातुं पदकृत्यस्य पद्धतिः स्वीकृता। परिणामस्वरूपे कियन्ति साम्प्रदायिकपुराणि तु पाठान्तरैरवश्यं सुरक्षितानि, किन्तु तानि पुराणानि येषु सामान्यतया स्मार्तधर्माणां प्रतिपादनमस्ति तथानेकविधानामुप-

योगिना विषयाणां चर्चाऽस्ति, एवं येभ्यः समाजस्य वास्तविकं कल्याण सम्भवति तानि पुराणानि न तेषा साम्प्रदायिकाचार्याणा कृपाभाजनानि जातानि। येषु पुराणेषु सहैव समेषा देवाना महिमा गीतोऽस्ति तैश्च कस्याप्येकस्य सम्प्रदायस्य पुष्टिः न सम्भवति। अत एवं भूतेषु पुराणेषु न कैश्चिदपि साम्प्रदायिकैराचार्यैः स्वकीया कृपा कृता, न वा केश्चित् स्मार्तविद्वद्भिः तत्र दृष्टिर्दत्ता। परिणामतः तानि पुराणानि साधारणकथावाचकानां सम्पत्तयो जातानि। तै र्यथा ईप्सितं तथैव प्रचारः प्रसारश्च कर्तुमारब्ध। तथा आत्मकल्याणाय जनमनोरञ्जनाय च तैः यादृशं वर्णनमुपयोगि प्रतीतं तेषा तेषु तादृश एव समावेशः कृत.।

अद्य इव प्राचीनकाले मुद्रणस्य सौविध्यं तु आसीदेव नहि। लिपिकाराणामीषदसावधानतया पुराणेषु पाठान्तरे नूनं योगदानं जातम्। वर्णानामाकृतिगतसमानतया हस्तलिखितप्रतिपाठकाना लेखकानाञ्च स्थाने स्थाने भ्रमो जातः। ते भ्रान्ता लेखका. पाठकाश्च यदि प्रतिलिपीः करिष्यन्ति तर्हि तदशुद्धभावानुकूला एव प्रतिलिपी. करिष्यन्ति पठिष्यान्ति च। एवमशुद्धपाठस्य पाठान्तरस्य च परम्परा प्रसृता भविष्यन्ति। एवं विभिन्नप्रादेशिकाः स्वस्वप्रतिलिपिकरणसमये शुद्धमूलपाठाद् दूरं गच्छन्ति। यत्र प्रसंगस्य विषयस्यावसरस्य वा न काऽपि चिन्तैव जायते। वर्ण-पद-वाक्य-श्लोकाना परिवर्तनं क. कथयेत्, बहवो नवीना अध्याया अपि पुराणेषु संयोजिता.। कुत्रचित् कथामध्ये एव नवीनः प्रसंगोऽपि समागतः। एवं प्रक्षेपाणामपि बाहुल्य जातम्। सामायिकपरिस्थितिकारणात् पुराणेषु अधिकं परिवर्तनं जातमस्ति। समये समये जयमानाद् धार्मिकान्दोलनात् पुराणेष्वपि पाठान्तरं जातमस्ति। एवं पुराणेषु पाठान्तरस्य परिवर्तनस्य च सत्ता नाश्चर्यकरी घटनाऽस्ति।

यथा सम्प्रति वेदाना बह्वोंऽशा लुप्ताः सन्ति तथा पुराणानामपि बहवो भागा लुप्ता.। अतिप्राचीनतया पाठविषमता न्यूनता अधिकता पाठभेदादिकं च स्वाभाविकमेवास्ति। बौद्ध-जैन-चार्वाक-यवनकालिक-धर्मान्धतया वेद-पुराणादिशास्त्राणा समूलोन्मूलनाय यज्जघन्यं कृत्यं जातं तस्य प्रभावः प्रायः सर्वेषु शास्त्रेषु पतितम्। विधर्मिभिर्बह्वोंऽगा नाशं नीताः। एवं सत्यपि पुराणानि कथाप्रसंगद्वारा अद्यत्वेऽपि सार्वजनीनानि सन्ति। कथावाचकानां व्यासाना वेदशास्त्रसंरक्षणतत्पराणा विशिष्टाना विपश्चिता च कृपात उपलब्धेषु पुराणेषु मानवमतिसुलभं परिवर्तनं नाश्चर्यजनकं विद्यते।

अतो न केवलं पुराणाना मर्मज्ञैः विद्वभिरेव अपितु संस्कृतवाङ्मयस्य विपश्चिद्भिरपि अस्या दिशि ध्यानं प्रदेयम् । पुराणानि न केवलं संस्कृतवाङ्मयस्य प्रतिष्ठाया अङ्गानि सन्ति, अपितु भारतीयसंस्कृत्या सह तेषामधिककालादेव घनिष्ठः सम्बन्धोऽस्ति । अतस्तेषामुद्धारः एकमादर्शमय, मावश्यकं सामाजिकं सास्कृतिकं च कार्यमस्ति ।

## पुराणेषु प्रक्षिप्तः पाठः

पुराणानामैतिहासिकेनाध्ययनेन वैज्ञानिकानुसन्धानेन च स्पष्टं प्रतीयते यद् मध्यकालीनया अनियन्त्रितस्वार्थपूर्णयशोलिप्सया आधुनिक्या उपेक्षाया दुष्परिणामैश्च पुराणानां वास्तविकं स्वरूपं सुरक्षितं नास्ति । मध्ययुगस्य स्वार्थमयसंघर्षात् पुराणाना बहवोऽशा लुप्ता जाताः, येषा पूर्ति. प्रक्षिप्ताशद्वारा जाताः प्रतीयन्ते, येन पुराणाना वास्तविक्या स्थिते ज्ञानं कठिनं जातमस्ति । तथा तेषु ननु–नचादीनां पर्याप्तोऽवकाशो जात । अत आलोचकाःप्राक्षेपबाहुल्यात् पुराणाना प्रामाण्यं स्वीकर्तु मन्धविश्वासं मन्यन्ते, तत्र ते न सर्वथा विश्वसन्ति । तेषा मतमस्ति यत् पुराणानि युगविशेषस्य व्यक्तिविशेषस्य च रचना न सन्ति । अपि तु सुदीर्घकालाद् अनेके जना एषा निर्माणे परिवर्द्धने च भागं गृह्णन्तिस्म । व्यासादतिरिक्तैः सूतैरपि एषा निर्माणे सहयोगो दत्तः । पुराणेषूपलभ्यमाना वक्तार. श्रोतारश्च पुराणाना सामग्र्याः परिवर्तनस्योत्तरदायिनः सन्ति । सामाजिक्योऽभिरुचयः प्रवृत्तयश्च पुराणाना रूपाणि परिवर्तयन्त्यो दृष्टिगोचरीभवन्ति । हरिवंशस्य हरिवंशपर्वणि सर्वतो न्यूनं तथा भविष्यपर्वणि सर्वाधिकं प्रक्षिप्तं स्थलं दरीदृश्यते । पुराणेषु प्रक्षिप्त-पाठोऽवश्यमस्ति, किन्तु तन्निष्काशसनस्याधिकारो न कस्यचिदस्ति । कश्चित् प्रक्षिप्ताश एतदर्थं न त्याज्यो भवितुमर्हति यत् स व्यक्त्यन्तरनिर्मितोऽस्ति । न कस्यापि मूलपाठ एतदर्थ ग्राह्यो भवितुमर्हति यत् स ग्रन्थनिर्मातुः कृतिरस्ति । यतो हि कस्यचिदंशस्य त्यागग्रहणयोः हेयता उपादेयता वास्ति प्रधानं कारणम् ।

पुराणानामनुशीलनेनानुमीयते यत्तेषां वर्ण्यविषयशैली पाठविधिषु एवंविधमैक्यमस्ति, येन तेषामेकस्मादेव मूलादुद्गमस्वीकारे न कापि विप्रतिपत्तिर्भवितुमर्हति । अद्यत्वे पुराणेषु यद्वैभिन्यं विलोक्यते तत्काणं तेषा प्रवर्तका. प्रचारका विभिन्नाः सम्प्रदाया एव सन्ति । पुराणाना

परिवर्तन-परिवर्द्धनादिहेतवोऽपि सम्प्रदाया एव वर्तन्ते। पुराणपञ्च-लक्षणातिरिक्ता अपि बहव. प्रसंगास्तेषु अनन्तरपरिस्थिति-सम्प्रदायाभ्या मम्बद्धा दृष्टिगोचरीभवन्ति। स्व स्वसम्प्रदायप्रतिष्ठायै. सम्प्रदाविद्भि विद्वद्भि स्वानुकूला विषया. संयोजिता. प्रतिकूलाश्च परिवर्जिता.। एवं भूयो भूयः कथासु परिवर्तनं न्यूनाधिक्यं मतवैभिन्यं सम्प्रदायपक्षपातत-प्रक्षेपवाहुल्यञ्चाजायत। ब्राह्म शैव-शाक्त-वैष्णव-भागवतादय. सम्प्रदा-याश्च न सन्त्यतिप्राचीना:, किन्तु ब्रह्मपुराण-विष्णुपुराण-शिवपुराण-कालिकापुराण-देवी-श्रीमद्भागवतादिपुराणाना नामकरणमुक्तसम्प्र-दायकारणादेवाजायतेतिप्रतीयते[१]।

पुराणेषु लेखकरुच्यनुसारं स्व-स्वसम्प्रदायाना प्रामाणिकतायै प्रकृत-विषयाणा पुष्ट्यर्थमेव स्थाने स्थाने प्रक्षेपा जाता.सन्ति। न तैः काऽपि हानि. सम्भवति। यथा केषाञ्चित् सदहृयाना गृहे दूरादागता अतिथयः सम्मानपूर्वकं तिष्ठन्ति तथैव प्रक्षिप्तपाठा अपि तिष्ठन्तु, मूलादपि सुरक्षिता शिरोधार्याश्च स्युः। तेषां स्थित्या का हानि, निष्काशनेन च को लाभो भवितुमर्हति? यथा प्रवीणा रत्नपरीक्षका मिश्रितं रत्नं सम्यक् परीक्ष्य साधु रत्नं गृह्णन्ति असच्च परित्यजन्ति तथैव पुराण-मर्मज्ञा· पौराणिका विद्वासोऽपि प्रक्षिप्तं पाठं सम्यक् परिचीय परित्यजन्ति मूलपाठं च गृह्णन्ति। विषयपुष्ट्यर्थं प्रक्षेपा अवश्यमादरणीया सन्ति।

पुराणेषु एकस्यैव परमात्मन उपासनायै मनुष्याणां विभिन्न-प्रकृत्यनुसारं शैव-शाक्त वैष्णव-सौर-गाणपत्यभेदात् पञ्चाना सम्प्रदायाना वर्णनमुपलभ्यते। आरम्भे प्रत्येकाधिकारिणे कस्यचिदेकस्य रूपस्या-श्रयाद् अनन्यताभावस्यावश्यकता निर्दिष्टाऽस्ति। अन्ते इयमेवानन्यता एकमेवाद्वितीयं ब्रह्मेति रूपेण परिणता जायते। अस्या एव वैज्ञानिकपद्धत्या विवेचनं पुराणेष्वपि पर्याप्तरूपेण कृतं विद्यते। तदनुसारं प्रतिपुराण यथासम्भवं पञ्चाना सम्प्रदायाना वर्णनेन साकं कस्यचिदेकस्य सम्प्र-दायस्य कृते विशिष्टं स्थानं प्रदत्तमस्ति। अत साम्प्रदायिकता नास्ति प्रक्षिप्ता:, परन्तु कस्यचित् पुराणस्य नायकं स्वसम्प्रदायाभ्यन्तरे मत्वा अन्यसम्प्रदायस्याराध्यदेवस्य निन्दाऽस्ति सर्वथा अनुचिता साम्प्रदायिकता च। कियद्भि कारणै. पुराणेषु प्रक्षिप्ताः पाठा.समागताः सन्ति। यथा—

१. सं० सा० का० इतिहास पृ० २६४।

(क) कस्यचित् प्रसङ्गस्यापेक्षाकृताया जिज्ञासाया शान्तये केनचित् पुंसा कस्यचिदंशविशेषस्य प्रक्षेपः कृतोऽस्ति ।

(ख) यत्र कुत्र साम्प्रदायिकतावशादपि प्रक्षिप्तः पाठः समागतो यथा पद्मपुराणे नास्ति विष्णोः परं धाम, देवीभागवते-योगमायावशे सर्वम् । शिवपुराणे च, नास्ति सर्वसमो देवः इत्यादि ।

(ग) केनचित् सम्प्रदायेनान्यस्य सम्प्रदायस्य न्यूनतासिद्धये निन्दार्थं वा पुराणेषु प्रक्षेपा जाताः । यथा लिङ्गपुराणे—

शिवलिङ्गं समुत्सृज्य यजते योऽन्यदेवताः ।
स नृपः सह देहेन रौरवं नरकं व्रजेत् ॥ इत्यादि—

किम्—

शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः ।
उभयोरन्तरं नास्ति यः पश्यति स मूढधीः ॥
एकामूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।

इत्यादिभिर्वचनैः देवेषु समन्वयाभिधायिनो महर्षेः व्यासस्य लेखनीतः कदाचिदपि परस्परंनिन्दाहेयतादिपरकाणि वाक्यानि निःसर्तुं शक्नुवन्ति ? तस्मात्संप्रदायिकमेतत्सर्वमिति मन्तव्यम् ।

वस्तुत आधुनिका आलोचका यानि पौराणिकरहस्यानि न ज्ञातुं प्रभवन्ति, तानि विधर्मिभिरन्यद्वारा वा मिश्रितानि अश्लीलतापूर्णानि असम्भवप्रयुक्तानि परस्परविरुद्धानि धर्महीनानि च मत्वा उपक्षन्ते ।

पुराणानामनुशीलनेनेदं सम्यक् व्यक्तं भवति यदस्माकम्पूर्वजानां सर्वाधिको गुण आसीद् यत्ते आत्मनः आत्मगुरुजनानामपि अणुमात्रमपि दोषं स्पष्टतया समुद्घोषयन्तिस्म । गुरूणामाचरणं तावदेवानुकरणीयं विद्यते यावद्धर्मानुकूलं स्यात् । अत एव गुरवः शिष्यान् प्रथमं शिक्षयन्ति-त्वया मम सद्गुणा एव ग्राह्या न दुर्गुणा अपि—यानि अस्माकं सुचरितानि तानि त्वया उपास्यानि नो इतराणि । यानि अवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि ( तैत्तिरीयोपनिषदि ११।२ ) ।

पुराणेषु गूढानि ऐतिहासिकानि तथ्यानि प्रक्षिप्तानि कथयित्वा तन्निष्काशनापेक्षया तानि तथैव सुरक्षितानि स्थापयित्वा धर्मस्य तत्त्वं निहितं गुहायाम् इत्यनुसारं वास्तविकत्वान्वेषणाय प्रयासः श्रेयस्करः सम्भवति ।

एवं पुराणवर्णितानि पूर्वजानामाचरणानि यदि कस्मिंश्चिदंशे असंगतं प्रतीयेरन् तर्हि तथास्थितान्यपि तानि न कांश्चिदपि पथभ्रष्टान् कुर्वन्ति, किन्तु तानि कर्तव्यपथकाठिन्यमवबोध्यास्मान् सुदृढान् कर्तुं शक्नुवन्ति। राज्ञो नलस्य द्यूतकारणात् किं किं कष्टं न जातम्—राज्यच्युतिः, पत्नीवियोगः, ऋतुपर्णस्य सारथ्यस्वीकृतिरित्यादीनि बहूनि कष्टानि जातानि। धर्मराजस्य युधिष्ठिरस्य द्यूतकारणात् सत्या द्रौपद्या केशग्रहणं सभाया नग्नीकरण राज्यापहरणादिकं च कष्टजातं जातम्। पाण्डवानां वनवासे बहूनि कष्टानि जातानि। अन्ते सर्वान्तकारि महाभारतसंग्राम-परिणामं पठित्वा पुराणेषु अक्षैर्मादिव्य इत्यादि वेदवचनाना महत्त्वं ज्ञायते। अतः पुराणेषु किञ्चित्प्रक्षेपपाठात् तानि सर्वथा हेयानि न मन्तव्यानि। तत्र सदसद्विवेकबुद्ध्या कार्यं साधनीयम्।

**पुराणनिर्माणकालः**

पुराणाना निर्माण कदा जातमितिप्रश्नस्य समाधानं किञ्चि-ज्जटिलमस्ति, यतो हि पुराणेष्वेषा निर्माणकालस्य क्वचनापीदमित्थं-रूपेण कश्चन सङ्केतो नास्ति। पुराणनिर्माणकालनिर्देशात् पूर्वमिदं वक्तुमत्यावश्यकमस्ति, यत् पुराणाना मूलरूपं वैदिककालेऽप्यासीत्। ब्रह्मविद्यामध्येतुं सनकादीना समीपे उपस्थितो देवर्षिस्तैः पृष्टो यद्भवता इत. पूर्वं किं किमधीतमिति। तदा तेन प्रोक्तम्—ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथाथर्वाणमङ्गिरसमितिहासपुराणं पञ्चमं वेदना वेदम् (छा० उ०३।७।१।२)।

पश्चात् भगवान् व्यासः तस्याख्यानोपाख्यानादिभिः विस्तारं विधाय सूतादीनध्यापयामास। ततस्तैः प्रवचनद्वारा एषा पुराणाना प्रचार-प्रसारौ कृतौ। अत प्राचीनपरम्पराया भारतीया विद्वांसो मन्यते। यद् द्वापरान्ते पराशरमुनिद्वारा सत्यवत्या गर्भाद् भगवतो विष्णोरं-शेनोत्पन्नेन महर्षिणा कृष्णद्वैपायनेन व्यासेन कलेः मनुष्यानल्पायुषोऽल्प-बुद्धींश्च ज्ञात्वा देवलेके वर्तमानस्य शतकोटिप्रविस्तरस्य पुराणस्य सारं संगृह्य चतुर्लक्षश्लोकैरष्टादशाना पुराणाना प्रणयनं कृतम्। अतोऽष्टादशानां पुराणाना निर्माता स्वयं महर्षि व्यास एवास्ति। अत एव पौराणिकाना डिण्डिभघोषोऽस्ति—अष्टादश पुराणाना कर्ता सत्यवतीसुतः।

१ द्वापरे समनुप्राप्ते तृतीये युगपर्यये।
जातः पराशराद् योगी वासव्या कलया हरेः ॥=श्री० भा० १।३।२।

विष्णुपुराणानुसारं तु महर्षिर्वेदव्यासः प्रथममाख्यानोपाख्यान-गाथाकल्पशुद्ध्यादिभिः सहैकस्याः पुराणसंहितायाः रचनां कृत्वा तां स्वं शिष्यं लोमहर्षणनामानं सूतमध्यापयामास। तेन च कश्यपवंशीयान् त्रीन् अकृतव्रण-सावर्णि-शांशपायननामकान् स्वकीयान् सुयोग्यान् शिष्यान् अपाठयत्। तदनन्तरं तैस्त्रिभिरपि व्याससङ्कलितमूलसंहितायाः आधारेणापरा अपि तिस्रः पुराणसंहिता निर्मिताः। अग्रे ताश्चतस्रः पुराणसंहिता आधारीकृत्य तेषां शिष्य-प्रशिष्य-तच्छिष्यपरम्परयाऽष्टादश महापुराणानि उपपुराणानि च प्रणीतानि। एतेनेदं प्रतीयते यद् भगवान् वेदव्यासः पूर्वं पुराणसंहितां संगृह्य तां क्रमबद्धां कृतवान्। ततस्तस्य शिष्यादिभिरष्टादशपुराणोपपुराणानां प्रणयनं कृतम्[1]।

वस्तुतो यथा समस्ता वेदमन्त्रा मूलावस्थायामविभक्ता आसन् तथैव पुराणान्यपि संहितारूपेण सम्मिलितान्यासन्। वेदस्य चतुर्धा वर्गीकरणवत् पुराणस्याप्यष्टादशरूपेण वर्गीकरणमजायत। वेदवर्गयिता भगवान् व्यास एव पुराणानामपि विभाजकोऽभवत्।

विभिन्नानां पुराणानां पर्यालोचनया प्रतीयते यत् कल्पान्ते देवलोके प्रतिष्ठितं शतकोटिप्रविस्तरं च पुराणमेकमेवासीद् यद् स्मृत्वा ब्रह्मदेवेन मुनिभ्यस्तदुपदिष्टम्। तदनन्तरं द्वापरे भगवतो विष्णोरंशेन समुत्पन्नेन महर्षिणा भगवता व्यासेन एतावतो विशालसाहित्यस्य ग्रहणमल्पमेधसां मनुष्याणां शक्तेर्वहिर्भूतं मत्वा लोककल्याणाय तद्विपुलकायं पुराणसाहित्यं चतुर्लक्षैः श्लोकैरष्टादशसु भागेषु विभक्तम्। एवं प्रचलितानां पुराणानां

---

१ आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।
पुराणसंहितां चक्रे पुराणार्थविशारदः॥
प्रख्यातो व्यासशिष्योऽभूत् सूतो वै रोमहर्षणः।
पुराणसंहितां तस्मै ददौ व्यासो महामुनिः॥
काश्यपः संहिताकर्ता सावर्णिः शांशपायनः।
रोमहर्षणिका चान्या तिसृणां मूलसंहिता॥
चतुष्टयेनाप्येतेन संहितानामिदं मुने।
अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते॥ =वि० पु० ३।६।१५-२०

विभाजनं सत्यवतीनन्दनेन भगवता व्यासेनैव कृतम्[१]। इत्थमेकमूल-पुराणसंहितातोऽष्टादशपुराणानां विभाजनस्य प्रवचनस्य च सङ्केतो-देवीभागवतमाहात्म्यादावप्युपलभ्यते। तथाहि मुनीन् प्रति सूतः[२]।

एवं प्राचीनपरम्परापोषका विद्वांसः पुराणाना निर्माणकालं कलि द्वापरयोः सन्धिकालं मन्यन्ते। तेषा मान्यतानुसारं महर्षिव्यासो हि सरस्वतीनद्या. तीरस्थे स्वाश्रमे समुपविष्टो ध्याननिमग्न. सन् समग्रं पुराणसाहित्यं प्रणीतवान्, परन्तु ऐतिहासिकपद्धत्या विचारकर्त्तार आधुनिका समालोचका मतमिदं न मन्यन्ते। तेषा मते स्वयं पुराणैरिद-मित्थं रूपेणात्मनोनिर्माणविषये न किमपि प्रोक्तमस्ति। अतस्तन्मतेऽ-वान्तरशताब्दीषु पुराणाना प्रणयनं संस्कार प्रतिसंस्कारश्च निरन्तरं जाजायते एव। पुराणेषु समये समये यत्र तत्र न केवल स्फुटश्लोका एव संयोगिता. प्रत्युत कियन्तः अध्याया अपि संयोजिताः सन्ति। एवं पुराणाना मूलरूपस्य समयस्य च निर्धारण नितान्तमसम्भवं तु नास्ति अपि तु दुःसाध्यमवश्यमस्ति।

केवल तारतम्य परीक्षाद्वारा एकपुराणापेक्षया द्वितीयं पुराणमर्वा-चीन प्राचीनं वा साधयितुं शक्यते। यथा विष्णुपुराण श्रीमद्भागवता-

---

१. पुराणमेकमेवासीत् पुराकल्पान्तरे नृप ?
स्मृत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः॥
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ?
व्यासरूप विभुं कृत्वा संहरेत् स युगे युगे॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा।
तदष्टदशधा कृत्वा भूलोकेऽस्मिन् प्रभाषते॥=स्क०पु०रे०मा० १।३४.३७
कालेनाग्रहण दृष्ट्वा पुराणस्य तदा विभुः।
व्यासरूपस्ततो विष्णु. सग्रहार्थं युगे युगे॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे जगौ।
तदष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाशितम्॥=प० पु० सृ० ख० १।५२

२. विष्णोरंशो मुनिर्जातस्सत्यवत्या पराशरात्।
पुराणसहिता दध्यौ तेषा धर्मविधित्सया॥
अष्टादश पुराणानि स कृत्वा भगवान् मुनि।
मामेवाध्यापयामास भारताख्यानमेव च॥=दे०भा०मा० १।१४ १७

पेक्षयाति प्राचीन प्रतीयते, यतस्तत्रानेकेऽशाः मार्कण्डेय-हरिवंशयो.-समानाः सन्ति तथा प्राकृत-वैकृतप्रलयश्लोका नवसर्गश्लोका अपि तुल्या एव वर्तन्ते। एतद्विपरीतं श्रीमद्भागवतस्य कोऽप्यंश. कस्मिश्चिदपि पुराणे आवृत्त नास्ति। अतो विष्णुपुराणापेक्षया श्रीमद्भागवतमर्वाचीन विद्यते विष्णुपुराणञ्च श्रीमद्भागवतात् प्राचीन सिद्धयति।

श्रीमद्भागवतं हि वैष्णवमम्प्रदाये भागवतसम्प्रदायस्य महामान्यो ग्रन्थोऽस्ति, किन्तु विष्णुपुराण कस्यापि सम्प्रदायस्य ग्रन्थोनास्ति। इदं हि सामान्यनया विष्णुमाहात्म्यप्रतिपादकं महापुराणमस्ति। अतो मध्ययुगीनस्य ममस्तस्य वैष्णवसम्प्रदायस्येदं मान्यमुपयोगि च पुराणं प्रसिद्धमस्ति। यथा श्रीवैष्णवसम्प्रदायेन माध्वससम्प्रदायेन वा आत्मनो मतस्य पुष्ट्यर्थमिद पुराण मान्यमभिमतं तथैव गौडीयसम्प्रदायस्य वैष्णवैरपि इदमात्मनो दार्शनिकतत्त्वानामाधारोऽभिमतोऽस्ति। एवं वायुपुराण-ब्रह्माण्डपुराणयोरपि आवृताध्यायानामधिकता वर्तते। अत इमे उभे अपि पुराणे प्राचीने स्वीकृतुं शक्येते।

पुराणेषु निर्दिष्टचरित्राणा तुलनात्मकेनाध्ययनेनापि तेपा काल-निर्णये पर्याप्तं साहाय्यमवाप्यते। यस्मिन् पुराणे यस्य चरित्रस्य यावदल्पं वर्णनमस्ति तच्चरितं तत्पुराण तावदेव प्राचीनं साधयति। प्राचीनेषु पुराणेषु भगवतः श्रीकृष्णस्य चरित्राणा कियत्य एव घटना उल्लिखिताः सन्ति। किन्तु अर्वाचीनेषु पुराणेषु तच्चरित्रस्य नवा नवा घटना योजयित्वा विस्तार. कृतोऽस्ति। यथा विष्णुपुराणस्य पञ्चमेऽशे श्रीकृष्णचरित्रं केवल १-३८ अध्यायेपु अङ्कितमस्ति, परन्तु हरिवंशे नवानां घटनामुल्लेख विधाय तत्र महती वृद्धि. कृताऽस्ति। श्रीमद्भागवते तु श्रीकृष्णचरित्रस्यापरमपि पल्लवन जातमस्ति, येन विष्णुपुराणस्य तद्घटनात्मकं स्थल निरसं श्रीमद्भागवते रसप्रधान सत् विलक्षणा माधुरीमास्वादयति। अनयोः पुराणयोः सूक्ष्मरूपेण सूचितमपि राधा-चरित्र ब्रह्मवैवर्तपुराणे श्रीकृष्णचरित्रापेक्षयाऽधिकं विस्तृतं महत्त्वपूर्णञ्च जातमस्ति। एवं श्रीकृष्णचरित्रस्य विकासक्रममालक्ष्य पं० श्रीबलदेवो-पाध्येन[1] एषा चतुर्णां पुराणाना कालनिर्णय इत्थकार कृतोऽस्ति। सर्व-प्राचीन विष्णुपुराण ततो हरिवंश तदनु श्रीमद्भागवतं तदनन्तरं ब्रह्मवैवर्तपुराण निर्मितमस्ति।

---

१ पुराणविमर्शः पृ० ५३५।

पुराणानामन्तरङ्गपरीक्षयाऽपि तेषा कालनिर्णये सहयोगोऽवाप्यते। यथाऽग्निपुराणस्य ३३७, ३४६, ३४७ अध्यायेषु काव्यविवेचनं दण्डिनः काव्यादर्श एव आश्रितत्वादयमंशो विद्वद्भिर्दण्डिन उत्तरकालस्य कृति. स्वीकृताऽस्ति। गरुडपुराणस्य ६३–१०६ अध्यायेषु यद्धि धर्मशास्त्रीयविषयाणा विवरणमुपस्थापितं वर्तते, तद् याज्ञवल्क्यस्मृतेराधारेणावृतत्वादयं भागो द्वितीय-तृतीय-शताब्द्योर्याज्ञवल्क्यस्मृतिनिर्माणानन्तरं मिश्रितः प्रतीयते।

पुराणेषु प्राय पाणिनिव्याकरणनियमानामधिकं पालनं दृश्यते। अतः सिध्यति यदिमानि पाणिनिव्याकरणनिर्माणानन्तरं निर्मितानि सन्ति। महर्षे पाणिनेः समयः चतुर्थी शताब्दी स्वीक्रियते। विभिन्नेषु पुराणेषु राजवंशनामावलीतोऽपि स्पष्टं प्रतीयते यद् गुप्तकालपर्यन्तं तेषु आवश्यकतानुसारं किञ्चित् किञ्चित् समावेशो भवन्नासीत्। तत्र नियन्त्रणाभावाद् येन यो विषयोऽभिलषितंस्तेन स विषय· पुराणेषु स्थापित। श्रीस्वामिशङ्कराचार्य - रामानुजाचार्य - मध्वाचार्य - वल्लाभाचार्य-निम्बार्काचार्यप्रभृतीना सिद्धान्तास्य समावेशस्तु प्राय पुराणेषु असंशयं जातोऽस्ति। परमनया दृष्ट्या अग्निपुराण-वायुपुराण-मत्स्यपुराणादीनि कियन्ति पुराणानि न दूषितानि सन्ति।

वहिरङ्गपरीक्षणस्याधारेणापि पुराणाना कालनिर्णय कर्तुं शक्यः। महाभारतस्य वनपर्वणि[1] वायुप्रोक्तपुराणस्योल्लेखो विद्यते। तथा तद् अतीतानागतविषयाणा प्रतिपादकं कथ्यते। वर्तमाने वायुपुराणे अतीतकालस्य घटनाया वर्णनेन सह भविष्यकालीनाना राज्ञामपि वृत्तं वर्णितमस्ति। तथा महाकविना वाणभट्टेन स्वकादम्वर्यां "पुराणेषु वायुप्रलपितम्" इति सङ्केत कृतोऽस्ति। हर्षचरिते च वायुपुराणस्वरूपस्य तथा प्रचलिततत्प्रवचनस्योल्लेखोऽस्ति। एवं सप्तमशताब्द्यां लिखिताद्धर्षच रिताद् द्वितीयशताब्द्या रचितमहाभारताच्च पूर्वमेव वायुपुराणस्य समय द्वितीयशताब्द्या पूर्वार्द्धमिइति न्यायसंगतं प्रतिभाति।

विभिन्नाना विषयाणा पुष्ट्ये धर्मशास्त्रीयनिबन्धेषु प्रमाणरूपेणोद्धृताना पुराणाना यानि वचनानि उपलभ्यन्ते। तेभ्योऽपि पुराणानां

१. एतत्ते सर्वमाख्यातमतोनानागतं तता।
वायुप्रोक्तमनुसृत्य पुराणमृषिसंस्तुतम्॥=१९१।१६॥

समयनिरूपणं कर्तुं शक्यते । यथा जयचन्दसभापण्डितस्य द्वादशशताब्द्या वर्तमानस्य विदुषो लक्ष्मीधरभट्टस्य कृत्यकल्पतरु: सर्वप्राचीनो निबन्ध-ग्रन्थो मन्यते। तत्रोद्धृताना पुराणाना तत: पूर्वकालीनत्वं स्वत एवानुमातुं शक्यम्। वल्लालसेनेन स्वनिबन्धे दानसागरे पुराणाना प्रामाणिकी समीक्षा कृताऽस्ति, यया तेषा स्वरूपस्य परिमाणस्य रचनाकालस्य च परिचय: पाठकै. प्राप्तुं शक्यते ।

पुराणेषु कलियुगीयाना विभिन्नाना राज्ञा वृत्तवर्णनमपि पुराणाना कालनिर्णये विशेषरूपेण सहायकं भवति। विष्णुपुराणे मौर्यवंशस्य प्रामाणिकं विवरण प्रदत्तमस्ति, मत्स्यपुराणे आन्ध्रवंशीयाना राज्ञा सत्यमितवृत्तमुल्लिखितमस्ति तथा वायुपुराणे गुप्तवंशीयाना राज्ञा प्रारम्भिकस्य साम्राज्यस्य वास्तविकमितवृत्तमुपस्थापितं वर्तते। अत एषा पुराणाना रचनाकाल: गुप्तवंशानन्तरं भवितुमर्हति ।

प्रसिद्धेन पाश्चात्यसमालोचकेन पार्जिटरमहोदयेन विषयस्यास्य तुलनात्मकमध्ययनं विधाय भविष्यपुराणेऽङ्कितं कलियुगीयनृपतीना वृत्तं मूलं प्राचीनतमं च स्वीकृतमस्ति। अस्यैव विस्तार. मत्स्य-वायु-ब्रह्माण्डपुराणाना भविष्यवर्णने जातोऽस्ति । विष्णुपुराणे श्रीमद्भा-गवते चोपलब्धं संक्षिप्तमिदं विवरण भविष्यपुराणस्याधारेणैव प्रस्तुत-मस्ति । भविष्यपुराणस्य कलियुगीयराज्ञामैतिहासिकस्यैतवृत्तस्य सङ्कलनमान्ध्रनरेशयज्ञश्रीसमये द्वितीयस्या: शताब्द्या अन्ते जातमस्ति। कालान्तरे यदा विवरणमिदमन्येषु पुराणेषु संगृहीतं तदा तत् स्वकाल-पर्यन्तं समानेतुं प्रयासो जातः । यथा यदा भविष्यपुराणीयान्ध्रवंशस्यैत-वृत्तं मत्स्यपुराणेषु संगृहीतं तदा आन्ध्रवंशस्यान्ते (२६० ई०) सयोजित. । पुन: वायुपुराण ब्रह्माण्डपुराणयो: ग्रहणावसरे तदेव विवरण गुप्त-साम्राज्यस्यारम्भिकोदय ( ३३५ ई० ) पर्यन्तं समायोजितम् । अग्रे विष्णुपुराणे श्रीमद्भागवते चापि तस्यैव सक्षिप्तं रूपं संगृहीतम् ।

इदमितिहासप्रसिद्धमस्ति यद् भारतवर्षे आन्ध्र-शक-यवन-म्लेच्छा-भीरादीना शासनं कुषाणराज्यस्यान्ते द्वितीयशताब्द्यनन्तरमेव जातम् । मत्स्यपुराणे आन्ध्रनरेशानां विश्वसनीयमितवृत्तमुपलभ्यते। आन्ध्र-वंशस्य समाप्तिः (२३६ ई०) शताब्द्या जाता। अतो मत्स्यपुराणस्य समय इतोऽग्रे न गन्तुं शक्नोति। वायु-ब्रह्माण्डपुराणयोः विस्तृतरूपेण तथा विष्णु-श्रीमद्भागवतपुराणयो: संक्षिप्तरूपेण च गुप्तनरेशाना चर्चया

स्पष्टं प्रतीयते यदिमानि पुराणानि समुद्रगुप्तदिग्विजयात् (३३० ई०) पूर्ववर्तिना गुप्तनरेशाना संकेतं कुर्वन्ति । यदीमानि पुराणानि समुद्रगुप्तादपि परिचितानि स्युस्तर्हि प्रयाग-साकेत-मगध पर्यन्तमेव गुप्तराजस्य सीमानं न बोधयेयुः।[1] एवमितिहासविदां विश्चिता मतमस्ति यद् भविष्य-पुराणस्य निर्माणकालो द्वितीयशताब्द्या अन्ते मन्तव्यः तथा मत्स्य-पुराणस्य रचना तृतीयशताब्द्या आरम्भकाल ( २३६ ई० ) पर्यन्तं जाताऽस्ति। वायुपुराणं ब्रह्मपुराणं च गुप्तराज्यस्यारम्भे लिखिते स्तः। विष्णुपुराणस्य कलिवृत्तप्रकरणमपि अस्यैव युगस्य कृतिरस्ति। श्रीमद्भागवतं च गुप्तकालीनमस्ति, यत् षष्ठशताब्दीपर्यन्तं पूर्णं जातम् ।

एवं फलतो वायुपुराण-ब्रह्माण्डपुराण-मत्स्य-मार्कण्डेयपुराण–विष्णु-पुराणानि च १–४०० ईशवीया कृतिरस्ति। श्रीमद्भागवत-कूर्मपुराण-स्कन्दपुराण-पद्मपुराणाना रचनाकालः ५००–६०० ई० पर्यन्तमस्ति । तथा ब्रह्मपुराण-ब्रह्मवैवर्त-लिंगप्रभृतीना पुराणाना निर्माणकाल. ६००–१०० ई० पर्यन्तं मन्तुं शक्यते । एवं पं० बलदेवोपाध्यायेन पुराणाना तिस्र. श्रेणयोऽभिमताः ( १ ) प्राचीनं पुराणम्, ( २ ) मध्यकालीनं पुराणम् तथा ( ३ ) अर्वाचीनं पुराणम् । प्राचीनेषु पुराणेषु ते वायु-ब्रह्माण्ड-मार्कण्डेय-मत्स्य-विष्णुपुराणानि मन्यन्ते । मध्यकालीनपुराणेषु ते श्रीमद्भागवत-कूर्म-स्कन्द-पद्मपुराणानि स्वीकुर्वन्ति । तथा अर्वाचीनेषु पुराणेषु अवशिष्टानि सर्वाणि पुराणानि अङ्गीकुर्वन्ति। एषु सर्वेषु इमे वायुपुराणम्, विष्णुपुराणञ्च सर्वप्राचीने पुराणे मन्यन्ते ।[2] एवं ब्रह्मपुराण-वायुपुराण-मत्स्यपुराण-विष्णुपुराणाना तुलनात्मका-ध्ययनाधारेणैतानि चत्वारि पुराणानि महाभारतकालीनानि सन्तीतिस्वीकारे न काप्यस्ति विप्रतिपत्तिः ।

यदि तर्कनिकषाया बुद्धिवादस्य च साहाय्येन पुराणाना रचनानुसारं कालनिर्णयाय वयं प्रवर्तामहे तर्हि एतत्स्वीकारायास्माभिर्बाध्यै र्भाव्यं स्यात् यत् तत्तत्पुराणना निर्माणं भिन्न-भिन्नसमये तात्कालीन-वातावरणछायायामेव जातमस्ति ।

---

१. अनुगङ्गं प्रयागं च साकेतं मगधांस्तथा ।
एतान् जानपदान् सर्वान् भोक्ष्यन्ते गुप्तवंशजाः ।। वा० पु० ९९।३८३

२. द्रष्टव्यः—तदीयः पुराणविमर्शः पृ० ५३७ ।

आधुनिका. समालोचका इतिहासकाराश्च पुराणाना रचनासमयः ईशाप्रथमशताब्दीतिस्वीकारेऽपि सङ्कोचं कुर्वन्ति। कियता पुराणानां तु ते सर्वथाऽर्वाचीनत्वमङ्गीकुर्वन्ति। निर्णयोऽयं साधारणतया ता घटनाः पठित्वा तैः क्रियते, या वैदिककालतो यवनकाल-मराठाकाल-अंग्रेजीराज्यतः सम्बद्धा सन्ति। तथात्र परस्परं पुराणेषु भिन्न-भिन्नवंशानुक्रमोऽपि सहायको भवति। वस्तुत पुराणेषु कथानकाना परस्परमसामञ्जस्यस्य वैषम्यस्य च कारणमिदं प्रतीयते यद् महर्षिणा व्यासेन इतस्ततो विकीर्णं कथानकं संगृह्य मूलपुराणसंहितारूपं प्रदाय स्वं शिष्यं रोमहर्षण सूतमध्यापयामास तथा ततो वैशंपायनादिभिरधीत्य स्वसौविध्यानुसारं विभाजनं कृत्वा तेषा कथानकाना स्वबुद्ध्या प्रचारः प्रसारश्च विहितः। एवं तत्तच्छिष्यप्रशिष्यपरम्परया पुराणाना कथानकानि अनियन्त्रितानि अमर्यादितानि च जातानि।

आधुनिका आलोचका इदमपि मन्यन्ते यद् द्वितोयशताब्दीतो दशमशताब्दीपर्यन्तं पुराणाना सङ्कलनं सम्बर्द्धनं संशोधनञ्चाजायत। अत एवैषा विषयनिरूपणे उत्तरोत्तरं विकास. परिमार्जनं च जातम्। के० एम० पणिक्करस्य लेखानुसारं महाभारतं पुराणानि च गुप्तकालस्य सन्ति कृतय.। प्राचीनतमपरम्पराणा प्रतिनिधित्वकारकाणि श्रीमद्भागवत-स्कन्द-शिव मत्स्य-वायु ब्रह्माण्डानि पुराणानि राष्ट्रीयोद्देशपूर्तये गुप्तकाले पुन लिखितानि।[1] पुराणाना समयो निश्चयपूर्वकं वक्तुं न शक्य। पुराणेषु कतिपयानि स्थलानि अतिप्राचीनानि सन्ति, कियन्ति चात्यन्तं नवानि विद्यन्ते। पुराणेषु दत्ताया राजवंशावल्या हर्षवर्द्धनप्रभृतीना प्रसिद्धाना च राज्ञामुल्लेखो नास्ति।[2] एम० ए० मेहेण्डले महोदयेन लिखितं यत् पुराणाना बीजं वैदिके साहित्येऽन्वेष्टुं शक्यते, परन्तु तेषा वास्तविकी स्थितिः सूत्रग्रन्थेषूपलभ्यते। गौतमधर्मसूत्रे स्रोतसोरूपेण विधिविधानाना निरूपण प्राप्यते, किन्तु आपस्तम्बे भविष्यपुराणस्यापि निर्देशोऽस्ति। महाभारते संकलिताना येषा पौराणिकविषयाणा निर्देश. प्राप्यते तेनापि ईशवीयवर्षात् पूर्व पुराणाना स्थितिः सिद्ध्यति।[3]

---

१. भारतीय इतिहास का सर्वेक्षण, पृ० ५३-५४।

२. संस्कृत साहित्य का इतिहास ( इलाहाबाद ), पृ० ७९।

३. दि हिस्ट्री एण्ड कल्चर ऑफ दि इण्डियन पीपुल्स, पृ० ७८।

इतिहासकाराणा मतेन यदा सामाजिकप्रतिष्ठायै लोकविश्रुतये च जैन-बौद्धधार्मिकाभ्या ब्राह्मणधर्मस्य विरोधे साहित्यनिर्माणं कर्तुं समारब्धं तदा ब्राह्मणधर्मो विरोधिधर्मप्रतिस्पर्धया तीव्रतरया समालोचनया च सङ्कीर्णता विहाय समाजस्य सम्मुखे परिष्कृतरूपेणोपस्थाय ६००–२०० ई० पू० पर्यन्तं ताभ्या सह निरन्तरं प्रतिद्वन्दिरूपेण संघर्षं कुर्वन् तावात्मसात्कृतवान् । परिणामस्वरूपेण सर्वसुलभस्य भक्तिप्रधानस्य पौराणिकधर्मस्योदयोऽभ्युदयश्चाजायत । अस्मिन्नेव बौद्धिकविकास - विचारस्वातन्त्र्ययोर्महत्त्वपूर्णे युगे जैन - बौद्ध - हिन्दु - दर्शनाना निर्माण जातम् । जातकावदातगाथाना च प्रणयनमभवत् । अयमेवासीद् रामायण-महाभारतयोरन्तिमसंस्कारस्य युगः । नन्दराज-चन्द्रगुप्तमौर्ययो. ( ३२१-२९६ ई० पू० ) कारणेन जैनधर्मस्य महान् विकासो जातस्तथा तत्साहित्यमपि लिखितम् । सम्म्राजोऽशोकस्य (२९२-२३० ई० पू०) प्रचुरं प्रश्रयं प्राप्य बौद्धधर्मस्य तथा तत्साहित्यस्य चापूर्वा प्रगतिर्बभूव । अनेकेषा लोकप्रियाणा धर्मग्रन्थाना विचारप्रधानाना दर्शनग्रन्थाना संस्कृतसाहित्यस्य काव्य - नाटक - चम्पूप्रभृतीना च प्रणयनस्य सूत्रपातोऽप्यस्मिन्नेव युगे जात. ।

ईशापूर्व षष्ठशताब्द्या ब्राह्मणधर्मस्य कर्मकाण्डप्रवृत्तिविरोधे जैन-बौद्धाभ्या पृथक् पृथक् धार्मिकपरम्परायां प्रतिष्ठा कृता । पर तन्मूले वेदावरोधपूर्विका नास्तिकताऽऽसीदतस्तयो र्निराकारभावना समाजे नाधिकं दिनं स्थिता । जनसाधरणस्य समाकर्षणाय तयो र्दुरूहा धारणा-ध्यान-समाधि-गृहत्यागोपासना-दुःखवादा लोकप्रिया न सिद्धाः । अतः समाजो ब्राह्मणधर्मस्य सुगमपद्धतौ सहसा परावृत्तः । भागवतधर्म-शैवधर्माभ्या निरीश्वरवादिनो जैना बौद्धाश्च सर्वथा निस्तेजसो विहिताः । इदं सर्वं पौराणिकधर्मस्य प्रतिष्ठायाः फलस्वरूपेण जातम् । स्थितिरियं प्रायो द्वितीयशती यावदक्षुण्णाऽऽसीत् । एवं ६०० ईशापूर्वतो द्वितीयशताब्दीपर्यन्तं जैन-बौद्धधर्मयो र्ब्राह्मणधर्मेण सह निरन्तरं संघर्षः प्रचलन्नासीत्, किन्तु ब्राह्मणधर्म एतन्मध्ये आत्मनः परिष्कारं कृत्वैकं नवीन रूपं धृतवान्, येन तत्समक्षे तत्प्रतिद्वन्दिनौ जैन-बौद्धधर्मौ पराभूतावभूताम् । आत्मन. प्रतिद्वन्दिनौ पराभूय ब्राह्मणधर्मो द्वितीयशतीतो निरन्तरमग्रेसरनुत्कर्ष प्राप । अयं तस्योत्कर्षो द्वादशशती-पर्यन्तमक्षुण्ण आसीत् । एष एवासीत् पुराणाना निर्माणस्यान्तिम-संस्करणस्य च समय. ।

भारतीये साहित्ये पौराणिकयुगस्याविर्भाव एकस्या अभिनवाया दिश सूचको जातः। भारतीयसंस्कृतौ समुपस्थितसामाजिकपरिवर्तन-प्रतिक्रिया न केवलं तत्कालीनस्य सामाजिकस्य धरातलस्य परिवर्तने एव सीमिता, अपितु आध्यात्मिकजीवनस्य मान्यतास्वपि परिवर्तन-मजायत। प्रगतिशीलेनानेन पौराणिकसमाजेन न केवलं वेदोक्ता दैवी स्थापना स्वावश्यकतानुरूपं परिवर्तिता, प्रत्युत आचार-विचार-धर्म-अनुष्ठान-व्रत-पूजोपासनादीनां कर्मक्षेत्रेऽपि अभिनवताया मान्यता प्रदत्ता।

ऐतिहासिकदृष्ट्या पौराणिकयुगे भारतीयेषु सस्कारेषु महत् परिवर्तनं जातम्। पुराणेषु धर्म-कर्म-साधनाऽराधना-रीति-व्यवहारादि-दृष्ट्या वेदापेक्षया परिवर्तिता. परिस्थितयो दृष्टिगोचरी बभूवुः।

गुप्तकालीने भारते हिन्दुधर्मः सर्वेषु क्षेत्रेषु समुन्नतावस्थायामासीत्, हिन्दुधर्मप्रतिपादका. स्मृतिग्रन्था अप्यस्मिन्नेव युगे निर्मितास्तथा भारतीयसंस्कृते विशालवटवृक्षस्वरूपाणि पुराणान्यपि प्रतिसंस्कृतानि। बहुभि स्मृतिमर्मज्ञै धर्माचार्यै महत्त्वपूर्णैः स्मृतिग्रन्थै. सर्वविधसमृद्धस्य गुप्तसाम्राज्यस्य समुज्ज्वलं यशश्चिरस्थायि कृतम्। एवं धार्मिकसाहित्य-स्य निर्माणेऽर्जने वर्द्धने च पुराणाना प्रमुखं स्थानमासीत्।

वस्तुतः पुराणाना रचना नैकस्मिन् समये जाता न वा तानि कस्या अप्येकस्या व्यक्तेः सन्ति कृतयः। वेदकालतो द्वादशशती यावत् सततं तेषा रचना संस्करणं सङ्कलनं सम्पादनञ्चाजायतेति वाचस्पतिगौरेलाप्रभृतीनामस्ति मतम्।[1] राखालदासवनर्जीमहोदयानुसारं गुप्तशासनस्यानुकूलपरिस्थितौ पुराणाना संस्करण जातम्।[2] पी० के० आचार्यस्य धारणाऽस्ति यत् स्कन्दपुराणस्य नामकरण गुप्तसम्राज. स्कन्दगुप्तस्य नाम्नाऽजयत।[3] वा० गौरेलामहोदयोऽनुमिमीते यद् वायु-विष्णु - भविष्य - भागवतपुराणेषु गुप्तवंशस्य पर्याप्त उल्लेखो विद्यते। अतः स्पष्टीभवति यदेतेषां चतुर्णां पुराणाना संस्करणं गुप्तयुगे एवाभवत्[4]

---

१. सं० सा० का इतिहास पृ० ३१० ।

२. इम्पीरियलगुप्त पृ० ११२।

३ डिक्शनरी आफ् हिन्दू आर्चिटेक्चर पृ०३१०।

४ सं० सा० का० इतिहास पृ० २९९।

डा० काशीप्रसाद जायसवालमतेन पुष्यमित्रस्य समयः (४६६ ई० पू०) एव पुराणाना रचनासमाप्तियुग आसीत् । तत्र यत् संशोधनं परिष्करणादिकं जातं तत् पञ्चमशतीतोऽग्रेऽगच्छत् ।[1]

लोकमान्यतिलकस्य मतमस्ति यत् पुराणाना समयो द्वितीयशतकानन्तरं कदापि न सम्भवति ।[2] पुराणसाहित्यस्य भारतीयपरम्परायाश्च सन्तुलिताध्ययनाधारेण पर्जिटरमहोदयस्य कथनमस्ति यत् पुराणानि मूलरूपेणेशाप्रथमशतीतोऽनन्तरस्य रचना भवितुमर्हन्ति । पुराणेष्वग्निपुराण सर्वत. प्राचीनमस्ति[3] अग्निपुराणस्य समयः इतिहासकारैश्चतुर्थशताब्दी ततो वा पूर्व प्रोक्तोऽस्ति ।[4]

अग्निपुराणस्य रचनायाः सम्बन्धे विदुषा मतैक्यं नास्ति । सुशील कुमारदे महोदयमतेनाग्निपुराणस्यालङ्कारप्रकरण दण्डि-भामहानन्तरमानन्दवर्द्धनाचार्यात् पूर्वमीशानवमशताब्दीसमीपं संगृहीतं प्रतीयते[5] काणेमहोदयेनाग्निपुराणस्य सप्तमशती तथा तत्काव्यविषयकस्याशस्य नवमशताब्दी रचनाकाल. स्वीक्रियते[6], एनयोरुभयोर्मतं खण्डयता कन्हैयालालपोद्दारेणाग्निपुराणस्य काव्यप्रकरण दण्डि-भामहानन्दवर्द्धनादिभ्य आचार्येभ्यो विलक्षण विलोक्य काव्यस्य विकासक्रमाधारेण नाट्यशास्त्रानन्तरस्य भामहादिभ्य पूर्वस्य वा मध्यकालीनं रूपमस्तीति निर्णीतम् ।[7]

डा० आर० सी० हाजरामहोदयेन कालक्रमात् प्राचीनतमेषु महापुराणेषु मार्कण्डेय-ब्रह्माण्ड-विष्णु-मत्स्य-भागवत-कूर्मपुराणानां गणना कृताऽस्ति[8] प्रथमं तेन पुराणद्वयस्य रचना विष्णुपुराणतः पूर्वमभिमता । शेषेषु विष्णु ( ४०० ई० ) वायु ( ५०० ई० ) भागवत (६००ई०) कूर्मपुराणानि (७००ई०) शतीषु रचना मन्यते[9] तेन हरिवंशस्य

---

१ जनरल आफ् दि विहार एण्ड ओरिसारिसर्च सोसाइटी ख० ३ पृ० २४७ ।

२ गीतारहस्यभूमिका ५६६ ।

३. जनरल आफ् दि रायल एसियाटिक सोसाइटी पृ० २५४-२५५ (१६२१) ।

४ हिन्दू गणित शास्त्र का इतिहास १ पृ० ५७ । ५. हि० आ० सं० पोइटिक्स जि० १ पृ० १०२-१०४ । ६. साहित्यदर्पणस्याग्रेजी भूमिका पृ० ३-५ ।

७. सं०सा०का इतिहास भा० १ पृ० ७४ ।

८. पुराणिकरेकार्ड्स शक १६४० ।

६. इन्डियन कल्चर भा० २ पृ० २३७ ।

रचनाकालश्चतुर्थशतो स्वीकृता[1] तस्य मतानुसारमग्निपुराणस्य रचना यद्यपि ८०० शताब्द्यां जाता, किन्तु तस्य काचित् सामग्री इतः पूर्वं काचिच्च पश्चात् संगृहीता।[2] नारदीयपुराणस्य रचना दशमशताब्द्या-मजायत। पश्चात्तस्य कलेवरवृद्धिः प्रक्षेपैर्जाता।[3] एवं ब्रह्मपुराणस्य रचनाऽपि दशमशताब्द्यामभवत्[4] काचित् सामग्री पश्चात् संयुक्ता स्कन्दपुराणस्य काचित् सामग्री अष्टमशताब्द्यामधिकाशाश्च पश्चात् संगृहीताः[5] गरुडपुराणस्य रचना दशमशताब्द्या जाता।[6] एवं पद्म-पुराणस्य रचना १२००-१५०० मध्ये जाता[7] ब्रह्मवैवर्तस्य रचना यद्यपि सप्तमशताब्द्या जाताऽस्ति तथापि तस्य वर्तमानं रूपं षोडशशताब्द्या वर्तते।[8]

ब्रह्मवैर्वतपुराणस्य रचनाविषये पत्रपत्रिकास्वपि विवादः प्रचलितः। तत्रकेषाञ्चिन्मते—

ब्रह्मवैवर्त षोडशशताब्द्या रचनाऽस्ति, यतो हि तत्र गीतगोविन्दकारस्य पीयूपवर्षिणो जयदेवस्य प्रभावो लक्ष्यते। एवं षोडशशताब्द्याः सामाजि-कावनतेस्तथा तात्कालिकदुर्नीतिपरायणवातावरणस्य च तत्र मुद्राऽस्ति। तत्कालीनसामाजिकचरित्रहीनताया दिग्दर्शनमपि ब्रह्मवैवर्ते निहितमस्ति। अस्मिन्नेव प्रसङ्गे भागवतस्यान्तिमं संस्करणं दशमशताब्द्यामभिमतम्। एतस्य मतस्य विपक्षे वदद्भिः विद्वद्भिः ब्रह्मवैवर्तस्य रचना कालिदासादपि पूर्वं स्वीकृताऽस्ति।[9]

## पुराणनिर्माणस्य पूर्वोत्तरसीमानौ

(क) श्रीस्वामिवर्यशङ्कराचार्य-कुमारिलभट्टाभ्या स्व-स्वग्रन्थेषु पुरा-णाना प्रचुरा चर्चा कृताऽस्ति। गद्यकाव्यकारेण महाकविना बाणभट्टेन स्वकीये हर्षचरिते स्पष्टीकृतं यत्तेन स्वजन्मस्थाने वायुपुराणस्य पारायणं श्रुतमासीत्। कादम्बर्यामपि तेन वायुपुराणस्योल्लेखः कृतोऽस्ति-पुराणेषु वायुप्रलपितमिति।

---

१ न्यू० इ० ऐटिक्वेरी भा० १ पृ० ५२२। २ तत्रैव भा० १२पृ० ६८३।
३ इ० क० भा० ३ पृ० ४७७। ४. तत्रैव पृ० २३५।
५. पु० रे० पृ० १६५। ६. तत्रैव पृ० १७४।
७. इ० क० भा० ४ पृ० ७३। ८. पु० रे० पृ० १६६।
९. गगा, प्रवाह ५ तरङ्ग ३ पृ० ३८९।

(ख) विष्णुपुराणे मौर्यसाम्राज्यस्य, मत्स्यपुराणे दाक्षिणात्यानामान्ध्रनृपाणाम्, तथा वायुपुराणे गुप्तवंशस्याविकल उल्लेखोऽवाप्यते, तेन तेषा पुराणाना तत्सामयिकमस्तित्वमनुमीयते।

(ग) महाभारते पुराणनां कतिपयान्युपाख्यानानि यथा तथान्युपलभ्यन्ते। नैमिषारण्ये द्वादशवार्षिके सत्रे शौनकेन मुनिना निजजनकाल्लोमहर्षणात् प्राप्तं पौराणिकं ज्ञानं श्रावयितुं सौतिरुग्रश्रवा. प्रार्थितः। पद्मपुराणीयमृष्यश्रृङ्गस्य वृत्तमपि महाभारते प्राप्यते।

(घ) कौटिल्येनार्थशास्त्रे सुकुमारमतीना कुमाराणा कृते पुराणज्ञानस्यावश्यकता प्रदर्शिता पुराणविदे राज्याश्रयदानाय च प्रोक्तमस्ति। अर्थशास्त्रस्य चन्द्रगुप्तकालिकत्वात् तत. पूर्वं पुराणानामस्तित्त्वं सिध्यति।

(ङ) सूत्रग्रन्थेषु पुराणानामुद्धरणान्युपलभ्यन्ते। उपनिषत्सु पुराणेतिहासयोरुल्लेखो विद्यते। अथर्ववेदे चतुर्भिर्वेदैः सह पुराणस्योत्पत्तिर्निर्दिष्टाऽस्ति। अतः पुराणानां तत्पूर्ववर्तित्वस्यानुमानं नूनं भवति।

इत्थं द्वादशशतीतो मौर्यवंश–(२७४–१८५० ई० पू०) आन्ध्रवश–(२१२ई०पू०-३३८ ई० पू०) गुप्तवंश–(२७५-५१० ई०) महाभारत-(५०० ई०पू०) अर्थशास्त्र–(३२०० ई० पू०) कल्पसूत्र–(७०० ई० पू०) उपनिषद् (१००० ई० पू०) आरण्यकब्राह्मण - वैदिकसंहिता (२५००) पर्यन्तं पुराणाना प्राचीनार्वाचीनया चर्चया तेषा पूर्वसीमा वैदिकयुग., उत्तरसीमा च गुप्तसाम्राज्यपर्यन्तं निर्द्धारयितुं शक्यते।

कस्मिश्चित् काले प्रचलिताभिः सामजिकव्यवस्थाभिः ऐतिहासिकघटनाभिः तथा पूर्ववर्तिना ग्रन्थाना परिचयद्वारापि तत्तद्ग्रन्थानां कालनिर्णय. कर्तुं शक्यते। उत्तरकालीनेषु ग्रन्थेषु नामोल्लेखेन उदाहरणद्वारा वा किञ्चित् कालस्य ज्ञानं जायते। विभिन्नाना प्राचीनानामर्वाचीनाना च लेखकाना मतमपि कालनिर्णये नूनं महत्त्वाधायकं नास्ति। एवं पुराणानामान्तरिकाणि बाह्यानि च प्रमाणानि लेखकाना मतानि तथा पुराणाना तुलनात्मकमनुशीलनं च पुराणकालनिर्णये सहायकानि भवितुमर्हन्ति।

दीनारस्य प्रयोगो हरिवंशे इन्द्रद्वारा द्वारकावासिना कृते उपह्रियमाणायोपहाराय जातमस्ति, दीनारं प्रथम-द्वितीयशताब्द्योः प्रचलिता भारतीयस्वर्णमुद्राऽस्ति, एतदाधारेण विद्वद्भिः हरिवंशपुराणस्य कालः,

चतुर्थशताब्दी निश्चिता । वायुपुराणे पुराणपञ्चलक्षणस्य पूर्णं पालनमस्ति । वायुपुराणस्य प्रक्रिया-अनुषङ्ग-उपोद्घात-उपसंहाररूपेण जायमानं विभाजनं प्राचीनशैलीसूचना ददाति । हरिवंशे वायुपुराणस्योल्लेखः प्राचीनपुराणरूपेण जातोऽस्ति । पाटिल-दीक्षितार-हाजरा-महोदयैरपि हरिवंशे वायुपुराणस्योल्लेखात्तस्य प्राचीनत्वं स्वीक्रियते ।

अवताराणा संख्या तथा तदुल्लेखक्रमश्च पुराणाना कालनिर्णये सहायकः सिध्यति । हरिवंशे बुद्धं प्रति अनास्थायास्तथा बौद्धधर्मानुयायिनः प्रति पाषण्डशब्दप्रयोगाच्च पुराणाना मध्यकालीनकृते. परिचयो दत्तः । एतदतिरिक्तं वायुपुराणे (५८।३५) विष्णुपुराणे (३।१८।१-१८)अग्निपुराणे (१६।२) भागवते(१।३।२४)मत्स्यपुराणे (४।२४४) बृहद्धर्मोत्तरे (४१।७३) च बौद्धान् प्रति अवहेलनाप्रवृतिः दृष्टिगोचरीभवति । ब्रह्मपुराण-देवीभागवतयोरवतारसूच्या बुद्धनाम्नोऽभावस्य कारणं मम्भवतो बौद्धमतं प्रति प्रदर्शिता उपेक्षैवास्ति, किन्तूत्तरकालीनपुराणेषु बुद्धस्यादरणीयस्थानप्राप्त्या तदर्थं श्रद्धाया भावो दृश्यते । श्रीमद्भागवते अवतारसूच्या बुद्धोऽपि अवतार. स्वीकृतोऽस्ति (१।३।२४) वाराहपुराणस्यदशावतारगणनाया बुद्धस्य नामास्ति (२।४) बौद्धधर्मस्य घृणादृष्ट्या दर्शनात् पुराणानामिदं स्थलं बुद्धजीवनकालात् पर्याप्तमर्वाचीनं प्रतीयते । पुराणेषु बौद्धधर्मं प्रति घृणासूचकभावप्रदर्शनात् पौराणिकपरम्परा बुद्धधर्मविरोधिनी वर्तते ।

अनेकानि पुराणानि रामायणात् परिचितानि सन्ति । मत्स्यपुराणं रामोपाख्यानात् परिचितं विद्यते (५३।७०) अग्निपुराणे रामायणं प्रख्यातग्रन्थरूपेण स्वीकृतमस्ति । (३२३।५२) वृहद्धर्म रामायणं पुराणमहाभारतयो. मूलं स्रोतो मत्वा तस्मै सर्वश्रेष्ठं स्थानं निर्दिशति (३०।११) महाभारतस्य वनपर्वणि रामोपाख्यानं विशदतयोपलभ्यते । मरविलियमजोन्सो हि रामायणमहाभारते समस्तपुराणाना स्रोतसी स्वीकरोति । तदनुसारम् अग्नि-पद्म-स्कन्द-विष्णु-भागवत-ब्रह्माण्ड-पुराणानि रामोपाख्यानात् पूर्णपरिचितानि सन्ति ।

पुराणानि अवतारान्तर्गतं बुद्धावतारं समावेशन्त्यपि बुद्धावतारं विष्णोरन्यावतारवद् अलौकिकं न स्वीकुर्वन्ति । पुराणं कस्मिंश्चित्कालविशेषे निर्मितग्रन्थो नास्ति । एषः संकलनं समये समये जातमस्ति ।

अत एषा प्रत्येकभागे कालविशेषस्य प्रभावो दृश्यते। विन्टरनीत्सेन पुराण-रामायण-महाभारताना कालनिर्णये महतः काठिन्यस्य सङ्केतः कृतोऽस्ति। पुराणकालज्ञानाय उत्तरकालीनसंग्रहग्रन्था विविधशिला-लेखा. स्तम्भेषु स्तूपेषूत्कीर्णलेखाञ्जलयश्च सहायका. सिध्यन्ति।

पञ्चलक्षणात्मकपुराणपरिभाषाया पुराणेषु वर्णिताना समेषा विषयाणा समावेशो नास्ति। शिवविष्णुमाहात्म्यवर्णन-वर्णाश्रमकर्तव्य-व्रत-दान-तीर्थ-श्राद्धादिमाहात्म्यादयो धार्मिका विषया उक्तपरिषाया न समाविष्टा. सन्ति। अतः पुराणाना वर्तमानं रूपमधिकं प्राचीनं नास्ति, प्रत्युत गुप्तकालपर्यन्तं तेषा वर्तमानं रूपमुपपन्नमितिनिश्च-प्रचम्।[1]

ब्रह्मपुराणस्य रचनासम्बन्धे कथ्यते यदेकादशशताब्द्या भव, देवभट्टेनोत्कलप्रान्तीयभुवनेश्वरक्षेत्रेऽनन्तवासुदेवस्य मन्दिरं निर्मापितम्। ब्रह्मपुराणस्य १७३ अध्यायेऽनन्तवासुदेवस्य माहात्म्यं तु वर्णितमस्ति— किन्तु तत्र तन्मन्दिरस्य न काऽपि चर्चा विद्यते। यदि ब्रह्मपुराणस्य रचना तन्मन्दिरनिर्माणानन्तरं स्यात्तर्हि तत्र तस्याप्युल्लेखोऽवश्यं स्यात्। अत. पुराणमिदमेकादशताब्दीतः पूर्वमेव रचितम्।

डा० विलसनप्रभृतयो विद्वासस्तदनुयायिनो जनाश्च ब्रह्मपुराणं त्रयोदशशताब्द्या सङ्कलितं मन्यन्ते, किन्तु एकादशशताब्द्या लिखिते वल्लालसेनस्य दानसागेर, हलायुधकृते ब्रह्मणसर्वस्वे, हेमाद्रिपरिशिष्ट-खण्डे च ब्राह्मपुराणस्यानेके श्लोका उद्धृताः सन्ति। अतस्तेषा मतमप्रा-माणिकमविश्वसनीयञ्चास्ति।

वस्तुतः पुराणमिदं भगवतः श्रीकृष्णस्य गोलोकगमनानन्तरं महर्षिणा वेदव्यासेनैव रचितम्। ब्रह्मपुराणं हि पुराणेषु सर्वप्राचीनं प्रतीयते, यतो हि प्रायः सर्वत्र तदुल्लेखो लभ्यते, न च तत्र कस्या-प्युल्लेखोऽस्ति।

एवमैतिहासिकस्तरदृष्ट्या पुराणाना रचनासम्बन्धे विभिन्नाना विपश्चितां विविधकल्पनाप्राचुर्यं दृष्टिगोचरी भवति।

१. दि क्लासिकल एज् वा० ३ पृ० २९७।



# तृतीयः परिच्छेदः

## पुराणपरिचयः

अष्टादश पुराणाना नाम संख्या तथा क्रमः ।
प्रतिपाद्याश्च विषयाः श्रवणादि फलं ततः ।।
संक्षेपेण प्रदीयन्ते बुधाः पश्यन्तु सम्मुदा ।
किं किं तत्त्वं पुराणेषु वर्ततेऽस्ति–मनोरमम् ।।

सृष्टेः आरम्भकालतः प्रलयपर्यन्तं समस्तस्य विश्वस्य क्रमवद्धेहास-निर्देशकाना भारतीयसंस्कृतेः प्रतीकाना वैदिकस्य च धर्मस्य परम्परायाश्च परिपोषकाणा सर्वविषयपरिपूर्णानामष्टादशाना महापुराणाना परिचयप्रसङ्गे महर्षिणा व्यासदेवेन विष्णुपुराणे पुराणाना नाम-क्रमश्चैवंविधः प्रोक्तोऽस्ति - प्रथमं ब्रह्मपुराणम्, द्वितीयं पद्मपुराणम्, तृतीयं विष्णुपुराणम्, चतुर्थं शिवपुराणम्, पञ्चमं भागवतपुराणम्, षष्ठं नारदीयपुराणम्, सप्तमं मार्कण्डेयपुराणम्, अष्टममग्निपुराणम्, नवमं भविष्यपुराणम्, दशमं ब्रह्मवैवर्तपुराणम्, एकादशं लिङ्गपुराणम्, द्वादशं वाराहपुराणम्, त्रयोदशं स्कन्दपुराणम्, चतुर्दशं वामनपुराणम्, पञ्चदशं कूर्मपुराणम्, षोडशं मत्स्यपुराणम्, सप्तदशं गरुडपुराणम्, तथाष्टादशं ब्रह्माण्डपुराणम् ।[1]

---

१ ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ।
तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ।।
आग्नेयमष्टमं चैव भविष्यं नवमं तथा ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ।।
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ।
चदुर्दशं वामनकं कौर्मं पञ्चदशं तथा ।।
मात्स्यं च गारुडं चैव ब्रह्माण्डञ्च ततः परम् ।
महापुराणान्येतानि ह्यष्टादश महामुने । = ३।६।२१-२४

नारदीयपुराणे त्वेवंक्रमो निर्दिष्टोऽस्ति—

ब्राह्मं पाद्मं वैष्णवं च वायवीयं तथैव च ।
भागवत नारदीयं मार्कण्डेयञ्च कीर्तितम् ॥
आग्नेयं च भविष्यं च ब्रह्मवैवर्तलिङ्गके ।
वाराहं च तथा स्कान्दं वामनं कूर्मसंज्ञकम् ॥
मात्स्यं च गारुडं तद्वद् ब्रह्माण्डाख्यमिति त्रिषट् । =९२।१-३

अर्थात्—(१) ब्रह्मपुराणम् (२) पद्मपुराणम् (३) विष्णुपुराणम् (४) वायवीयपुराणम् (५) भागवतपुराणम् (६) नारदीयपुराणम् (७) मार्कण्डेयपुराणम् (८) अग्निपुराणम् (९) भविष्यपुराणम् (१०) ब्रह्मवैवर्तपुराणम् (११) लिंगपुराणम् (१२) वाराहपुराणम् (१३) स्कन्दपुराणम् (१४) वामनपुराणम् (१५) कूर्मपुराणम् (१६) मत्स्यपुराणम् (१७) गरुडपुराणम् तथा (१८) ब्रह्माण्डपुराणम् ।

श्रीमद्भागवते च—

ब्राह्मं पाद्मं वैष्णवं च शैवं लिङ्गं सगरुडम् ।
नारदीयं भागवतमाग्नेयं स्कन्दसञ्ज्ञितम् ।
भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्यकौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥

= १२।६।२३-२४

देवीभागवते तु केवलमाद्याक्षरसमानताधारेण पुराणाना गणना-क्रमो विहितोऽस्ति । यथा हि—

| | | |
|---|---|---|
| आदौ | म—अक्षरे पुराणद्वयम् | (२) मत्स्यपुराणम्, मार्कण्डेयपुराणञ्च । |
| ,, | भ—अक्षरे पुराणद्वयम् | (२) भागवतपुराणम्, भविष्यपुराणञ्च । |
| ,, | ब्र—अक्षरे पुराणत्रयम् | (३) ब्रह्म-ब्रह्मवैवर्त-ब्रह्माण्डपुराणानि । |
| ,, | व—अक्षरे पुराणचतुष्टयम् | (४) वायु-वामन-वाराह-विष्णुपुराणानि । |
| ,, | अ—अक्षरे एकम् | (१) अग्निपुराणम् |
| ,, | ना—अक्षरे ,, | (१) नारदीयपुराणम् |
| ,, | प—अक्षरे ,, | (१) पद्मपुराणम् |
| ,, | लिं—अक्षरे ,, | (१) लिङ्गपुराणम् |

| | | |
|---|---|---|
| आदौ | ग–अक्षरे एकम् | (१) गरुडपुराणम् |
| ,, | कू–अक्षरे ,, | (१) कूर्मपुराणम् |
| ,, | स्क–अक्षरे ,, | (१) स्कन्दपुराणम् |

म-द्वयं भ-द्वयं चैव ब्र-त्रयं व-चतुष्टयम् ।
अ-ना-प-लिं ग-कू-स्कानि पुराणानि प्रचक्षते ।। =१।२।३

एवं पद्मपुराणस्य पातालखण्डे (११५।८६–९३) विष्णुपुराणे (३।६।२१) शिवपुराणस्योमासंहितायाम् (४४।१२०–१२२) वायुपुराणे (१०४।३–११) नारदीयपुराणे (९२) मार्कण्डेयपुराणे (१३७।८–१०) श्रीमद्भागवते (१२-७-२३-२४) अग्निपुराणे (२७२।१-२३) ब्रह्मवैवर्तस्य श्रीकृष्णजन्मखण्डे (१३०।११२२) लिङ्गपुराणे (३९।६१,६३) स्कन्दपुराणस्य प्रभासखण्डे (२।२८-७६) कूर्मपुराणस्य पूर्वार्द्धे (१।३-१५) मत्स्यपुराणे (५३।६४) गरुडपुराणे (२१५।१५-१६) च संक्षेपतो विस्तरतश्चाष्टादशानां महापुराणाना नाम क्रमश्च निर्दिष्टौ स्तः । यद्यपि तत्तत्पुराणेषु पुराणाना गणनाक्रमस्थितौ तेषा परस्परं मतभेदो दृश्यते तथापि तेषामष्टादशत्वे केषामपि नास्ति काचिद् विप्रतिपत्तिः ।

तेषु प्रथमं ब्रह्मपुराणमन्तिमं ब्रह्माण्डपुराण मध्ये च ब्रह्मवैवर्तं विद्यते। एतेनेदं सूच्यते यत् सृष्ट्यादौ ब्रह्मण एवाविर्भूय सर्वमिदं जगत् प्रलये ब्रह्मणि एव लीयते । ब्रह्मसृष्टिं विवर्णयन्ति एतानि महापुराणानि ब्रह्मण आरभ्यास्माकं ज्ञानं ब्रह्मपर्यन्तं समुपस्थापयन्ति । अत एवोक्तं हरिवंशे हरिवंशपर्वणि-आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ।

## पुराणेषु विष्णोः शरीरावयत्वकल्पनम्

अष्टादशसु महापुराणेषु ब्रह्मपुराण विष्णोर्मस्तकम्, पद्मपुराणं हृदयम्, विष्णुपुराणं दक्षिणो बाहुः, शिवपुराण वामबाहुः, भागवतं वक्षःस्थलम्, नारदीयपुराण नाभिः, माकण्डेयपुराणं दक्षिणपादः, अग्निपुराणं वामपादः, भविष्यपुराण दक्षिणजानुः, ब्रह्मवैवर्तं वामजानुः, लिङ्गपुराणं दक्षिणगुल्फम्, वाराहपुराणं वामगुल्फम्, स्कन्दपुराण रोमाणि, बामनपुराणं त्वक्, कूर्मपुराणं पृष्ठम्, मत्स्यपुराण मेदः, गरुड़पुराण मज्जा, ब्रह्माण्डपुराणमस्थि चास्ति। एवम्प्रकारेणाष्टादश-

पुराणेषु एक एव भगवान् नारायणो विराजते । तथाचोक्तम् पद्मपुराणस्य स्वर्गखण्डे–

ब्राह्मं मूर्धा हरेरेव हृदयं पद्मसञ्ज्ञितम् ।
वैष्णवं दक्षिणो बाहुः शैवं वामो महेशितु. ॥
उरू भागवतम्प्रोक्तं नाभिः स्यान्नारदीयकम ।
मार्कण्डेयञ्च दक्षाङ्घ्रिर्वामो ह्याग्नेयमुच्यते ॥
भविष्यं दक्षिणो जानुर्विष्णोरेव महात्मनः ।
ब्रह्मवैवर्तसञ्ज्ञन्तु वामो जानुरुदाहृत. ॥
लैङ्गन्तु गुल्फकं दक्षं वाराहं वामगुल्फकम् ।
स्कान्दं पुराण लोमानि त्वगस्य वामन स्मृतम् ॥
कौर्मं पृष्ठं समाख्यातं मात्स्यं मेदः प्रकीर्त्यते ।
मज्जा तु गारुडम्प्रोक्तं ब्रह्माण्डमस्थि गीयते ॥
एवमेवाभवद्विष्णुः पुराणावयवो हरि ॥ = ६२।२-७

यदा वैदिकवाङ्मये निर्दिष्टस्यान्तर्ज्ञानस्य स्थानं वाह्येण तर्केण संगृहीतं तदा जैन-वौद्धयो धर्मयोः प्रादुर्भावोऽभवत् । यदा चानयोर्नवीनयो धर्मयोराविर्भावाद् वैदिकी मान्यता प्रक्षीणा जाता, परम्परागतायाः साहित्यिकभाषायाश्च स्थानं प्रचलितया लोकभाषया गृहीतं तदा वौद्धधर्मस्य विरोधे हिन्दूधर्मोऽग्रेसरत् वैदिकधर्मस्य पुराणस्य च पक्षं गृहीत्वा क्रिया-कर्मसु वलं दत्तवान् । फलतो वैदिकधर्म· पौराणिकधर्मरूपेण परिवर्तितः समाजस्य समक्षे समागत । पौराणिकधर्मस्य प्रतिष्ठापकेन पण्डितवर्गेणैकतो वर्द्धमानो बौद्धधर्मस्य प्रभावः शिथिलीकृतोऽपरतश्च वैदिकधर्मस्य विलुप्ता परम्परा पुन प्रतिष्ठापिता । एष एव वैदिकधर्मस्य पुन. संस्कारस्वरूपस्य पौराणिकधर्मस्याभ्युदययुग आसीत् ।

## अष्टादशसंख्यासमीक्षा

संस्कृतवाङ्मयेऽष्टादशसंख्या महत्त्वपूर्णा महती व्यापिका गौरवशालिनी चाभिमताऽस्ति । अतो भगवता व्यासेन स्वकीयाना कृतीना सम्बन्धो येन केनचिद्रूपेणाष्टादशसंख्यया सह सम्बद्धुं प्रयासः कृतोऽस्ति । यथा १८ पुराणानि, १८ उपपुराणानि १८ औपपुराणानि १८ स्मृतयो महाभारतस्य मुख्यानि पर्वाणि गीतायाश्चाध्यायाः १८, श्रीमद्भागवतस्य

श्लोका अपि १८ सहस्राणि सन्ति। अतोऽनेकैरालोचकै विद्वद्भिश्च स्व-स्वग्रन्थेष्वष्टादशसंख्यारहस्यं प्रकाशयितुं विविधा. कल्पनाः कृता विद्यन्ते। (क) समीक्षाचक्रवर्तिना म० म० पं० मधुसूदनौझामहोदयेन पुराणानां १८ संख्यानां विवेचनं कुर्वता प्रोक्तमस्ति यज् जीवानां १८ आयतानि एव १८ ब्रह्माण्डानि सन्ति। ब्रह्माण्डविज्ञाननिमित्तादेव पुराणाना प्रवृत्तिर्जाता। अतस्तेषा संख्या १८ अभिमता। तन्मतानुसारं पुराणानि मुख्यतया पुराणपुरुषं परमात्मानमेव प्रतिपादयन्ति। स च स्वरूपत एक एवास्ति, किन्तु मनुस्मृत्यनुसारं स प्रथमं तावत् त्रिविध·—क्षेत्रज्ञः, भूतात्मा, जीवात्मा, च। एषु यः शरीरस्य कर्मसु प्रवर्तयिता तं पण्डिता क्षेत्रज्ञं वदन्ति। यः पुनरेष व्यापारान् करोति स पृथिव्यादि-भूतारब्धत्वात् सूरिभिर्भूतात्मा निगद्यते। येनाहङ्कारेन्द्रियरूपतया परिणतेन सर्वक्षेत्रज्ञाना सहजेनात्मना क्षेत्रज्ञः प्रतिजन्म सुखदुःखादिक-मनुभवति स जीवात्मा प्रोच्यते।[1] एषु त्रिषु क्षेत्रज्ञ —परात्पराव्ययाक्षर-क्षरभेदाच्चतुर्विध.। भूतात्मा—शरीरात्म-हंसात्म-दिव्यात्म-वैश्वानर-तैजस-प्राज्ञ-कर्मात्म-चिदाभास-चिदात्मभेदान्नवप्रकारकः। जीवात्मा च पञ्चधा विभज्यते–अव्यक्तात्मा महानात्मा, विज्ञानात्मा, प्रज्ञानात्मा, प्राणात्मा च। एवमुपाधिभेदाद् विभिन्नावस्थया एक एव परमात्मा १८ प्रकारको जायते। अतोऽष्टादशावस्थाप्रतिपादकत्वात् पुराणानि अष्टादशैव १८ सन्ति।[2]अल्वेरुणिनापि पुराणानामष्टादशसख्याया उल्लेखः कृतोऽस्ति। तन्मतानुसारं मनुष्यैर्पिप्रणीतानि पुराणानि १८ सन्ति।[3]

(ख) पुराणाना सृष्टिप्रक्रिया साख्यदर्शनस्य सृष्टिप्रक्रियया पूर्णतः प्रभाविताऽति। तत्र २५ तत्त्वान्यभिमतानि सन्ति-मूलप्रकृतिः, महत्, अहङ्कारः, पचतन्मात्राः, एकादशेन्द्रियाणि, पञ्चमहाभूतानि, पुरुषश्च।[4] एषु साख्यदर्शनानुसारं प्रकृति-पुरुषयोः सृष्टिर्न भवति, यतो

१. योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः॥
जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम्।
येन वेदयते सर्वं सुखं दुःख च जन्मसु॥ =म०स्मृ० १२।१२-१३

२. पुराणोत्पत्तिप्रसङ्गे पृ० ५-१०। ३ अल्वेरुनी का भारत पृ० ३३-३४

४. मूलप्रकृतिरवृकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृति र्न विकृतिः पुरुषः॥ =सा० का१२।१२-१३

हि तावनाद्यनन्ते तत्त्वे स्त.। पौराणिकसृष्टिप्रक्रियाया पञ्चतन्मात्रा-पञ्चमहाभूतेषु प्रायो भेदो नाङ्गीकृतोऽस्ति, यतो पञ्चतन्मात्राणामेव स्थूलरूपाणि पञ्चमहाभूतानि विद्यन्ते। एवं तत्र सृज्यमानानि तत्त्वानि केवलान्यष्टादशसंख्याकान्येवावशिष्यन्ते। अत: साख्यदर्शनानुसारं सृष्टि-प्रक्रियाप्रतिपादकानां पुराणाना १८ संख्यात. सम्बन्धोऽस्त्यत्या-वश्यक:।

(ग) वैदिकप्रक्रियानुसारं प्रत्येकं ब्रह्माण्डं त्रिषु भागेषु विभक्तमस्ति-(१) पृथिवी (२) अन्तरिक्षम् (३) द्यौश्च। पुराणानि एषामेव त्रयाणा लोकानां सृष्टिप्रलयदीना च निरूपणं कुर्वन्ति। निरुक्तानुसारं त्रिलोक्या. सर्वेषा पदार्थाना क्रमश: षट् षट् परिणामा भवन्ति— अस्ति, जायते, वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यति। एषा षण्णा भावविकाराणा पूर्वोक्तैस्त्रिभिर्भागै गुंणिता १८ संख्या जायते। अतोऽष्टादशभावविकाराणामभिव्यक्तये पुराणान्यष्टादश सन्ति।

(घ) परलोकविद्यानुसारं सूक्ष्मे शरीर एव संस्कारस्तिष्ठति तस्यैव च परलोकगमनादिकं भवति, यतो हि स्थूलं पाञ्चभौतिकं शरीरन्तु इहैवा-वतिष्ठते। १७ तत्त्वै र्निर्मिते सूक्ष्मे शरीरेऽहंभावो न तिष्ठति। अतस्तस्य गणना तत्र न जायते। यद्यहङ्कारस्य चिदाभासस्य गणना तत्र स्यात्तर्हि १८ तत्त्वानि भवन्ति। एभिरेव १८ तत्त्वै. पाप: सम्भवति अतस्तन्नि-वृत्तये सदुपदेशप्रदायकानि पुराणानि १८ अभिमतानि सन्ति।

(ङ) शतपथब्राह्मणस्याष्टमे काण्डे सृष्टिनामिकानामिष्टिकानां यत्रोपाधानस्य विधिर्निर्दिष्टो विद्यते, तत्र १७ इष्टिकानामुपधानस्योपपत्ति-वर्णनपूर्वकं सृष्टे· १७ भेदा वर्णिता: सन्ति तथा समेषा समन्वय: एकस्मिन् प्रधाने प्रजापतौ कृतो वर्तते। एवं वैदिकप्रक्रियाया: १८ भेदा. सिध्यन्ति। शतपथानुसारं मासाना संख्या १२ ऋतूना ५ सम्बत्सरस्य चैका। एषु सप्तदश मासर्तव एकस्मादेव संवत्सरादुत्पद्यन्ते-तस्य द्वादश मासा: पञ्चर्तव: संवत्सर एव प्रतूर्तिः (सृष्टि:) (श०ब्रा० ८।४।१।१३) तथा प्रतूर्तिरष्टादश (य० वे० १४।२३)।

(च) वेदे सृष्टेरुदयो वैदिकेभ्यश्छन्दोभ्य: स्वीकृतोऽस्ति। वेदस्य सप्तसु प्रमुखेसु छन्द.सु गायत्री-विराजश्छन्दसो: प्रामुख्यमस्ति। ययो: सृष्टितत्त्वेन घनिष्ठ. सम्बन्धो विद्यते। गायत्री हि पृथ्वीस्थानीया प्रकृतिरूपा 'गायत्री वा इयं पृथिवी (श० ब्रा० ४।३।४।६) तथा विराडस्ति

द्युस्थानीयः पुरुषः "वैराजो वै पुरुषः, (ता० ब्रा० २।७।८) द्यावापृथिव्या-वस्या. सृष्टे. मातापितरावभिमतौ स्तः-द्यौष्पिता, पृथिवी माता । गायत्र्या-प्रतिपदमष्टावक्षराणि भवन्ति तथा विराजो दशाक्षराणि-अष्टाक्षरा गायत्री (ऐ० ब्रा० ६।२०)-तथा "दशाक्षरो विराट् (तै० आ० १।१।५।३) एनयोर्द्वयोर्मेलनेनाष्टादश संख्या जायन्ते। फलतः छन्दःसृष्टिवाददृष्ट्या १८ संख्यायाः सृष्टिप्रतिपादकैः पुराणैः सह सम्बन्धो नितान्तं युक्ति-पूर्णोऽस्ति। तथा यज्ञेषु १८ एव ऋत्विजो भवन्ति, महाभारते १८ अक्षौ-हिणो सेनाऽसीत्, युद्धमपि १८ दिनेषु प्रचलितम्, पाण्डवपक्षीया महा-रथिनोऽपि गीतायाः प्रथमाध्याये १८ एव गणिताः सन्ति।

(छ) वस्तुत. संख्याः ९ एव सन्ति, परन्तु तन्त्रशास्त्रे नवशक्त्या-त्मक-नवशिवात्मकभेदात् शिवशक्त्यात्मकयोगेन संख्या. १८ भवन्ति। अत एषा निर्देशकाना पुराणाना संख्या अष्टादश भवन्ति।

एवं पुराणानामष्टादशसंख्याविषये "भिन्नरुचिर्हि लोक" इतिकालिदास-वचनानुसारं विभिन्नाना विचारशीलाना विपश्चिता भिन्ना भिन्ना कल्पना बुद्धिवैशद्यायोपादेयेति मामकीनं मतम्।

**पुराणगणनाक्रमविमर्शः**

यद्यपि पुराणाना गणना प्रतिपुराणं विद्यते, किन्तु गणनाक्रमे सर्वत्र किञ्चिदन्तरं वर्तते। यथा कस्मिंश्चित्पुराणे ब्रह्मपुराणं प्रथममभिहितं तर्हि अन्यस्मिन् पुराणे मत्स्यपुराणं प्रथमं प्रोक्तमस्ति। एकत्र पञ्चमं लिङ्गपुराण निर्दिष्टं विद्यते तर्हि अन्यत्र भागवतं पञ्चमं पुराण प्रोक्तमस्ति। एवं क्वचन षष्ठं गरुडपुराणमुक्तं तर्हि कुत्रचित् नारदीयं पुराण षष्ठं निगदितमस्ति। एतस्यास्ति किं रहस्यमितिविषये शास्त्रार्थमहारथिनः पं० माधवाचार्यस्य मतमस्ति यद् वैदिकपरम्परायां वेदाना क्रमः ऋग्यजु-सामाथर्वणरूपेण प्रसिद्धोऽस्ति। अयमेव क्रमः प्रायः सर्वत्रोपलभ्यते च किन्तु—(क) ऋचः सामानि छन्दासि पुराणं यजुषा सह। =अ० वे० ११।७।२४

(ख) यजुश्च ऋक् च साम च त्रयी हैषा विद्या। = श० ब्रा० ६।३।३।१४

(ग) ऋचो यजूंषि सामानि=श० ब्रा० ४।६।३।१४।

इत्यादि मन्त्रेषु तद्विपरीतोऽपि क्रमः उल्लिखितो विद्यते। अतस्तस्य तात्पर्यमिदमस्ति यत् क्रमविन्यासोपस्थापनं लेखकभावनाया निर्भरमस्ति। स यया यया भावनया प्रेरितो या या वस्तुस्थितिं स्वक्रमेऽभिव्यञ्जयितुं समीहते तस्यास्तस्यास्तेन तेनैव क्रमेणोल्लेखं कुरुते। यथा—

सर्ववेदभाष्यकारेण सायणाचार्येण यजुर्वेदस्य प्रथम स्थान प्रदत्तम्। वेदाना सामवेदोऽस्मि, एतद्वाक्यद्वारा गीता सामवेदस्यैव श्रेष्ठता स्वीकरोति। यास्कस्याधुनिकानामालोचकानां च विचरेणाद्यत्वे ऋग्वेद एव सर्वश्रेष्ठो मन्यते। एवमेषां विभिन्नाना विचारधाराणामाधारेण कल्प्यते, यद् यजुर्वेदस्य प्राथम्यं स्वीकर्तु. सायणस्य विचारे वेदाना प्रवृतिः यज्ञसम्पादनार्थमेवास्ति तथा यज्ञानामितिकर्तव्यता अध्वर्य्वधिकृते यजुर्वेदे एवाश्रिताऽस्ति। अयमेवाभिप्रायो यास्केन 'अध्वर युनक्ति, अध्वरस्य नेता, इत्यादिनिर्वचनद्वारा व्यक्तीकृतोऽस्ति। यज्ञाना माङ्गोपाङ्गसम्पन्नतायै तत्तद्देवताना स्तुतिप्रयोजिकाना गीतिप्रधानानामृचामावश्यकता भवति। अतो यज्ञप्रक्रियाया सर्वप्रथमं यजुर्वेदस्य तदनन्तरमृग्वेदस्य तदनु सामवेदस्य च स्थाननिर्णयाद् यजु–ऋग्–सामवेदाना क्रमः समीचीन एव।

सामवेदस्य सर्वश्रेष्ठता मन्यमानाया गीताया दृष्टि. यज्ञमयभावनाया न प्रोत्साहनं प्रददाति, किन्तु प्रत्यक्षानुभवसिद्धस्य श्रोतॄणा मनोमुग्धकारिणो गीतस्य प्रधानता मनुते। अतो गीतमन्त्राणा प्रथमं स्थानं प्रदाय सा मामवेदस्य प्रामुख्यं स्वीकरोति।

यास्काचार्यस्याधुनिकविचारकाणा च मतेन पृथिव्या अन्तरिक्षस्य दिवश्चेति त्रयाणा स्थानाना प्रतिनिधिशक्तयः सन्ति क्रमश.—अग्निः, वायु तथा आदित्यश्च। अत पृथ्वीस्थानीयाया अग्निदेवताया प्रतिपादकः— अग्निमीले पुरोहितमितिन्मन्त्रत आरभ्यमाण ऋग्वेद एव प्रथमं स्थानमर्हति। अन्तरिक्षस्थानीयाया वायुदेवताया निरूपकस्य 'ईषे त्वोर्जे त्वा—इत्यत आरभ्यमाणस्य यजुर्वेदस्य द्वितीयं स्थानमस्ति। एवं द्युस्थानीयाया आदित्यदेवताया प्रस्तावकस्य सामवेदस्य तृतीयं स्थानं विद्यते। अतो वैज्ञानिकभावनायामृक्-यजु.-सामवेदाना क्रमो युक्तियुक्तो न्यायसङ्गतश्च प्रतिभाति। एवं पुराणाना क्रमविन्यासेऽपि व्यासदेवस्य भावनैवास्ति प्रधानं कारणम्। तेन हि महर्षिणा व्यासेन यस्मिन् पुराणे यः क्रमो निर्दिष्ट स कयाचिद् भानवयैव प्रेरितेन तेन तथा कृतः।

**त्रिविधः क्रमः**

पुराणेषु प्रायः प्रमुखरूपेण त्रिप्रकारको गणनाक्रम उपलभ्यते (१) सृष्टिप्रक्रियाप्रतिपादको विशिष्टक्रमः (२) सृष्टिप्रक्रियानिरूपकोऽवशिष्टक्रमः (३) वर्णसाम्यक्रमश्च। तत्र प्रथमो विशिष्टक्रम. श्रीमद्भागवते

उपलभ्यते । अस्यैव क्रमस्यानुकरण कुरुत. लिङ्गपुराण मार्कण्डेय पुराणञ्च । एषु जीवात्म-परमात्मनो व्यावहारिकभेदस्वीकारपूर्वकं ब्रह्मणो ब्रह्माण्डपर्यन्तं विवर्तस्यान्ते तत्रैव लयस्य च क्रमो विस्तरेण वर्णितोऽस्ति । द्वितीयोऽवशिष्ठक्रमो—

मुख्यतया नारदीय-ब्रह्मवैवर्त-अग्नि-विष्णु-मत्स्य शिव-कूर्म-पद्मपुराणेषु अङ्कितोऽस्ति । अस्मिन् क्रमे जीवात्म-परमात्मनोः वास्तविकीमेकतामभिलक्ष्य परमात्मनो नामरूपोपाधिद्वारा संसारे प्रतिभासमानस्यान्ते-विद्यानिवृतिपूर्वकं पुन परमात्मन्येव लयस्य क्रमो दर्शितो विद्यते ।

तृतीयो वर्णसाम्यक्रम केवलं देवीभागवते उपलभ्यते । तत्र वास्तविकं पौर्वापर्य परित्यज्य केवलं तुल्यवर्णसाम्यतया मद्वय भद्वयं चैवेत्यादिना पुराणाना १८ नामानि गणितानि सन्ति । विशेषतो द्रष्टव्यं श्रीमाधवाचार्यस्य पुराणदिग्दर्शनम्, धर्मविज्ञानं वा स्वामिनो ज्ञानानन्दस्य ।

## पुराणां वैज्ञानिकक्रमविमर्शः

पुराणाना गणनाप्रसङ्गे देवीभागवतं विहाय सर्वेषु पुराणेषु प्रथमं पुराण ब्रह्मपुराण विद्यते, अन्तिमं पुराण च ब्रह्माण्डपुराणमस्ति । अस्येद तात्पर्यमस्ति यत् सृष्ट्यादौ ब्रह्मैव ब्रह्माण्डरूपेण परिणमते । इदं दृश्यमान नामरूपात्मकं जगद् ब्रह्मातिरिक्तं नास्ति। एतदनुसारं भगवतो नारायणस्य नाभिकमलादाविर्भूते पद्मे आसीनो ब्रह्मदेवो जगन्निर्मिमीत । यदि पुराणाना सृष्टिक्रमविकासो वैज्ञानिकदृष्ट्या द्रष्टव्योऽस्ति तर्हि क्षीरसमुद्रे शेषशायिना भगवतो विष्णो. ध्यान विधेयम् । क्षीरसागरे शेषशय्यायां शयानस्य भगवतो विष्णो र्जगज्जननी लक्ष्मी पादो सवाहयति तथा देवर्षिर्नारद. समीपे स्थित. वीणा वादयन् त स्तौति । प्रलयकाल-समाप्त्यनन्तर कल्पादौ यदा भगवति विष्णौ संसारस्य सिसृक्षा जायते तदा तन्नाभिकमलादेक कमलं नि सरति । ततो ब्रह्मा प्रादुर्भवति । तत्र कमले उपविष्टश्चतुर्मुखो ब्रह्मा तप पूर्वकं संसारस्य सृष्टि कर्तुमारभते । चित्रमिदं ध्यात्वा पुराणाना क्रमे ध्यानं प्रदेयम् । सम्प्रदायविदा पुराणमर्मज्ञाना विपश्चिता मतेन पुराणाना क्रमः साभिप्रायो विद्यते, नाकस्मिकोऽस्ति, प्रधानविषयदृष्ट्या क्रमनिर्देशस्यौचित्यं सुसङ्गतं वर्तते । तथाहि—

(१) सर्वप्रथममियं जिज्ञासा जागर्ति यदस्य दृश्यमानस्य ब्रह्माण्डस्य रचयिता कोऽस्ति ? अस्योत्तर दातुं प्रथम ब्रह्मपुराणमुपतिष्ठते, तेनेदं सूच्यते यद् ब्रह्म ब्रह्माऽभवत्स्वयमिति तैत्तरीयश्रुत्यनुसारं ब्रह्मैव विधातृ-रूपेण सृष्टिरचयिताऽस्ति। अर्थात् स्थावर-जङ्गमात्मकस्य दृश्यमानस्य जगतो निर्मातु ब्रह्मण स्वरूपं प्रथमं ब्रह्मपुराणं वोधयितुं प्रवृत्तम्। (२) ततो द्वितीय. प्रश्न समुदेति यद् ब्रह्मा कुत उत्पन्न ? अस्योतरं पद्मपुराणं प्रदातुमुपतिष्ठते यद् ब्रह्मा नारायणस्य नाभिकमलादुत्पन्न.। (३) तत तृतीया शङ्का समुदेति यत् तत्पद्मं कुत उत्पन्नम् ? एतत्समा-धानायोपतिष्ठते तृतीयं विष्णुपुराणम्। अत्र विष्णोः नाभिकमलात् पद्म-मुत्पन्नं ततो ब्रह्मा प्रादुर्भूत। एतद् विलोमक्रमान्निर्दिष्टमस्ति। (४) एतदनन्तर जिज्ञासा जायते यद् ब्रह्मणो मूलसृष्टेर्ज्ञानं कथं जातम् तदुत्तरं, शिवपुराणं प्रददाति यत् शिवात् (वेदात्)। वस्तुतः "धाता यथापूर्वमकल्प-यत्" इति ऋग्वेदमन्त्रानुसारं वेदादेव सर्वविधा सृष्टि. संजाता। अतएव भगवता मनुनाऽपि उल्लिखिमस्ति—वेदशब्देभ्य एवादौ पृथक् सस्थाश्च निर्ममे(म०स्मृ० १।२१)तत.(५)लीनार्थगमक चिन्ह लिङ्गमित्यभिधीयते। महाप्रलयद-शाया विलीनपदार्थाना कारणात्मकतत्त्वाना पुन. संधीकरणं सर्गोऽस्ति। एतद्रहस्यं लिङ्गपुराणं वोधयाति। (६) मानवसृष्टौ जीवानामनेकविध-विषमता एव जन्ममरणविधायिकाऽस्तीतीदं रहस्यं वोधयितुमौर्ध्व-दैहिकक्रियाया विवेचकं षष्ठं गरुडपुराणमुपतिष्ठते। (७)अप एव ससर्जादौ, आपो नारा इति प्रोक्ता., इत्याद्याधारेण नारं जलं ज्ञानं वा ददातीति नारद इतिव्युत्पत्यनुसारं नारदाता नारद उच्यते। इदं तत्त्वं वोधयितुं सप्तमं नारदीयं पुराणमुपतिष्ठते, (८] ऐश्वर्यषड्गुणसम्पन्नो दक्षिणाशो भगवान् वामाशश्च भगवती अस्ति। इति रहस्यं वोधयितुमष्टमं भागवत-पुराणमुपतिष्ठते। यद् भगवतो भगवत्या वा इदं भागवतमितिव्युत्पत्या-धारेण पुरुषप्राध्यान्यात् श्रीमद्भागवतं तथा प्रकृतिप्राधान्याद् देवीभाग-वतनाम्ना प्रसिद्धमस्ति। (९) जन्ममरणचक्रे वद्धस्य जींवस्य कल्याणं कथंकारं सम्भवति-इत्यस्योत्तरमग्निपुराणं ददाति। यज्ञादिभिः सकाम-कर्मभिः जीवस्यात्मकल्याणं कर्तुमवसरो मिलति। अग्निरूपेण क्रिया-शीलं वस्तु एव मूल प्रेरणं प्रद्दातीति मतमुपदेष्टुमग्निपुराणस्य आव-श्यकताऽस्ति (१०) दशमं स्कन्दपुराणं भगवतः शिवस्यावतारान् चरित्रं च वर्णयत्—विद्याकामस्तु गिरीशमित्यनुसारं ब्रह्मविद्याप्राप्तये तदुपासनाया

आदेशं ददाति। (११) धर्मार्थकाममोक्षाणा चतुर्विधाना पुरुषार्थाना प्रधानं साधनमारोग्यतैवास्ते तत्प्राप्तये 'आरोग्यं भास्करदिच्छेत्' इत्यनुसारं भगवतो भास्करस्योपासना वोधयितुमेकादशं भविष्यपुराणमुपतिष्ठते। (१२) मनुष्याणा सर्वविधविघ्नशमनार्थं गणेशादिदेवानामाराधना-वोधनाय द्वादशं ब्रह्मवैवर्तं पुराणमस्ति। (१३) त्रयोदशं मार्कण्डेपुराणं भगवत्या आद्याशक्ते महिम्न. प्रकाशकमस्ति। इमे द्वे पुराणे वहुविध-वाधाव्याप्ताना साधनाशक्तिशून्याना च कलिजीवाना—'कलौ चण्डी-विनायकौ' इत्यनुसारं दुर्गा-गणेशयोरुपासनाया उपदेश दत्तः (१४-१७)। चत्वारि वामन-वाराह-मत्स्य-कूर्मपुराणानि प्रधानतया भगवतोऽवतार-स्य निरूपण कुर्वन्ति तथा मुमुक्षुभ्य. पुरुषेभ्य भगवतो विष्णोः शरणागते-रुपदेश ददति। एवमेषु प्राणिना कल्याणाय शिव-सूर्य-गणेश-दुर्गा-विष्णू-नामेपा पञ्चाना देवानामुपासना निर्दिष्टाऽस्ति। (१८) अन्तेऽष्टादशं ब्रह्माण्डपुराण समस्ता सृष्टिप्रक्रियामुपसंहरत् स्वमूलतत्त्वे ब्रह्मणि संकेतयति यद् 'आकाशात् पतित तोयं यथा गच्छति सागरम्' इत्यनुसार-मियं नानाविधोपासना ब्रह्मोपासनायामेव परिणता भवति। इदमेव १८ पुराणाना विशिष्टक्रमस्य वैज्ञानिकं रहस्यमस्ति, यस्योल्लेख. श्रीमद्-भागवते महापुराणे वर्तते। ( १२।७।२३-२४ )

पुराणाना द्वितीयोऽवशिष्टोक्रमो नारदीयादिपुराणेषूपलभ्यते। अस्मिन् क्रमे शिवपुराणस्य स्थाने वायुपुराणस्योल्लेखोऽस्ति। अत्र क्रमे ब्रह्म-पद्म-विष्णुपुराणाना गणनाक्रम पूर्ववदेवास्ति। अत एषा शंका-समा-धानमपि तथैवास्ते। तदनन्तरं शङ्का समुदेति यद् विष्णु कस्मिन्ना-धारे स्थित. ? अस्य समाधानाय चतुर्थं वायुपुराणमुपतिष्ठते, यतो भगवान् विष्णु शेपशय्याया स्थितोऽतो विष्णोः शयनस्थानस्य शेपस्य निरूपणं वायुपुराणे विशेपत· कृतमस्ति। शेपस्याधार. सरस्वान् क्षीरसागरो-ऽस्तीति वोधयितुं पञ्चमं सारस्वतकल्पीयं श्रीमद्भागवतपुराणमुपतिष्ठते। क्षीरसमुद्रे शेषशय्यायाः समीपे वीणापाणिः देवर्षि नारदो विराजते, रहस्यमिद वोधयितुं षष्ठं नारदीयपुराणमायाति। इमानि षट् पुराणानि स्थूलतत्त्वात् सूक्ष्मतत्त्वे संकेतयन्ति। एपा मूलं तत्त्वं किमस्तीति जिज्ञासा-शान्तये सप्तमं मार्कण्डेयं पुराणमुपतिष्ठते। अस्य सिद्धान्तोऽस्ति यत् प्रकृतिदेवी एव सर्वेषा मूलं तत्त्वमस्ति। अष्टमेऽग्निपुराणेऽग्निदेवः सर्वाधार· प्रोक्तः। अग्नेरुत्पादकः सूर्योऽस्ति, स्थावरजङ्गमात्मकस्य जगतः

उत्पादने भगवत सूर्यस्य महत्ता सर्वातिशायिनी विद्यते। इदमेव वोधयितुं नवमं भविष्यपुराणमायाति। भविष्यपुराणे सूर्य एव प्रधानं तत्त्वं स्वीकृतोऽस्ति। एवमनेका विप्रतिपत्ती कथयित्वा मध्ये ब्रह्मवैवर्तं ब्रह्मैव सूक्ष्मतत्त्वं-वोधयति, यतो हि अनेनैव जगतः सृष्टिर्भवति। अर्थात् सर्वं जगत् ब्रह्मण एवास्ति विवर्तम्। एषु पुराणेषु क्रमशः सृष्टे. पूर्णविकासनिरूपणानन्तरमियं जिज्ञासा समुदेति यत् तत् मूलं तत्त्वं ब्रह्म कथं ज्ञायेत ? तत्तु निर्गुणमस्ति सगुणरूपेण तस्य ज्ञानं कथं जायेत ! तत्कथंकारं सृष्टे निर्वाहं करोति ? आत्मकल्याणार्थिभिः कीदृशी उपासना विधेया ? अस्योत्तरमेकादशं लिङ्गपुराणं त्रयोदशं च स्कन्दपुराणं भगवन्तमाशुतोषं शङ्करं निर्दिशत.। द्वादशं वाराहपुराणं चतुर्दशं वामनपुराण पञ्चदशं कूर्मपुराणं पोडशं मत्स्यपुराणञ्च भगवतो विष्णोरवताराणा विवरणं ददति। सृष्टिप्रक्रियाया येषामवताराणामुपयोगोऽस्ति तेषामेव नाम्ना तेषा पुराणाना नामानि निर्दिष्टानि। येन क्रमेण एषामवताराणा सृष्टिप्रक्रियायामुपयोगोऽस्ति, स एव क्रम एषा पुराणानामभिमतोऽस्ति। यद्यपि विष्णोरन्येऽवतारा अपि परमाराध्या. सन्ति तथापि सृष्टिप्रक्रियायामेपा चतुर्णा प्रधानता विशेषरूपेण दत्ताऽस्ति। अन्तिमयोर्द्वयो. पुराणयोः सम्बन्धो जीवजन्तूना गतिविधिभ्यामेवास्ति। सृष्टिचक्रे बम्भ्रम्यमाणाना जीवाना केन केन कर्मणा का का गतिर्भवति ? उपासनार्थं जीवाना विविधगतिं वोधयितुं सप्तदशं गरुडपुराणमस्ति, यद् मरणोत्तरस्थितेः विशेषरूपेण विवरण ददाति। सृज्यमानस्य जगतः सीमानिरूपणाय सर्वासा गतीनामाधारं वोधयितुमन्तेऽष्टादशं ब्रह्माण्डपुराणमुपतिष्ठते, यतो हि 'पुरुषान्न पर किञ्चित् सा काष्ठा सा परागति, इत्यनुसारं ब्रह्मणोऽग्रे किञ्चित् ज्ञातव्यं वस्तु नावशिष्यते। इदमेवास्यावशिष्टक्रमस्यास्ति रहस्यम्।

यद्यपि प्रतिपुराण विभिन्ना विषया वर्णिताः सन्ति तथापि 'प्राधान्येन व्यपदेशा भवन्ति' इतिन्यायाधारेण कस्यचिदेकस्य विषयस्य प्राधान्यात् पुराणाना प्रतिपाद्यविषयाणा निरूपण क्रमेणानेन कृतमस्ति। एषु क्रमेषु यस्य पुराणस्य यत् स्थानं नियतमस्ति तत्तस्य पुराणस्य प्रतिपाद्यविषयमुख्यताया आधारेणैव कृतमस्ति। प्रसंगवशात्तु प्रतिपुराणमनेकेषा विषयाणा वर्णनं विद्यते।[1]

(१) द्रष्टव्यः पद्मपुराणाङ्के म म प. गिरिधर शर्मचतुर्वेदिन. सुचिन्तितो लेखः, श्रीमाधवाचार्यस्य पुराणदिग्दर्शनञ्च।

## पुराणानां वर्गीकरणम्

पुराणाना वर्गीकरण बहुभिर्दृष्टिभिर्जातमस्ति यतो हि पुराणाना वर्गीकरणसम्बन्धे तत्तद्विपश्चिता भिन्ना भिन्ना दृष्टयः सन्ति। (१) कश्चिद् विपश्चित् पुराणपञ्चलक्षणमाधारीकृत्य प्राचीन-प्राचीनोत्तरभेदद्वयं कुरुते। एतन्मतानुसारं वायु-ब्रह्माण्ड-मत्स्य-मार्कण्डेय-विष्णु-पुराणानि प्राचीनपुराणकोटौ समागच्छन्ति। एतदतिरिक्तानि पुराणानि प्राचीनोत्तरे भेदे आगच्छन्ति। (२) देवताना विचारेणाऽपि पुराणाना वर्गीकरण कृतं विद्यते। पद्मपुराणानुसारं पुराणानि त्रिप्रकाराणि मन्यन्ते। (क) सात्त्विकानि पुराणानि (ख) राजसानि पुराणानि तथा (ग) तामसपुराणानि। सात्त्विकेषु पुराणेषु विष्णुपुराणम्, नारदीय-पुराणम्, श्रीमद्भागवतम्, गरुडपुराणम्, पद्मपुराणम्, वाराहपुराणञ्चेति षण्णा पुराणाना गणनाऽस्ति—

(क) वैष्णवं नारदीयं च तथा भागवतं शुभम्।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने!
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥=उ० ख० २३६।१९

ब्रह्माण्डपुराणम्, ब्रह्मवैवर्तम्, मार्कण्डेयपुराणम्, भविष्यपुराणम्, वामनपुराणम्, ब्रह्मपुराणञ्चेतीमानि षड् राजसानि पुराणानि अभिमतानि सन्ति–

(ख) ब्रह्माण्ड ब्रह्मवैवर्तं मार्कण्डेयं तथैव च।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ॥ =उ० ख० २३६।२०

तामसेषु पुराणेषु मत्स्यपुराणस्य, कूर्मपुराणस्य, लिङ्गपुराणस्य, शिवपुराणस्य, स्कन्दपुराणस्य, अग्निपुराणस्य च गणना विद्यते–

(ग) मात्स्य कौर्मं तथा लैङ्गं शैव स्कान्दं तथैव च।
आग्नेयं च षडेतानि तामसानि निबोध मे ॥ =उ० ख० २३६।१७

अस्मिन् वर्गीकरणे सात्त्विक-राजस-तामसपुराणाना समाना संख्याऽस्ति–६ सात्त्विकानि ६ राजसानि ६ तामसानि च। तथैषा फलमपि एवंप्रकारं निर्दिष्टं विद्यते यत् सात्त्विकानि पुराणानि मोक्ष-

प्रदानि सन्ति, राजसानि स्वर्गप्रदानि, तामसानि च नारकाणि सन्ति—

सात्त्विका मोक्षदा. प्रोक्ताः राजसा स्वर्गदाः शुभाः ।
तथैव तामसाश्चेति । निरयप्राप्तिहेतवः ।। =उ० ख० २३६।२१

गरुडपुराणे च सात्त्विकपुराणेषु एकोऽपरोऽपि उपभेदोऽभिमतोऽस्ति (क) सात्त्विकमधमम् (ख) सात्त्विकं मध्यमम् (ग) सात्त्विकमुत्तमञ्च। तत्र प्रथमे उपभेदे मत्स्य-कूर्मपुराणे अभिमते स्तः। द्वितीये केवलं वायुपुराणमस्ति । तृतीये उपभेदे च विष्णुपुराण-श्रीमद्भागवत-गरुडपुराणाना गणनाऽस्ति—

सत्त्वाधमे मत्स्य-कूर्मे तदाहु वायु चाहु. सात्त्विक मध्यमं च ।
विष्णोः पुराण भागवतं पुराण सत्त्वोत्तमे गारुड प्राहुरार्याः ।।

गरुडपुराणस्यास्मिन् श्लोके कूर्मपुराणमपि सात्त्विकपुराणेषु स्वीकृतमस्ति, किन्तु अस्य ब्राह्मी सहिताया शिव-शिवयो र्महिम्न एव पूर्णः प्रकाशोऽस्ति। तथा भगवान् महेश्वर एवात्र परमं तत्त्वमभिमतमस्ति। शक्तेरपि अत्र विशिष्ट वर्णनमस्ति। भगवान् श्रीकृष्ण. शिव स्तुवन् प्रदर्शितोऽस्ति। अस्या स्थितौ अस्य सात्त्विकपुराणगणनाया काचित् विचिकित्सा समुदेति। एवं शिवमाहात्म्यप्रतिपादकत्वात् स्कन्दपुराणानुसार वायुपुराण शैवपुराणमभिमत विद्यते। अस्या स्थितौ अत्र सात्त्विकता कुतः ? एवमस्मिन् विभाजने वैज्ञानिकताया अभावादिदं त्रिभाजनं समुचित न प्रतिभाति।

(३) मत्स्यपुराणे एकः तृतीयः प्रकार उपलभ्यते। एतदनुसारं विष्णोर्महिम्नो व्यक्तकारकाणि पुराणानि सात्त्विकानि अभिमतानि सन्ति, ब्रह्मणोऽग्नेश्च महात्म्यप्रतिपादकानि पुराणानि राजसानि पुराणानि कथितानि, शिवसम्बन्धीनि पुराणानि तामसानि सन्ति। सरस्वत्याः पितृणा च वर्णनकारकाणि पुराणानि सङ्कीर्णपुराणकोटौ समागच्छन्ति—

सात्त्विकेषु पुराणेषु महात्म्यमधिकं हरेः।
राजसेषु च महात्म्यमधिक ब्रह्मणो विदुः ।।
तद्वदग्नेश्च महात्म्यं तामसेषु शिवस्य च ।
सङ्कीर्णेषु सरस्वत्याः पितृणा च निगद्यते ।। =५३।६८-६९

(४) स्कन्दपुराणस्य केदारखण्डानुसारं दशसु पुराणेषु भगवतः

शिवस्य गुणगान कृतमस्ति। चतुषु पुराणेषु ब्रह्मण. स्तुतिः कृताऽस्ति। द्वयोः पुराणयो. देव्या महिमा गीतोऽस्ति। तथा द्वयो भगवतो विष्णोर्महत्त्व सूचितमस्ति—

अष्टादशपुराणेषु दशभिर्गीयते शिवः।
चतुर्भिर्भगवान् ब्रह्मा द्वाभ्या देवी तथा हरिः॥ =२।३०।३८

अस्मिन् वर्गीकरणे पुराणाना नाम न निर्दिष्टमस्ति। अस्मिन्नेव पुराणे शिवरहस्यस्य सम्भवकाण्डे एकमन्यदेव विभाजनमुपलभ्यते (२।३०।३८) यदनुसारं शैव-वैष्णव-ब्राह्म-आग्नेय-सावित्रनामकाः पञ्च भेदाः कृता सन्ति। तत्र शैवपुराणेषु दश शिव-भविष्य-मार्कण्डेय-लिङ्ग-वाराह-स्कन्द-मत्स्य-कूर्म-वामन-ब्रह्माण्डपुराणानि सन्ति,येषा श्लोकसंख्या लक्षत्रयं वर्तते। एषु भगवत. शिवस्य गौरव गीतमस्ति। एषु च विशेषरूपेण शिवस्योत्कर्ष प्रदर्श्य स सर्वेभ्योऽधिक. शक्तिशाली साधितोऽस्ति—

तत्र शैवानि शैव च भविष्य च द्विजोत्तमाः।
मार्कण्डेयं तथा लैङ्ग वाराह स्कान्दमेव च॥
मात्स्यमन्यत्तथा कौर्मं वामन च मुनीश्वराः।
ब्रह्माण्ड च दशेमानि त्रीणि लक्षाणि सख्यया॥
ग्रन्थाना महिमा सर्वै. शिवस्यैव प्रकाश्यते।
असाधारणया मूर्त्या नाम्ना साधारणेन च॥
वदन्ति शिवमेकानि शिवस्तेषु प्रकाश्यते।

वैष्णवपुराणेषु विष्णुपुराण–श्रीमद्भागवत–नारदीय–गरुडपुराणानि गणितानि सन्ति। एषु विष्णु–शिवयो. साम्यप्रतिपादनपूर्वकं ब्रह्म-शिवापेक्षया विष्णोरधिकं महत्त्वं वर्णितमस्ति—

विष्णोर्हि वैष्णवं तच्च तथा भागवतं शुभम्।
नारदीय पुराण च गारुड वैष्णवं विदु॥
चत्वारि वैष्णवानीश विष्णोः साम्यपराणि वै।
ब्रह्मादिभ्योऽधिक विष्णु प्रवदन्ति जगत्पतिम्॥

ब्राह्मपुराणेषु ब्रह्मपुराणं पद्मपुराणञ्चेति द्वे पुराणे गण्येते। अनयोः ब्रह्मा सर्वश्रेष्ठ प्रोक्तोऽस्ति। आग्नेयपुराणेषु एकमेवाग्निपुराणमागच्छति, यत्राग्ने महिमा व्यक्तीकृतो वर्तते। सावित्रपुराणेषु ब्रह्मवैवर्तपुराणमुक्तमस्ति, यत्र भगवान् भास्कर त्रिदेवात्मक साधितो वर्तते—

ब्राह्मं पाद्मं ब्रह्मणो द्वे अग्नेराग्नेयमेककम् ।
सवितुर्ब्रह्मवैवर्तम् एवमष्टादश स्मृतम् ॥

एवं देवानुसारि (२।३०-३८) स्कन्दपुराणस्येदं वर्गीकरणं वैज्ञानिकेऽस्मिन् युगे नहि समुचित प्रतिभातीति सुधीभिर्विभावनीयम् ।

(५) कियद्भिराधुनिकै. समालोचकै विद्वद्भिः पुराणेषु वर्णिताना विषयाणामाधारेण विभाजनं कृत्वा षड्वर्गा अभिमताः सन्ति। तत्र (१) प्रथमवर्गे मानवसमाजस्य कल्याणार्थमुपयोगिना विविधानां विद्याना-माध्यात्मिका भौतिकाश्चाशा गृहीता. सन्ति । अस्मिन् वर्गे गरुड-अग्नि-नारदीयपुराणानि आगच्छन्ति, येषु प्राचीनाना विद्याना संक्षेपश्चारुतया प्रस्तुतोऽस्ति । (२) द्वितीये वर्गे मुख्यतस्तीर्थाना व्रताना विशेष-वर्णनं विद्यते । अत्र वर्गे पद्म-स्कन्द-भविष्यपुराणाना गणनाऽस्ति । (३) तृतीये वर्गे ब्रह्म–पुराण-श्रीमद्भागवत-ब्रह्मवैवर्ताना नामानि सन्ति, येषामनेकानि संस्करणानि जातानि, येषु चावश्यकतानुसारं मूलातिरिक्ता अप्यंशा स्थले स्थले संयोजिता सन्ति । (४) चतुर्थवर्गे ऐतिहासिकाना पुराणाना गणनाऽस्ति, येपु ऐतिहासिकदृष्ट्या कलियुगीनाना राज्ञामपि वर्णनमस्ति । एवंविधेषु पुराणेषु वायु ब्रह्माण्डयो. पुराणयो. समावेशो वर्तते । एनयोः वर्णनसाम्यातिरिक्ता अध्यायेषु आश्चर्यजनकं साम्यं विद्यते । उभयत्र वहवोऽध्याया समाना दृष्टिगोचरी भवन्ति । अतएव डा० किर्फिलमहोदयेन[1] उभे पुराणे एकस्मादेव मूलपुराणाद् विनि सृते कथिते स्त. । (५)पञ्चमवर्गे साम्प्रदायिकाना पुराणाना गणना विद्यते । यत्र लिङ्ग-मार्कण्डेय-वामनपुराणानि समागच्छन्ति । (६) षष्ठे च वर्गे वाराह-कूर्म-मत्स्यपुराणानि स्वीकृतानि सन्ति । ऐषु पाठपरिवर्त-नाधिक्येन एषा मूलं सन्दिग्धं जातमस्तीति डा० पुसालकरः[2] ।

भविष्यपुराणस्य प्रतिसर्गपर्वणि तत्तत्पुराणाना कर्तृणाञ्चोल्लेख-पूर्वकं सात्त्विक-राजस-तामसपुराणाना निर्देश. कृतोऽस्ति–

पराशरेण रचितं पुराण विष्णुदेवतम् ।
शिवेन रचितं स्कान्द पाद्म पद्ममुखोद्भवम् ॥
शुकप्रोक्त भागवत ब्राह्मं वै ब्रह्मणा कृतम् ।
गारुड हरिणा प्रोक्त षड् वै सात्त्विकसम्भवा. ॥

---

१. पुराणपञ्चलक्षणभूमिकाया पृ. ५ ।

२. कल्याणस्य संस्कृत्यङ्के पृ. ५५२-५५३ ।

मत्स्य कूर्मो नृसिहश्च वामनः शिव एव च ।
वायुरेतत्पुराणानि व्यासेन रचितानि वै ॥
राजसा षट् स्मृता वीर ! कर्मकाण्डमया भुवि ॥
मार्कण्डेयं च वाराहं मार्कण्डयेन निर्मितम् ॥
आग्नेयमङ्गिराश्चैव जनयामास चोत्तमम् ।
लिङ्गब्रह्माण्डके चापि तण्डिना रचिते शुभे ॥
महादेवेन लोकार्थे भविष्य रचित शुभम् ।
तमसाः षट् स्मृता प्राज्ञैः शक्तिधर्मपरायणाः ॥ =२८।१०-१५

## पुराणेषु अन्तर्विभाजनम्

पुराणानामन्तर्विभाजनं भाग-खण्ड-अंश-स्कन्द-पाद-पर्व-संहिता-अध्यायेषु जातमस्ति । तथा भागांशखण्डेष्वपि अनेके अध्याया. सन्ति। एवं सर्वेषु पुराणेषु अध्यायास्तु सन्त्येव, किन्तु क्वचन भाग-खण्ड-अंशाभ्यन्तरे वर्तन्ते क्वचिच्च स्वतन्त्रा. एव सन्ति ।

(१) ब्रह्मपुराणं द्वयोर्भागयो विभक्तमस्ति—पूर्वभाग , उत्तरभागश्च । उभयत्र २४५ अध्याया , नारदीयपुराणमतेन १०००० मत्स्यपुराण-मतेन च १३००० श्लोकाश्च सन्ति ।

(२) पद्मपुराणस्य विभाजनं पञ्चसु खण्डेषु जातमस्ति (१) सृष्टिखण्डम् (२) भूमिखण्डम् (३) स्वर्गखण्डम् (४) पातालखण्डम् (५) उत्तर-खण्डं च । तत्र क्रमश ८२, १२५, ३६, ११३, २८२ सङ्कलनया ६४१ अध्याया ५५००० श्लोकाश्च विद्यन्ते ।

(३) विष्णुपुराणं भागद्वये विभक्तमस्ति पूर्वभाग , उत्तरभागश्च, किन्त्विदानीमेतस्य केवल पूर्वभाग एवोपलभ्यते, य षट्सु अंशेषु विभक्तोऽस्ति। तत्र प्रथमेऽशे २२ द्वितीये १६ तृतीये १८ चतुर्थे २४ पञ्चमे ३८ षष्ठेऽशे च ८ संकलनया १२६ अध्याया सन्ति। इद पुराण २३००० संख्याकं भवितुमर्हति, किन्तु साप्रतं सर्व नोपलभ्यते अस्योत्तरभागो विष्णुधर्मोत्तर कथ्यते, तेन सख्यापूर्ति सम्भवति ।

(४) क–शिवपुराणस्य विभाजनं सप्तसु संहितासु जातमस्ति (१) विद्ये-श्वरसंहिता (२) रुद्रसंहिता (३) शतरुद्रसंहिता (४) कोटिरुद्र-संहिता (५) उमासंहिता (६)कैलाशसंहिता (७) वायवीयसंहिता च तत्रापि द्वितीयाया रुद्रसंहिताया पञ्च खण्डा.-सृष्टिखण्ड., सतीखण्डः, पार्वतीखण्ड., कुमारखण्डो युद्धखण्डश्च सन्ति, तथा

सप्तम्या वायवीयसंहिताया द्वौ भागौ स्त - पूर्वार्द्धमुत्तरार्द्ध-ञ्च। तत्र सप्तसु संहितासु क्रमश २५, १६७, ( २०×४३×५५×२०×५६=१६७ ) ४२, ४३, ५७, २३, ७६ ( ३५×४१=७६) गणनया ४६४ अध्यायाः २४००० श्लोकाश्च सन्ति।

[४] ख-वायुपुराणं चतुर्षु पादेषु विभक्तमस्ति (१) प्रक्रियापादः (२) उपोद्घातपाद. (३) अनुषङ्गपाद (४) उपसंहारपादश्च। तेषु प्रथमे १-६, द्वितीये ७-६४, तृतीये ६५-६६, चतुर्थे च १००-११२ अध्यायाः सन्ति।

(५) क–श्रीमद्भागवतम् १२ स्कन्धेषु विभक्तमस्ति। तत्र क्रमशः १६, १०, ३३, ३१, २६, १६, १५, २४, ६०, ३१, १३, गणनया ३३५ अध्याया. १८००० श्लोकाश्च सन्ति।

[५] ख-देवीभागवतम् १२ स्कन्धेषु विभक्तमस्ति। तत्रापि क्रमशः २०, १२, ३०, २५, ३४, ३१, ४०, २४, ५०, १३, २४, १४ गणनया ३३२ अध्याया. १८००० श्लोकाश्च सन्ति।

(६) नारदीयपुराणस्य विभाजनं भागद्वये जातमस्ति-पूर्वभाग., उत्तरभागश्च। तत्र पूर्वभागे चत्वार पादा. १२५ अध्यायाः,उत्तरभागे च ८२ संकलनया २०७ अध्यायाः २५००० श्लोकाश्च सन्ति।

(७) मार्कण्डेयपुराणं १३३ अध्यायेषु विभक्तमस्ति। एतस्य श्लोकसंख्या ६००० अस्ति, परमिदानी ६६०० श्लोका एव उपलभ्यते।

(८) अग्निपुराणस्य विभाजन ३८३ अध्यायेषु जातमस्ति। तत्र नारदोयानुसारं १५००० मत्स्यानुसार च १३००० श्लोका भवितुमर्हन्ति।

(६) भविष्यपुराण पञ्चसु पर्वसु विभक्त विद्यते। (१) ब्राह्मपर्व (२) वैष्णवपर्व (३) शैवपव (४) सौरपर्व (५) प्रतिसर्ग पर्व च। अत्र ६०५ अध्याया. नारदीयानुसारं १४००० मत्स्यानुसारञ्च १४५०० श्लोका भवितुमर्हन्ति।

[१०] ब्रह्मवैवर्तपुराणं चतुर्षु खण्डेषु विभक्तमस्ति [१] ब्रह्मखण्डः [२] प्रकृतिखण्ड. [३] गणेशखण्डः [४] श्रीकृष्णजन्मखण्डश्च। तत्रान्तिमे भागद्वयं विद्यते पूर्वभागः, उत्तरभागश्च। अत्र क्रमशः ३०, ५७, ४६, १३३ सङ्कलनया २६६ अध्यायाः १८००० श्लोकाश्च वर्तन्ते।

[११] लिङ्गपुराण द्वयोर्भागयो विभक्तमस्ति पूर्वभागः, उत्तरभागश्च। तत्र क्रमश. १०८, ५५ गणनया १६३ अध्यायाः ११००० श्लोकाश्च सन्ति।

[१२] वाराहपुराणस्यापि विभाजनं भागद्वये जातमस्ति पूर्वभाग, उत्तरभागश्च। अत्र २१८ अध्याया २४००० श्लोकाश्च सन्ति।

[१३] स्कन्दपुराण मप्तसु खण्डेपु विभक्तमस्ति [१] माहेश्वरखण्ड (२) वैष्णवखण्डः [३] ब्रह्मखण्ड [४] काशीखण्ड· [५] अवन्तीखण्ड. (६) नागरखण्ड [७] प्रभासखण्डश्च। तत्राप्यनेकेऽवान्तर-खण्डाः सन्ति। अत्र क्रमश १७४, १५६, ८७, १००, ३८७, २७९, ४२१ सङ्कलनया १६७१ अध्यायाः नारदीयमतेन ८१००० श्लोकाश्च सन्ति, किन्तु मत्स्यपुराणानुमारं ८११०२ श्लोका भवितुमर्हन्ति।

[१४] वामनपुराणे द्वौ भागौ स्तः-पूर्वभाग·, उत्तरभागश्च। तत्रादौ चतस्रः संहिता. सन्ति– [१] माहेश्वरीसंहिता [२] भागवतीसहिता [३] सौरीसंहिता [४] गाणेश्वरी संहिता च। अत्र ९५ अध्याया. १०००० श्लोकाश्च विद्यन्ते। अस्योत्तरभागो नेदानीमुपलभ्यते।

[१५] कूर्मपुराणे चतस्रः संहिता सन्ति–(१) ब्राह्मीसहिता (२) भागवती संहिता (३) सौरी संहिता (४) वैष्णवी संहिता च। तत्र साम्प्रतं केवलं ब्राह्मीं संहितामात्रमेवोपलभ्यते। यत्र भागद्वयं वर्तते (१) पूर्वार्द्धम् (२) उत्तरार्द्धञ्च। अत्र पूर्वार्द्धे ५३ उत्तरार्द्धे च ४६ गणनया ९९ अध्याया. ६००० श्लोकाश्च सन्ति। अत्र नारदीयपुराणानुसारं १७००० मत्स्यपुराणानुसारं च १८००० श्लोका भवितुमर्हन्ति।

[१६] मत्स्यपुराणं २९० अध्यायेपु विभक्तमस्ति। तत्र १४००० श्लोकाः सन्ति, किन्तु नारदीयपुराणानुसारं १५००० श्लोका भवितुमर्हन्ति।

[१७] गरुडपुराणस्य विभाजनं खण्डद्वये जातमस्ति, पूर्वखण्ड·, उत्तर-खण्डश्च। तत्रोत्तरखण्डस्य प्रेतकल्प इत्यपि नामान्तरमस्ति, यत्र शरीरत्यागानन्तरं परलोकगतना जीवाना प्रेतक्रियाया विवरणं सविस्तरं प्रतिपादितमस्ति। अत्र भागद्वये क्रमश २४०, ७८ सङ्कलनया ३१८ अध्याया सन्ति। अस्मिन् नारदीयपुराणानुसारं १९००० मत्स्यपुराणानुसारं च १८००० श्लोका भवितुमर्हन्ति।

[१८] ब्रह्माण्डपुराणस्य वायुपुराणवत् चतुर्षु पादेषु विभाजनं जात-मस्ति (१) प्रक्रियापाद· (२) अनुषङ्गपाद. (३) उपोद्घातपादः (४) उपसंहारपादश्च। तत्र प्रथमं पादद्वयं पूर्वभाग उच्यते, तृतीयपादो मध्यभागः कथ्यते, चतुर्थपादश्चोत्तरभागो निगद्यते। ऐषु १६१ अध्यायाः सन्ति। एतत् पुराणं नारदीयानुसारं १२००० मत्स्यपुराणानुसारं च १२२०० श्लोकसंख्याकं भवितुमर्हति।

# चतुर्थः परिच्छेदः

## पुराणानां समीक्षा

### ब्रह्मपुराणम्

विष्णुपुराणानुसारं ब्रह्मपुराणमष्टादशसु पुराणेषु प्रथमं पुराण विद्यते, किन्तु देवीभागतानुसारमिदं पञ्चमं पुराणं प्रोच्यते–

आद्यं सर्वपुराणाना पुराण ब्राह्ममुच्यते ।
अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ॥ =वि० पु० ३।६।२०

नारदीयपुराणानुसारं ब्रह्मपुराणे दशसहस्राणि श्लोका भवितुमर्हन्ति । अत्र मानवमात्रस्य कल्याणाय वेदमर्मज्ञेन विदुषा महर्षिणा वेदव्यासेन धर्मार्थकाममोक्षाणा प्राप्तिमुद्दिश्य अनेकेषामाख्यानानां निरूपणं कृतमस्ति—

ब्राह्म पुराण तत्रादौ सर्वलोकहिताय वै ।
व्यासेन वेदविदुषा समाख्यात महात्मना ॥
तद्वै सर्वपुराणाग्र्यं धर्मकामार्थमोक्षदम् ।
नानाख्यानेतिहासाढ्य दश साहस्रमुच्यते ॥=ना० पु० ६२।३०

इयमेव संख्या विष्णुपुराण—शिवपुराण—स्कन्दपुराण ( रेवामहात्म्य ) ब्रह्मवैवर्त—श्रीमद्भागवत—मार्कण्डेयपुराणेष्वपि निर्दिष्टाऽस्ति, किन्तु मत्स्यपुराणानुसारं ब्रह्मपुराणे महर्षिमरीचिमुद्दिश्य ब्रह्मणा प्रोक्ताः त्रयोदशसहस्राणि श्लोका भवितुमर्हन्ति–

ब्रह्मणाऽभिहितं पूर्वं यावन्मात्र मरीचये ।
ब्राह्म त्रिदशसाहस्रं पुराणं परिकीर्त्यते ॥ =म० पु० ४३।१३

पद्मपुराण-लिङ्गपुराण-कूर्मपुराणान्यपि ब्रह्मपुराण त्रयोदशसहस्रसख्याकमेव मन्यन्ते ।

अत्र द्वौ भागौ स्त.—पूर्वभाग उत्तरभागश्च । तत्र पूर्वभागे ५७ उत्तरभागे च १८८ मिलित्वा २४५ अध्यायाः सन्ति, येषामध्ययनेन सकलपापनिवृत्ति. सर्वविधसुखावाप्तिश्च सम्भवति—

एतद् ब्रह्मपुराण तुं भागद्वयसमाचितम् ।
वर्णितं सर्वपापघ्नं सर्वसौख्यप्रदायकम् ॥

पुराणमिदमर्थादीनामस्थिरत्व धर्मं च परमं पुरुषार्थं मन्यमानं तत्र प्रवृतयेऽतिसुन्दरमुपदेशंप्र ददाति ( २४५।३६.३७ )।

धर्मे मति र्भवतु व: पुरुषोत्तमाना स एक एव परलोकगतस्य वन्धु: ।
अर्था: स्त्रियश्च निपुणैरपि सेव्यमाना नैव प्रभावमुपयान्ति न च स्थिरत्वम् ॥
धर्मेण राज्य लभते मनुष्य: स्वर्गं च धर्मेण नर: प्रयाति ।
आयुश्च कीर्ति च तप: प्रतिष्ठा धर्मेण मोक्ष लभते मनुष्य: ॥

नाम्ना पुराणमिद ब्रह्ममाहात्म्यसूचकं प्रतीयते, परन्तु स्वयं ब्रह्मपुराणमात्मानं वैष्वण पुराण वक्ति, यतोहि तत्र श्रद्धापूर्वकमस्य पुराणस्य श्रवणेन पाठेन वा विष्णुलोकगमनस्य चर्चा कृताऽस्ति—

पुराण वैष्णव त्वेतत् सर्वकिल्विषनाशनम् ।
विशिष्ट सर्वशास्त्रेभ्य: पुरुषार्थोपपादकम् ॥
इद हि श्रद्धया नित्य पुराण वेदसम्मितम् ।
य: पठेच्छृणुयान्मर्त्य: स याति भवन हरे: ॥=२४५।२०,२७

यश्चेद सतत श्रृणोति मनुज: स्वर्गापवर्गप्रद
विष्णु लोकगुरु प्रणम्य वरद भक्त्यैकचित्त: शुचि. ।
भुक्त्वा चात्र सुख विमुक्तकलुष: स्वर्गे च दिव्यं सुख
पश्चाद्याति हरे: पद सुविमल मुक्तो गुणै: प्राकृतै: ॥=२४५।३४

अत्र भगवतो विष्णोरवताराणा विशेषता तथा उत्कल प्रान्ते वर्तमानाया जगन्नाथपुर्या भगवतो जगन्नाथस्य महात्म्यं विशेषरूपेण वर्णितमस्ति। ७५–१७५ अध्यायेषु गौतमीगङ्गामहात्म्यप्रसङ्गेविविधतीर्थाना च वर्णनं विद्यते। १८०-२१२ द्वात्रिंशदध्यायेषु भागवत: श्रीकृष्णस्य रुचिरं चरित्रं चर्चितमस्ति, तथा उत्कलप्रान्तीयकोणादित्यस्य तत्सम्बद्धाया सूर्यपूजाया वर्णनं महत्त्वप्रद वर्तते। अथ सूर्यमहिम्न: तद्व्यापकप्रभुत्वस्य च पञ्चसु २५–२९ अध्यायेषु वर्णनं दर्शनीयं वर्वते। ३०–५० पर्यन्त दशस्वाध्यायेषु पार्वतीस्वयम्वरस्य तथा शिव-पार्वतीविवाहस्य च महन्मनोरमं वणनं विद्यते। अस्मिन्नवसरे षडपि ऋतव स्वै: स्वै प्राकृतिकै विभवै: सह सहैवोपतिष्ठन्ते, यस्य वर्णनं ७–१२४ पद्यै कृतमस्ति। एषु पद्येषु काव्यगतं सौन्दर्यं नितरा चेतश्चमत्करोति। अपि दशसु २३४–२४३ अध्यायेषु सांख्ययोगयो: समीक्षा विशदतया कृताऽस्ति। तत्र ज्ञानेन सह भक्तेर्वर्णन कृतमस्ति। राज्ञा करालजनकेन पृष्ठो महर्षि: वशिष्ठो यत् साख्यतत्त्वाना विवेचनं

कृतवानस्ति, तत् प्रचलितसाख्याद् भिन्नमस्ति। प्रचलितमाग्वरकृष्णीयं साख्यं तत्त्वानि २५ मन्यते, किन्तु ब्रह्मपुराणे २६ संख्याकानि तत्त्वानि स्वीकृतानि सन्ति। अत्रत्यं साख्यं निरीश्वरं साख्यं नास्ति, अपितु अत्र भक्त्या सह ज्ञानस्यापि समन्वयात् तत् सेश्वरं साख्यमस्ति।

अस्मिन् ब्रह्मपुराणे सृष्टिवर्णनान्तरं चन्द्रवंश-सूर्यवंशयो. संक्षिप्तो निर्देश., पार्वत्या आख्यानम्, मार्कण्डेयचरितम्, गङ्गागौतमीप्रभृतीना नदीना महिम्नो वर्णनम्, चक्रतीर्थ-पुत्रतीर्थ-यमतीर्थादीना माहात्म्यम्, श्रीकृष्णचरितस्य रुचिरं वर्णनमैतिहासिकभौगोलिकज्ञानायात्यन्तो-मुपयोगी विषयोऽस्ति।

ब्रह्मपुराण हि भूमण्डले भारतवर्षं सर्वश्रेष्टं देशं मन्यते। तत्रापि वर्तमानं पुण्यप्रदं दण्डकारण्यं तु सर्वोत्तमं तीर्थं स्वीकरोति तथा तत्र प्रवहनशीला गौतमी (गोदावरी) गङ्गा च समस्तासु नदीषु प्रमुखा नदी कथयति, यस्याः सेवनेन यत्र वा यज्ञेन दानेन मनुजा भुक्ति मुक्तिञ्च-नूनं लभन्ते–

पृथिव्या भारतं वर्ष दण्डक तत्र पुण्यदम्।
तस्मिन् क्षेत्रे कृत कर्म भुक्तिमुक्तिप्रदं नृणाम्॥
तीर्थाना गौतमी गङ्गा श्रेष्ठा मुक्तिप्रदा नृणाम्।
तत्र यज्ञेन दानेन भोगान् मुक्तिमवाप्स्यति॥=८८।१८,१९
श्रूयते दण्डकारण्ये सरित् श्रेष्ठाऽस्ति गौतमी।
अशेषाघप्रशमनी सर्वाभीष्ट–प्रदायिनी॥=१२९।६२

एवं भारतवर्पे-दण्डकारण्ये-गौतमीपुनीतप्रदेशे चास्य पुराणस्य विशिष्ट अग्रहो दृष्टिगोचरी भवति। अतोऽस्य पुराणस्याधिकोंऽशोऽत्रैव गोदारी-पुण्यप्रदेशे एव रचितः प्रतीयते इत्युनुमिन्वन्ति समालोचका—

अत्र सर्वेषु पात्रेषु पुराणज्ञो विद्वान् श्रेष्ठं सत्पात्रं प्रोक्तमस्ति यतो हि स सदुपदेशद्वारा सर्वानसत्कर्मभ्यो वारयित्वा त्रायते। ब्रह्मपुराणं हि गो-गंगा-पुराण-ब्राह्मण-पिप्पलवृक्षेषु नारायणबुद्ध्या श्रद्धा कर्तु-मुपदिशति—

सर्वेषामेव पात्राणां श्रेष्ठ पात्रं पुराणवित्।
पतनात् त्रायते यस्मात्तस्मात् पात्रमुदाहृतम्॥
ब्राह्मणेषु पुराणेषु गगाया गोषु पिप्पले।
नारायणधिया पुम्भिर्भक्तिः कार्या ह्यहैतुकी॥

पुराणमिदं परस्त्रीणां दर्शनं हेयदृष्ट्या प्रपश्यति, तासां नग्ननिरीक्षणं वारयति, ततो जायमानानां च दुर्गतीनां सम्यग्वर्णनं करोति—

परदारेषु ये चापि चक्षुर्दुष्टं प्रयुञ्जते ।
तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति हि ॥
मनसाऽपि प्रदुष्टेन नग्नां पश्यन्ति ये स्त्रियम् ।
रोगार्तास्ते भवन्तीह नरा दुष्कृतकारिणः ॥
ये तु मूढा दुराचारा वियोनौ मैथुने रताः ।
पुरुषेषु सुदुष्प्रज्ञाः क्लीवत्वमुपयान्ति ते ॥ २२५।४९-५१

विवेचनम्—

अस्य पुराणस्यादिभाग उत्कलप्रदेशे प्रणीतः प्रतीयते, यतोहि २८-६९ एकचत्वारिंशदध्यायेषु जगन्नाथक्षेत्रस्य लघीयसां तीर्थानामुत्कृष्टो महिमा व्यक्तीकृतोऽस्ति, पुरुषोत्तमक्षेत्र सर्वेषां तीर्थानां मूर्धन्यमभिहितमस्ति, कोणार्कस्य महती प्रशंसा कृताऽस्ति तथा गुडीचायात्रादर्शनयो विपुलं फलमुक्तमस्ति। प्रतिवर्षमाषाढशुक्लपक्षीयद्वितीयायां भगवन्तं श्रीकृष्णं तदग्रजं वलभद्रं भद्रभाषिणीं तदनुजां भगिनीं सुभद्रां च रथे स्थापयित्वा या यात्रा जायते, सा उत्कलप्रदेशे गुडिवा (गुडीचा) यात्रेति नाम्ना प्रसिद्धा वर्तते, यद्दर्शनेन विष्णुलोकप्राप्तिः प्रजायते सर्वकामनावाप्तिश्च भवति—

गुडिवामण्डपं यान्तं ये पश्यन्ति रथे स्थितम् ।
कृष्णं वलं सुभद्रां च ते यान्ति भवनं हरेः ॥ ६६।१

ब्रह्मपुराणे भारतवर्षस्य तीर्थयात्राप्रसङ्गे वहूनि वैदिकोपाख्यानानि कथाप्रसङ्गतया परिवर्द्धितानि सन्ति, यत्रानेके आर्षप्रयोगा मिलन्ति। ब्रह्मपुराणे, पुराणपञ्चलक्षणं सम्यक् समन्वेति-यथा आद्येषु चतुर्षु अध्यायेषु सर्ग-प्रतिसर्गयोर्वर्णनमस्ति। पञ्चमेऽध्याये मन्वन्तरस्य कथा वर्तते। अग्रिमेषु अध्यायेषु वंश-वंशानुचीरते कीर्तिते स्तः। अतः पुराणमिदं नूनं पञ्चलक्षणलक्षितं विद्यते।

वस्तुतः पुराणमेतत् १७५ अध्याये एव समाप्तं जायते, यत्र १–८५ श्लोकै गौतमीगङ्गाया विशदं महात्म्यं वर्णयित्वा ८६–९० श्लोकेषु पुराणस्यास्य श्रवणदानयोर्माहात्म्यवर्णनानन्तरं मानवस्य कृतकृत्यतायाः सङ्केतोऽस्ति। अतः १७६–२४५ अध्यायाः पश्चात् संयोजिताः प्रतीयन्ते।

ब्रह्मपुराणस्य विष्णुराणस्य च श्रीकृष्णचरिते तथा ब्रह्मपुराणस्य नारदीयपुराणस्य च पुरुषोत्तममाहात्म्ये महती समानताऽस्ति। एवमनेके

प्रसङ्गा महाभारतस्यानुशासनपर्वणि शान्तिपर्वणि च अविकला उपलभ्यन्ते, येऽक्षरशो मिलन्ति। अत उभयो. साम्येन महान् सन्देह उपतिष्ठते।

डॉ० आर. सी हाजरामहोदयस्य कथनमस्ति यद् जीमूतवाहन-वल्लालसेन-कृष्णदेवभट्टद्वारा स्वस्वनिवन्धेपु ब्रह्मपुराणनाम्ना समुद्धृता. श्लोका ब्रह्मपुराणे नोपलभ्यन्ते। अस्मिन् पुराणे न केवल महाभारतस्य, अपितु विष्णु-वायु-मार्कण्डेयपुराणानामनेकेऽध्याया. सम्मिलिता सन्ति। अत. पुराणमिद मूलपुराण नस्ति, किन्तु कालान्तरे रचितप्रक्षेपवहुल पुराणमस्ति।

डॉ० विलसनप्रभृतय पाश्चात्या विपश्चितस्तदनुयायिनो भारतीयाश्च ब्रह्मपुराण त्रयोदशशताब्द्या सङ्कलित मन्यन्ते, यतोहि पञ्चदशशताब्द्या वर्तमानै षड्दर्शनटीकाकारै र्वाचस्पतिमिश्रै स्वकीये पुरुषार्थचिन्तामणि-नामके निवन्धग्रन्थे ब्रह्मपुराणस्य तीर्थविपयका वहव. श्लोका उद्धृता. सन्ति। कल्पतरुकारप्रभृतिभिरनेकैर्निवन्धकारैरपि स्वस्वनिवन्धग्रन्थेपु प्रामाण्याय ब्रह्मपुराणस्य पर्याप्तानि पद्यानि अङ्कितानि सन्ति। अतोऽस्य पुराणस्यनिर्माणकालो वाचस्पतिमिश्रात् पूर्वं त्रयोदशशताब्दीस्वीकरण समीचीनमिति तन्न सम्यक्, न वा प्रामाणिक प्रतिभाति, यतो हीत पूर्वमपि निर्मिते हलायुधस्य ब्राह्मणसर्वस्वे, हेमाद्रिपरिशिष्टखण्डे, वल्लालसेनस्य दानसागरे च ब्रह्मपुराणस्य वहव श्लोका उपलभ्यन्ते।

ब्रह्मपुराणस्य पठन-स्मरण-कीर्तन-श्रवणादिफल तत्रैव यथा—

एतस्य पठन चापि स्मरण वा करोति य।
सर्वपापविनिर्मुक्तो याति विष्णो पुरं जन ॥ १७५।३०
किमत्र वहुनोक्तेन यद् यदिच्छति मानव।
तत् सर्व लभते वत्स! पुराणस्यास्य कीर्तनात् ॥ १८५।११
वेदोदित श्रुतिसकलरहस्यमुक्त सत्कारण समनिधानमिद सदैव।
सम्यक् च दृष्ट जगता हिताय प्रोक्त पुराण वहुधर्मयुक्तम् ॥

## (२) पद्मपुराणम्

सर्वाणि पुराणानि पद्मपुराणं द्वितीयं पुराण मन्यन्ते, किन्तु देवी-भागवतं मार्कण्डेयपुराण द्वितीय मनुते, पद्मपुराण च चतुर्दशं स्वीकरोति। परिमाणे पद्मपुराण स्कन्दपुराणादर्द्ध श्रीमद्भागवताच्च त्रिगुण विद्यते। पुराणमिदं पुराणशरीरिणो विराड्ब्रह्मणो हृदयमुच्यते—ब्राह्म मूर्द्धा हरेरेव हृदयं पद्मसञ्ज्ञितम्। ( स्वर्गखण्डे ६२।२२ )

स्वरूपम्—

मत्स्यपुराणानुसार भगवतो विष्णो र्नाभिकमलादुद्भूतसृष्टिरचनावृत्तान्ताश्रयणात् पद्मपुराण प्रोच्यते, यस्य श्लोकसख्या ५५ सहस्राणि सन्ति—

एतदेव महापद्म ह्यभूद्धैरण्मयं जगत् ।
तद्वृत्तान्ताश्रय तद्वत् पाद्ममित्युच्यते बुधै ॥
पाद्म पञ्चपञ्चाशत् सहस्राणीह पठ्यते ॥ म०पु० ५३।१४

ब्रह्मवैवर्तस्य श्रीकृष्णजन्मखण्डमपि एतदेव समर्थयति—

पञ्चोनपष्टिसाहस्र पाद्ममेव प्रकीर्तितम् ॥ ब्र०वै० ३।१३१।११

यथा मानवः पञ्चेन्द्रियो भवति तथैवेद पुराणमपि पञ्च खण्डात्मकमस्ति—

यथा पञ्चेन्द्रिय सर्व शरीरीति निगद्यते ।
तथेद पञ्चभि खण्डैरुदित पापनाशनम् ॥ ना० पु० ९२।२

स्वय पद्मपुराणमपि आत्मानम् पञ्चखण्डात्मक कथयति—

प्रथम सृष्टिखण्ड हि भूमिखण्ड द्वितीयकम् ।
तृतीय स्वर्गखण्ड च पाताल तु चतुर्थकम् ॥
पञ्चम चोत्तर खण्ड सर्वपाप – प्रणाशनम् ॥ १।१।५४

तत्र क्रमश सृष्टिखण्डे ८२ भूमिखण्डे १२५ स्वर्गखण्डे ३९ पातालखण्डे ११३ उत्तरखण्डे च २८२ सकलनया ६४१ अध्याया सन्ति ।

(१) तत्र सृष्टिखण्डे हिरण्मयपद्मस्योत्पत्तिवृत्तान्त तथा विश्वोत्पत्तिः विस्तारपूर्वकं वर्णिता विद्यते (२) भूमिखण्डे सप्तद्वीपाना सप्तसागराणा वनपर्वतनदनदीनाञ्च विवरण वर्तते । (३) स्वर्गखण्डे वैकुण्ठलोकवर्णनं परलोकसाधन प्रलयादिलक्षण शिवलिङ्गार्चनविधिः, वैष्णवतिलकविधान तद्विविधनियमनिरूपणं च वर्तते। (४) पातालखण्डे श्रीरामचरित-श्रीकृष्णलीलादीना विशद विवेचन विद्यते (५) उत्तरखण्डे चापवर्गसाधन मोक्षपरिचय विविधतीर्थव्रतमहिमप्रकाशन गृहस्थधर्मनिरूपण नवधासर्गवर्णनम्, सात्त्विक-राजस-तामसपुराणपाठश्रवणादिप्रतिपादनञ्च विद्यते,

किन्तु स्वर्गखण्डे (१) सृष्टिखण्ड (२) भूमिखण्ड (३) स्वर्गखण्ड (४) ब्रह्मखण्ड (५) पातालखण्ड (६) उत्तरखण्ड (७) क्रियायोगसारखण्डेति सप्त खण्डानि स्वीकृतानि सन्ति । तत्र खण्डाना क्रमेऽपि मतभेद उपलभ्यते । कैश्चित्तु स्वर्गखण्डमादिखण्ड सृष्टिखण्डञ्चान्तिम खण्ड स्वीक्रियते—

प्रवक्ष्यामि महापुण्य पुराण पद्ममज्ञितम् ।
सहस्र पञ्चपञ्चाशत् सप्तखण्डै समन्वितम् ।।
तत्रादौ सृष्टिखण्ड स्याद् भूमिखण्ड द्वितीयकम् ।
तृतीय स्वर्गखण्ड ञ्च चतुर्थ ब्रह्मखण्डकम् ।।
पाताल पञ्चम खण्ड पष्ठमुत्तरमेव च ।
क्रियाखण्ड सप्तम स्यादित्यव सप्तखण्डकम् ।। = १।२३-२५

विषयवर्णनम्—

एव नारदीयपुराण-ब्रह्मपुराणसृष्टिखण्डानुसार पद्मपुराण पञ्च खण्डेषु विभक्तमस्ति, किन्तु स्वर्गखण्डानुसार पद्मपुराणे सप्त खण्डानि सन्ति। विचारका विद्वासस्तु ब्रह्मखण्डस्य स्वर्गखण्डे क्रियायोगसारखण्ड-स्योत्तरखण्डे चान्तर्भाव कृत्वा पद्मपुराणे पञ्चानामेव खण्डाना मान्यता स्वीकुर्वन्ति। पद्मपुराणोयसृष्टिखण्डे पञ्चपर्वात्मकस्यापि पद्मपुराणस्योल्लेखो दृश्यते। तत्र प्रथमे पौष्करपर्वणि भगवतो विष्णोरूत्पत्तिस्तथा ब्रह्मद्वारा नवधा सर्गरचना उक्ताऽस्ति। एव तत्र देवता-पितर-मुनि-मनुष्यादीना सृष्टे वर्णनमस्ति। (२) द्वितीये तीर्थपर्वणि ग्रहगण-बन-पर्वत-द्वीप-सागर-नद-नदी प्रभृतीना भौगोलिक वर्णनमस्ति। (३) तृतीये ग्रहणपर्वण्यधिकदक्षिणा-दातृणा राज्ञा रुद्रसृष्टे दक्षशापस्य च वर्णनमस्ति। (४) चतुर्थे वशानु-चरितपर्वणि राज्ञामुत्पतिस्तथा तद्वशजाना वर्णन विद्यते (५) पञ्चमे पर्वणि समस्ततत्त्वाना मोक्षस्य च वर्णनमस्ति—

पाद्म तत् पञ्चपञ्चाशत् सहस्राणीह पठ्यते ।
पञ्चभि॰ पर्वभि प्रोक्त सक्षेपाद् व्यासकारितात् ।।
पौष्कर प्रथम पर्व यत्रोत्पन्न स्वय विराट् ।
द्वितीय तीर्थपर्व स्यात् सर्वग्रहगणाश्रयम् ।।
तृतीय - पर्वग्रहणा राजन्ता भूरिदक्षिणा ।
बशानुचरित चैव चतुर्थे परिकीर्तितम् ।।
पञ्चमे मोक्ष-तत्त्व च सर्वज्ञत्व निगद्यते ।।
पौष्करे नवधा सृष्टि सर्वेषा ब्रह्मकारिता ।
देवताना मुनीनाञ्च पितृसर्गस्तथाऽपर ।।
द्वितीये पर्वताश्चैव सप्त द्वीपा ससागरा ।
तृतीये रुद्रसर्गस्तु दक्षशापस्तथैव च ।।
चतुर्थे सम्भवो राज्ञा सर्ववशानुकीर्तनम् ।
अन्तेऽपवर्गसस्थानं मोक्षशास्त्रानुकीर्तनम् ।। १।१।५९-६६

परब्रह्मण आविर्भाव ध्यायतो नारायणस्य नाभितो यद् विचित्र पद्म प्रादुरभवत् तत् हिरण्मयमासीत्, तस्मिन्नेव विश्वसृष्टिकर्ता ब्रह्मा प्रादुर्भूत, तदेव पद्म रमा पृथिवी चाच्यते—

तच्च पद्म पुरा भूत पृथिवीरूपमुत्तमम् ।
नारायणसमुद्भूत प्रवदन्ति महर्षय ॥
यत् पद्म सा रमादेवी पृथ्वी परिकथ्यते ॥ सृ ख ४०।३

विवेचनम्—

पुराणेषु पद्मपुराणस्य स्थान महदुत्कृष्टमस्ति। अत्र न केवलं नारायणस्य नाभिकमलादुद्भूतेन ब्रह्मणा कृताया सृष्टेरेव वर्णनं विद्यते, अपितु अत्र वेदत्रनिपादिताया दहरविद्याया अपि विशद वर्णनमस्ति। अत पुराणमिद वैष्णवजगति महदादरभाजनमस्ति।

प्राय प्रतिपुराण तीर्थ व्रत-पवित्रपदार्थरूपेण भगवगत स्मरणस्येद रहस्यमस्ति यद् अलौकिकत्वाद् भगवन्मयत्वाद् भगवदद्भुतलीलास्मृति-चिह्नत्वाच्च तीर्थानि दर्शनसेवनस्मरणाभिगमनमात्रेण हृदयानि निर्मलानि बुद्धिश्च विशदा कृत्वा भगवदुन्मुखानि कुर्वन्ति, यतोहि भगवत्स्मृतावेव तीर्थाना पर्यवसान विद्यते। अतस्तीर्थमहिम्न उपसहारपूर्वक पद्मपुराणं कथयति यत् – सर्वतीर्थेषु महत्तर तीर्थं भगवत श्रीकृष्णस्य नामैवास्ति य कृष्णेति नाम समुच्चारयति स नूनं सम्पूर्णतीर्थफल लभते—

तीर्थाना च पर तीर्थ कृष्णनाम महर्षय ।
तिर्थीकुर्वन्ति जगती गृहीत कृष्णनाम यै ॥

एतदनुसारं समस्तस्य जगतः सृष्टिकर्ता पालनकर्ता सहर्ता च एकमात्रं हरिरेवास्ति। एतदतिरिक्तमन्यत् किमपि नास्ति—

स्रष्टा सृजति चात्मान विष्णु पाल्य च पाति च ।
उपसह्रियते चापि सहर्ता च स्वय प्रभु ॥

मनसा य· सकल्पो भवति, चक्षुरादीन्द्रियै येषा विषयाणा ग्रहण जायते, बुद्ध्या च येषा वस्तुनामाकलनमुपजायते, तत्सर्वं भगवत्स्वरूपमेवास्ते इत्येव पद्मपुराणस्यास्ति सिद्धान्तः—

यद्रूप मनसा ग्राह्य यद् ग्राह्यं चक्षुरादिभि ।
बुद्ध्या च यत् परिच्छन्नं तद्रूपमखिल हरे ॥

यथा यजुर्वेदे 'पुरुष एवेद सर्वम्' उपनिषदि च "सर्वं खल्विद ब्रह्म" इत्यादिना परमात्मा सर्वस्वरूपोऽभिहितोऽस्ति तथैव पद्मपुराणेऽपि परमात्मा सर्वात्मक स्वीकृतोऽस्ति। अत एवामलकी-तुलसी-पिप्पलादिवृक्षेष्वपि भगवद्भावस्याविर्भाव. स्वीक्रियते, तथा यो भक्तिपूर्वकं तेषा पूजनादिकं करोति तत्सर्वमीश्वरमय च मनुते, वस्तुत स एव परमगतेरधिकारी विद्यते, स च भगवत्कृपया सर्वं भोग भुक्त्वाऽन्ते मोक्षं लभते इति निश्चप्रचम्—

धात्र्यास्तुलस्या विदधाति भक्ति यो मानवो ज्ञातसमस्ततत्त्व ।
भुक्त्वा भोगान् सकलास्ततोऽन्ते स मुक्तिमाप्नोति हरे प्रासादात् ॥७।२४।६७

पद्मपुराणस्य प्रतिखण्ड साङ्गोपाङ्ग भक्ते· निरूपणमस्ति। समस्तस्यास्य पुराणस्याभिप्रायो भगवत्स्मृति-भगवद्भक्ति- भगवत्तत्त्वज्ञान-भगवत्तत्त्वसाक्षात्कारेषु एवाऽस्ति। इत एव जीव कृतकृत्यो भूत्वा मुक्तो भवितुमर्हति, नान्यथा। एवमेव नाम-लीला-धामान्यपि भगवत्स्वरूपाणि सन्ति। भक्तेर्वर्णने पद्मपुराणस्य यावत् साफल्यं प्राप्तमस्ति, न तावद् अन्येषा पुराणानाम्। इदमेवास्ति कारण यदिद पुराण वैष्णवभक्ताना परम प्रियमस्ति। यथा 'नान्य पन्था विद्यतेऽयनाय' इत्यादिवेदवचनेन तत्त्वज्ञानद्वारा एव भगवत्तत्त्वसाक्षात्कारास्य निरूपण कुर्वन्ति विपश्चित तथैव पद्मपुराणमपि सत्सङ्गात् शास्त्राणा श्रवण ततो भगवद्भक्ति ततो भगवत्तत्त्वज्ञान तदनन्तरं परमगतिप्राप्तिर्भवतीति निश्चिनोति—

साधुसङ्गाद् भवेद्विप्र ! शास्त्राणा श्रवण प्रभो ।
हरिभक्तिर्भवेत्तस्मात् ततो ज्ञान ततो गति ॥

परमगतिप्राप्तिकारकस्य तत्त्वज्ञानस्य साधनमस्ति भगवद्भक्ति , यतो हि भगवद्भक्तिमन्तरा अन्त करणस्य शुद्धि· भगवत्तत्त्वज्ञानञ्च न सम्भवति। अत एव यत्र तत्र भगवत्तत्त्वज्ञानादधिको भक्तेर्महिमा वर्णितो विद्यते। न केवल पद्मपुराणमेव, अपितु सर्वाणि पुराणानि भगवद्भक्तेः श्रेष्ठता प्रतिपादयन्ति, यतोहि सैव सर्वसुलभ साधन सर्वसाध्यञ्चास्ति।

पद्मपुराणेऽत्यन्तोपयोगिनां विषयाणा समावेशोऽस्ति। यथा तीर्थमहिम – श्राद्धविधिवर्णन–व्रत–स्नान–दानमहत्त्व–सत्यभाषण–लोभत्याग-वृक्षारोपण-सरोवरखनन-देवालयनिर्माण-देवतापूजनामलकीधात्रीमाहात्म्य-गङ्गा-गणेश - सूर्योपासना - ध्यान - प्राणायाम - पुराणमहत्त्ववर्णनादीना-विषयाणां साङ्गोपाङ्ग निरूपणमस्ति येषा पालनेनावश्य सद्गतिर्भवति।

पद्मपुराणे सत्विक-राजस-तामसभेदेनाष्टादशाना पुराणानां वर्गीकरण विद्यते। तदनुसारं सात्त्विकाना पुराणानामध्ययनेन मोक्ष· प्राप्यते, राजसानि पुराणानि स्वर्गप्रदानि सन्ति, तथा तामसाना पुराणानामनुशीलनेन तामसी प्रवृत्तिर्जायते, ययाऽधोगतिर्भवति—

सात्त्विका मोक्षदा प्रोक्ता राजसा स्वर्गदा शुभा ।
तथैव तामसा देवि ! निरय-प्राप्ति हेतव ॥५।२३६।२१

पद्मपुराणानुसार बलिनिग्रहसमये यदा भगवता वामनेन स्वकीयं पादं ब्रह्मलोके प्रसारित तदा लोकपितामहेन ब्रह्मणा झटिति स्वकमण्डलुजलेन तत् प्रक्षाल्य तज्जलं कमण्डलौ निहितम्। भगवतोऽनुकम्पया तज्जलमक्षय जातम्। तदनन्तर ब्रह्मा ससारं पवित्रयितु तदेव जलं सुमेरुशिखरे प्राक्षिपत्, यस्य चतस्रो धारा जाता। पूर्वधाराया नाम सीता जाता, दक्षिणधारा अलकनन्दानाम्ना प्रख्याता, पश्चिमधारा चक्षुनाम्ना प्रसिद्धा, उत्तरधारा च भद्रेतिनाम्ना विख्याता।

मेरो दक्षिणस्यां स्रवन्ती अलकनन्दैव लोकपावनी गङ्गेतिनाम्ना प्रख्याता, या स्वं पवित्रयितु भगवता शङ्करेण स्वजटाजूटे धारिता। स्वय भगवान् सदाशिव श्रीपार्वती प्रत्युक्तवानस्ति-दवि ! मेरुशिखरात् स्रवन्ती लोकपालनी गङ्गामात्मन· पवित्रतायै अह सहस्रदिव्यवर्षपर्यन्तमधारयम्, येन मम नाम शिव इति जात., तथाऽहं लोकपूजितोऽभवम्। यो हि शिरसा गगाजल धारयति प्राशयति वा स नून सर्वपूज्यो जायते—

ता दृष्ट्वा मेरुमध्ये तु प्रस्रवन्ती शुभानने ।
आत्मन पावनार्थं हि शिरसाहमधारयम् ॥
दिव्य वर्षसहस्र तु धृत्वा गगाजल शुभम् ।
शिवत्वमगम देवि ! सर्वलोकेषु पूजित ॥
यो वहेच्छिरसा गगातोय विष्णुपदोद्भवम् ।
प्राशयेद्वा जगत्पूज्यो भविष्यति न सशय ॥ २४०।४८-५०

ततो राज्ञा भगीरथेन तीव्रया तपस्यया आशुतोष भगवन्तं सदाशिवं प्रसाद्य स्वकीयान् कपिलशापदग्धान् पितॄन् तारयितु भगवती गङ्गा भूतले समानीता। तत्कालादेव सा भागीरथी गङ्गेतिनाम्ना विश्वस्मिन् विख्याता। एवमलकनन्दैव स्वर्गे मन्दाकिनी, पाताले भोगवती, मर्त्यलोके च गङ्गेतिनाम्ना प्रसिद्धाऽस्ति। अत एव सा त्रिपथगा प्रोच्यते—

स्वर्गे मन्दाकिनी प्रोक्ता त्वधो भोगवती तथा ।
मध्ये वेगवती गगा पालनाय नृणा शिवा ॥ ५।२४०।३७

बहूना विपश्चित. । मतमस्ति यदिदानीपर्यन्त पद्मपुराणस्य चत्वारि सस्करणानि जातानि सन्ति। प्रथम सस्करण व्यासद्वारा जातम् । द्वितीय बौद्धधर्मस्य ह्रासमये तथा सनातनधर्मस्य पुनरुत्थानसमये जातम् । तृतीय नारदीयपुराणानुसार जातम् । चतुर्थ च सस्करण ११-१२ शताब्दी-मध्ये रामानुजमाधवाचार्यादिसमये जातम्, यत्र बहव साम्प्रदायिका श्लोका ये तृतीये सस्करणे नासन्, ते समायोजिता -यथा पाखण्डिलक्षण मायावादनिन्दा, तामसादिपुराणवर्णनम्, ऊर्ध्वपुण्ड्र-शङ्ख-चक्र-गदा-पद्मादि वैष्णवचिन्हधारणविधि द्वैतवादमुख्यातिरित्यादि । एवमेव शङ्खचक्रोर्ध्वपुण्ड्रादिरहिता द्विजा पाखण्डिना हेयाश्चोक्ता तथा अवैष्णवब्राह्मणाना दर्शन-भाषण-स्पर्शादीना निषेध. कृता विद्यते—

शङ्खचक्रोर्ध्वपुण्ड्रादिचिन्हैः प्रियतमैः हरे ।
रहिता ये द्विजा देवि! ते वै पाषण्डिन स्मृता ॥
किमत्र बहुनोक्तेन ब्रह्मणा येऽप्यवैष्णवा ।
न स्प्रष्टव्या न वक्तव्या न द्रष्टव्या कदाचन ॥ ७।१३५।६।१३

उर्ध्वपुण्ड्रविहीनस्तु शङ्ख-चक्र-विवर्जित ।
न गर्दभे समारोप्य बहि कुर्यात् स्वपत्तनात् ॥ ५।२२४।४५

नारदीयपुराणे पद्मपुराणस्य या सूची प्रदत्ताऽस्ति, तस्या साम्प्रदायिकतायुक्तोऽशो नास्ति । अत सिध्यति यदयमश पश्चात् साम्प्रदायिभि प्रक्षिप्तोऽस्ति । विशिष्टाना विचारशीलाना विदुषा मतमस्ति, यत् यत्र कुत्रापि एवं सम्प्रदायविद्वेषसूचका श्लोका सन्ति, त सर्वे आधुनिका प्रक्षिप्ताश्च सन्ति, यतो हि महर्षिव्याससदृशस्य समन्वयवादिनो विदुष लेखनीत ईदग् असम्बद्धप्रलापस्य कदापि सम्भवो नास्ति । अय तु सम्प्रदाय-विद्वेषस्यैकस्तरङ्ग आसीत्, यस्य वेगे कियन्त. स्वार्थसाधका विद्वद्ब्रुवा विभिन्नेषु पुराणेषु प्रक्षिप्तान् श्लोकान् समेल्यान्यसम्प्रदाय च निन्दयित्वा स्वसंम्प्रदायस्य प्रचाराय कुचक्र चालितवन्त. ।

पद्मपुराणस्य द्वे वाचने स्त., एका उत्तरभारतीयवाचना, द्वितीया च दक्षिणभारतीयवाचना । प्रथमानुसारमत्र पञ्च खण्डानि सन्ति । द्वितीयवाचनानुसारमिद पुराण षट् खण्डात्मकमस्ति। हेमाद्रौ कल्पतरौ चास्य पुराणस्यानेकानि वचनानि सगृहीतानि सन्ति। डा. लूडर्सेन

पातालखण्डे निर्दिष्टा ऋष्यशृङ्गस्य कथा महाभारतवनपर्वणि ११०-११२ अध्याययो वर्णितकथात' प्राचीनतरा मन्यते। अन्यैश्च विद्वद्भि पद्मपुराणप्रतिपादिततीर्थयात्राप्रकरण महाभारतवनपर्वनिर्दिष्टात् तीर्थयात्राप्रसङ्गात् प्राचीनमभिमतम्।

पद्मपुराणस्य स्वर्गखण्डेऽङ्कित शाकुन्तलोपाख्यान न महाभारतीयशकुन्तलोपाख्यानेन समन्वेति, अपितु कालिदासकृतादभिज्ञानशाकुन्तलात् समता धत्ते। डा० विन्टरनित्स तथा डा० हरदत्तशर्मा च अस्मिन् प्रसङ्गे कालिदास पद्मपुराणस्याधमर्णं स्वीकुरुत, किन्तु श्रीबलदेवोपाध्यायेन शकुन्तलाया अनसूया-प्रियम्वदाभिधसखीद्वयकल्पनाया आधारेण पद्मपुराणमेव कालिदासस्याधमर्णं मन्यते। एव कालिदासस्याभिज्ञानशकुन्तलाश्रितत्वात् पद्मपुराणस्य रचनाकाल पञ्चमशताब्दीतोऽर्वाचीन एवास्ति। कियन्तो विद्वास' पद्मपुराणस्योत्तरखण्ड षोडशशताब्दीत पर निर्मित मन्यते। एतच्छ्रवणफलनिर्देशो यथा—

पञ्चखण्डयुत पाद्म य शृणोति नरोत्तम।
स लभेद् वैष्णव धाम भुक्त्वा भोगानिहेप्सितान्॥

इदमतिशयगुह्य नि सृत व्यासवक्त्राद्रुचिरतरपुराण प्रीतिद वैष्णवानाम्।
चिरममरवराद्यैर्वन्दिताङ्घ्रेर्मुरारे सकलभुवनभर्तुश्चक्रिण प्रतियेऽस्तु॥

नारदीयपुराणानुसार तु पद्मपुराणस्य प्रेमपूर्वक श्रद्धया श्रवणेन पठनेन वा महत् पुण्यमुपजायते, सर्वाणि पापानि च प्रणश्यन्ति प्राणिनाम्—

शृणु वत्स! प्रवक्ष्यामि पुराण पद्मसज्ञकम्।
महत्पुण्यप्रद नृणा शृण्वता पठता मुदा॥ ९२।१

## (३) विष्णुपुराणम्

अष्टादशपुराणेषु विष्णुपुराणस्य तृतीय स्थानमस्ति, प देवीभागवतमिद नवम पुराण मन्यते। मत्स्यपुराणानुसार वाराहकल्पकथानकमाश्रित्य महर्षिणा पराशरेण यस्मिन् पुराणे समस्ताना धर्माणा वर्णन कृतमस्ति-तदेवास्ति विष्णुपुराण यस्य श्लोकसख्या त्रयोविंशतिसहस्राणि सन्ति—

वाराहकल्प वृत्तान्तमधिकृत्य पराशर।
यत् प्राह धर्मानखिलास्तदुक्त वैष्णव विदु॥
त्रयोविंशतिसाहस्र तत्प्रमाण विदुर्बुधा॥ ४३।१६।१७

नारदीयपुराणानुसार तु यस्य पुराणस्यादिभागे शक्ते पुत्रेण पराशरमुनिना मैत्रेय प्रति सर्वपापनिवर्तिका भगवतो विष्णो कथा षट्सु अशेषु कथिताऽस्ति, तद् त्रयोविंशतिसहस्रात्मक विष्णुपुराणमुच्यते—

शृणु वत्स प्रवक्ष्यामि पुराण वैष्णव महत् ।
त्रयोविंशति – साहस्र सर्वपातकनाशनम् ।
यत्रादिभागे निर्दिष्टा षडशा शक्तिजेन ह ।
मैत्रेयायादिमे तत्र पुराणस्यावतारिका ।। ९४।१ २

स्वरूपम्—

मत्स्यपुराण-नारदीयपुराणयोः विष्णुपुराणस्य यल्लक्षण निर्दिष्टमस्ति तद् विष्णुपुराणे नून सघटते, पर विवादोऽस्ति, केवल श्लोक-सख्यायाम् । नारदीयपुराणानुसार षष्ठाशानन्तरमुत्तरखण्ड कथितमस्ति, पर साम्प्रत सोऽशो नोपलभ्यते । अतो विद्वद्भिर्विष्णुधर्मोत्तर विष्णुपुराणस्योत्तरभागं मत्वा त्रयोविंशतिसहस्रसख्या पूरयन्ति, किन्तु डा विलसनमहोदयो विष्णुधर्मोत्तर विष्णुपुराणस्योत्तरभाग नाङ्गीकरोति, यतो हि तन्मते श्लोकसख्यामन्तर विद्यते । पर नारदीयपुराणानुसारमल्वरुणिवर्णनेन च विष्णुधर्मोत्तरस्य विष्णुपुराणोत्तरभागस्वीकारे न काप्यस्त्यनुपपत्ति ।

तदेव विष्णुपुराणे भागद्वयमस्ति । पूर्वभाग उत्तरभागश्च । तत्र केवल पूर्वभाग एवेदानीमुलभ्यते, यत्र तत्र प्रकाशितश्च विद्यते, यत्र षडशा सन्ति । एषु प्रथमेऽशे २२ द्वितीयऽशे १६ तृतीयेऽशे १८ चतुर्थेऽशे २४ पञ्चमेऽशे ३६ षष्ठेऽशे ८ सङ्कलनया १२६ अध्याया सन्ति ।

विषयवर्णनम्—

षडशात्मकस्य साम्प्रतमुपलभ्यमानस्य विष्णुपुराणस्य प्रथमेऽशे सविस्तार सृष्टे वर्णन विद्यते । द्वितीयेऽशे भूगोलस्य साङ्गोपाङ्ग विवेचनमस्ति । तृतीयेऽशे चतुर्णामाश्रमणा विशेषकर्तव्यस्य निर्देशोऽस्ति । चतुर्थेऽशे श्रीमद्भागवतवदत्रापि गद्येन सोमवंशस्य प्रामाणिक इतिहासो-वर्णित यदन्तर्गतं राज्ञो ययाते चरितेन सह यदु-तुर्वसु-अयु -अनु-पुरूणा वशस्योल्लेखोऽस्ति । पञ्चमे भगवत श्रीकृष्णस्य सान्वयं लौकिक चरित्रं चित्रितमस्ति । षष्ठेऽशे च कलियुगस्वरूप-प्रायश्चितविधान-योगमार्ग-निरूपणपूर्वक महत्या वैशनिकपद्धत्या ज्ञानेन सह भक्तेः वैष्णवभक्त-हृदयग्राहि मञ्जुल सामञ्जस्य स्थापितमस्ति । विष्णुपुराणस्य गणना सात्त्विकपुराणेषु विद्यते, प्रधानतयाऽत्र भगवतो विष्णोरुपासनाया सकेते

सत्यपि सकीर्णता नास्ति। अतो वैष्णवसमाजे विष्णुपुराणस्य सर्वाधिकः समादरो विद्यते। इद दि पुराण वैष्णवाना मूलाधारोऽस्ति। अतो वैष्णवाना मान्यताऽस्ति यद् महाभारते गीता, धर्मशास्त्रे मनुस्मृतिः, वेदेषु पुरुषसूक्तम्, तथा पुराणेषु सर्वश्रेष्ठ पुराणं विष्णुपुराणमेवास्ति—

भारते भगवद्गीता धर्मशास्त्रेषु मानव ।
वेदेषु पौरुष सूक्त पुराणेषु च वैष्णवम् ॥

विवेचनम्—

अत. श्रीरामानुजाचार्येण स्वकीये श्रीभाष्ये विष्णुपुराणस्य श्लोका एव प्रमाणरूपेणोद्धृता।एव मध्वाचार्य-चैतन्यमहाप्रभुभि वैष्णवैरपि स्व-स्वमतसमर्थने विष्णुपुराणस्य वचनानि समुद्धृतानि सन्ति, तत्सिद्धान्ताश्च सगृहीता विद्यन्ते। दार्शिनकदृष्ट्या वैष्णवसम्प्रदाये यदि श्रीमद्भागवतस्य प्रथम स्थानमस्ति तर्हि विष्णुपुराण द्वितीयस्य स्थानस्यास्त्यधिकारि। इद विष्णुपुराणमाकारे स्वल्पमपि महत्त्वदृष्ट्या महत् स्वीकृत विद्यते।

षडशात्मके प्रकाशिते विष्णुपुराणे अनेका टीका उपलभ्यन्ते। तासु चित्सुखमुनि-विष्णुचित्त-रत्नगर्भभट्टाचार्य-जगन्नाथपाठक-नृसिहभट्ट-श्रीधर-स्वामिना टीका उल्लेखनीया सन्ति। परमास्वपि तिस्रो महत्त्वपूर्णा टीका सम्प्रत्यपि समुपलभ्यन्ते—(१) एका श्रीधरस्वामिपादाना श्रीधरी, (२) विष्णुचित्तस्य विष्णुचित्तीया, (३) तृतीया च रत्नगर्भभट्टाचार्यस्य वैष्णवाकूतचन्द्रिका। आसु तिसृष्वपि टीकासु विप्रचित्तीया व्याख्या महन्महत्वपूर्णा विस्तृता च विद्यते।

भारतप्रसिद्धेन ज्योर्विदा ब्रह्मगुप्तेन विष्णुपुराणस्य ज्यौतिषाधारेण विश्वविश्रुतस्य ब्रह्मसिद्धान्तनामकस्य ग्रन्थस्य निर्माण कृतमिति श्रूयते। स विष्णुपुराणस्य महानुपयोगी भागोऽद्यत्वे नोपलभ्यते, लुप्तो जात। एव विष्णुपुराणनाम्ना सगृहीताना श्रीकृष्णजन्माष्टमीव्रतकथा-भारताख्या-नादिस्तोत्राणामुपलब्धिर्न भवति। अत पुराणमिदमपूर्णपुराणेषु एव गणनीयतामर्हतीति। दौर्भाग्यविलसितमेतत्।

विष्णुपुराणे पुराणपञ्चलक्षण सम्यक् सघटते। सृष्टिविवरणम्, प्रलय, ऋषिमुनीना वशस्येतिवृत्तम्, राज्ञामुपाख्यानम्, मन्वन्तरनिरूपणम्, धर्मस्य विविधानामङ्गाना प्रतिपादनञ्चास्मिन् पुराणे रुचिर कृतमस्ति। प्रसङ्गतः स्वर्ग-नरक-भूगोल-खगोलादयो विविधा विद्या, विभिन्नप्रकारका उपदेशाश्च प्रतिपादिता सन्ति। अत समाज-सस्कृत्यो र्निरूपणदृष्ट्याऽस्य महापुराणस्य महत्त्व सर्वाधिक विद्यते।

विष्णुपुराणस्य रचयितास्ति पराशरमुनि । आरम्भे मैत्रेयः पराशर-मुनि प्रति विश्वोत्पत्तिविषये प्रश्नं करोति । अपि च तत्रैव वसिष्ठपौत्र-शक्तिनन्दनपराशरद्वारा वसिष्ठ प्रति प्रश्नस्यापि निर्देशोऽस्ति । अतोऽस्य कर्ता वसिष्ठोऽपि प्रतीयते । तत्राधुनिकरूपस्य रचयिता पराशरोऽस्ति, आदि निर्मातास्ति वसिष्ठ । अत्र वायु-ब्रह्म-मत्स्यपुराणापेक्षयाऽधिका मौलिकी महत्त्वपूर्णा च सामाग्री सङ्कलिता विद्यते ।

वस्तुतो मानव जीवन सुखी कर्तु भगवच्छरणागति तद्गुणगान तद्यश. श्रवण मनोवाक्कायकर्मभि कृत कर्म विष्णवे समर्पणमात्मसशोधनञ्च अत्यावश्यकं मन्वा त्याग-शील-सयम-साधनादीना महत्त्वपूर्ण चित्रण विद्यते पुराणेऽस्मिन् । अत तल्लीलावतारकर्मणा मनोग्राहि वर्णन विद्यते । अत्र ध्रुव-प्रह्लाद - सगर भगीरथ नहुष-ययाति-जमदग्नि-विश्वामित्र-वासुदेव-केशिध्वजादीना चरित्रचित्रण तात्कालिकसमाजस्येतिवृत्तमुपस्थापयति । विष्णुपुराणे सर्वेपामाख्यानाना मध्ये मर्मस्पर्शि प्रह्लादोपाख्यान वर्तते । व्यासदेवेनैतदाख्यानमादर्यैवावतारतत्त्वस्य सिद्धान्त प्रतिपादितोऽस्ति ।

एव विष्णुपुराणे धर्म-समाज-राजनीति-दर्शन-भूगोल-खगोलदोनामपि सम्यग्विवेचन विद्यते । विष्णुपुराणे वर्णित भारतस्य विभिन्नाभिर्दृष्टि-भिरन्वेषण पुराणवाङ्मयस्याध्ययने परमोपयोगि महत्वपूर्णञ्चास्ति । पुराणेऽस्मिन् शिक्षा सम्बन्धिना सिद्धान्ताना सम्यग् विवेचन कृतमस्ति । तदनुसारमद्य इव पुराणसमयेऽपि महान्तो विश्वविद्यालया आसन्, यत्र चतुदशानामष्टादशाना वा विद्यानामध्ययन भवितस्म । विष्णुपुराणे पशु-पालन-कृषि-वाणिज्यादीनामत्यधिक महत्त्व दत्तमस्ति । अपिच पुराणे-ऽस्मिन् खनिजपदार्थ-उत्पादन-वितरण-श्रमादीना सप्रमाणमन्वेषण प्रस्तुत-मस्ति । पुराणेऽत्र सस्कृतसाहित्येषु वर्णिता भारतीयसस्कृति प्रकाशे समानेतु स्तुत्य प्रयास कृतोऽति । भारतीयवर्णव्यवस्थाया वैज्ञानिकत्व-मुपादेयत्वञ्च सोपपत्तिक विवेचितं विद्यते । नारीणा कन्या-भगिनी-पत्नी-माता-सन्यासिनी-विधवेति विविधानि रूपाणि चित्रितानि सन्ति । राज नोतिविषये राज्योत्पत्ति-सिद्धान्त-विकास-प्रजापालन-दायविभाजन-विधेय-कार्य-राजकर-राष्ट्रियभावनाप्रभृतयो विषया. सम्यग्विवेचिता सन्ति ।

पुराणेऽस्मिन् भक्ते. महत्त्वपूर्ण विवेचन कृतमस्ति । भक्तिमार्गद्वारा साधकस्य मन. स्वभावतो भगवदुन्मुख जायते । नवधाया भक्ते विस्तृत वर्णनं पुराणस्यास्य वैशिष्ट्यमस्ति । भगवत्स्वरूपपरिज्ञान भक्ते विविधा-

ङ्गप्रत्यङ्गप्रदर्शन पुराणेऽत्र कृतमस्ति। स्थय पराशरेण मुनिना प्रोक्तमस्ति यत् यो भगवन्त विष्णु स्मरति, तस्य पापराशिर्भस्मसाद्भवति तथा स मोक्षपद प्राप्नोति, स्वर्गाप्तिस्तु तस्यातितुच्छत्वाद् विघ्नप्रायाऽनुमीयते—

विष्णु संस्मरणात् क्षीणसमस्तक्लेशसञ्चय ।
मुक्ति प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते ॥ २।६।४० ॥

अपि च विष्णुपुराण समस्तपापनाशक समस्तशास्त्रविशिष्टपुरुषार्थोपपादक पुराणमस्ति। विष्णुपुराणे रथयुद्ध-पदातियुद्ध-मल्लयुद्धप्रभृति-विविधयुद्धानामुदाहरणान्युपलभ्यन्ते। विष्णुपुराणस्य व्रतविधान बहुभिर्दृष्टिभि महत्त्वपूर्णमस्ति।

मानवसभ्यता-सस्कृत्यो र्वास्तविकज्ञानाय विष्णुपुराणस्याध्ययन-नितान्तमावश्यकमस्ति। अस्मिन् पुराणे सभ्यतया सहैव सस्कृतेर्महनीय-तत्त्वानि विवेचितानि सन्ति। जीवनभोग-सौन्दर्य-चिन्तन-त्याग-आत्म-सयम-शील-स्वभाव-भक्तिसाधनादीना विस्तृत वर्णन ( चित्रण ) विद्यते। विष्णुपुराणे चतुर्भुजा भगवान् विष्णु सर्वशक्तिमान् मङ्गलमय शरणागत-वत्सल आर्तिहर्ता भक्तरक्षकश्च प्रोक्तोऽस्ति। अत एवोक्तम्—

पुराण वैष्णव चैतत् सर्वकिल्विषनाशनम् ।
विशिष्ट सर्वशास्त्रेभ्य पुरुषार्थोपपादकम् ॥ ६।८।३ ॥

साहित्यिकदृष्ट्या पुराणमिदमत्यन्त सरस सरल सुभाषित रमणीयं मनोहर चास्ति। श्रीमद्भागवतपञ्चमस्कन्धवत् चतुर्थेऽशेऽत्र ललितगद्य-च्छटाऽत्यन्त चित्त चमत्करोति। अत्र पुराणे भगवता श्रीकृष्णेन शिवेन जगता च सहात्मनोऽभिन्नता व्यञ्जयता स्पष्टमभिहितम्—

योऽह म त्व जगच्चेद सदेवासुरमानुषम् ।
मत्तो नान्यदशेष यत् तत्त्व ज्ञातुमिहार्हसि ॥
अविद्यामोहितात्मन पुरुषा भिन्नदर्शिन ।
वदन्ति भेद पश्यन्ति चावयोरन्तर हर ।

विष्णुपुराणनिर्माणविषये लिङ्गपुराणे लिखितमस्ति यद् ब्रह्मण सुतेन महर्षिणा पुलस्त्येन शक्तिपुत्राय पराशराय वर ददौ यत् भवान् पुराण-सहिताया निर्माता भविष्यति, तद्वचनं भगवता वसिष्ठेनापि समर्थितम्। तदनुसार तेन पराशरमुनिना षट्सु अशषु षट्सहस्रश्लोकै विष्णु-

पुराण निर्मितम्, यत्र समस्ताना धर्मार्थ-ज्ञान-विज्ञान-वेदार्थाना निरूपण कृतम्, तदेतत्तृतीय विष्णुपुराणमवश्यमध्येयम्। तथाहि (६४।११७,२१ २१)–

पुराणमहिना कर्ता भवान् भुवि भविष्यति ।
अथ नम्य पुलस्त्यस्य वसिष्ठस्य च धीमत ॥
प्रमादाद्वैष्णव चक्रे पुराण वै पराशर ।
षट्प्रकार समस्तार्थसाधक ज्ञान-सञ्चयम् ॥
षट् साहस्रमित सर्व वेदार्थेन च सयुतम् ।
तृतीय हि पुराणाना सहितासु सुशोभनम् ॥

विष्णुपुराणस्य पञ्च श्लोकाः ( ४।१०।२३–२७ ) ये ययातिगाथा-सम्बन्धिन सन्ति, ते ब्रह्मपुराणे ( १२।४१–४६ ) तथा ब्रह्माण्डपुराणे ( ३।६८।९७–१०३ ) चापि प्राप्यन्ते। कियद्भि शब्दपरिवर्तनै सह ते श्लोका महाभारतस्यादिपर्वणि ( ७५।५०–५४ ) अप्युपलभ्यन्ते ।

मिताक्षरा-कल्पतरु-अपरार्क-स्मृतिचन्द्रिकासु विष्णुपुराणस्याधिका. श्लोका प्रमाणत्वेनोद्धृता सन्ति। विष्णुपुराणे भगवत श्रीकृष्णस्य चरित्र सक्षेपेण निरूपितमस्ति परं, श्रीमद्भागवते तस्य विशद वर्णनमस्ति। विष्णुपुराणे तु नक्षत्राणामारम्भ कृतिकातो भवति, किन्तु वाराहमिश्र-समये अश्विनीत प्रारम्भो जायते। एव राशेरुल्लेखो विष्णुपुराणे कर्कतो विद्यते। दैवज्ञाना मान्यतानुसार सर्वप्रथम द्वितीयशताब्द्या याज्ञवल्क्यस्मृतिद्वारा राशीनामुल्लेखो जात । एतदाधारेण-विष्णुपुराण-स्यापि समय द्वितीयशताब्दी भवितुमर्हति ।

श्रीमद्भागवतविष्णुपुराणयोस्तुलनात्मकेनाध्ययनेन प्रतीयते यद् विष्णुपुराण श्रीमद्भागवतात् प्राचीनतरमस्ति। डा. विन्टरनित्सस्य मतमस्ति यत् श्रीमद्भागवते कतिपयविषयविवरण विष्णुपुराणादुद्धृ-तमस्ति।[1] पार्जिटरस्य कथनमस्ति, यत् उपर्युक्तयो द्वयो पुराणयो वर्णितवशावलीभि. ज्ञायते यद् भागवतपुराणरचनाया विष्णुपुराणस्यो-पयोग. कृतोऽस्ति।[2] कतिपयाः पौराणिककथाः विष्णुपुराणे सक्षिप्ता प्राचीनरूपेणोपलभ्यन्ते, किन्तु भागवतेऽतिविस्तृता आधुनिकरूपेण परि-वर्णिताश्च सन्ति। यथा ध्रुव-वेन-पृथु-प्रह्लाद-जडभरतकथा । भागवते एवविधोऽपि विषयो विद्यते, यो विष्णुपुराणे नोपलभ्यते। यथा-भागवते भगवतो विष्णोर्हंसावतारस्य चर्चा विद्यते, किन्तु विष्णुपुराणमत्र मौनमाल-

१. हि० इ० लि० भा० १ पृ० ५५५। २ ए० इ० हि० पृ० ८०।

म्वते। ऐतनावगम्यते यद् विष्णुपुराण भागवतात् प्राचीनतरम्, तथा पष्ठशतकात् पूर्वकालीना रचनाऽस्ति, यतो डा हाजरा भागवतस्य समयं षष्ठशतक मन्यते।[१] अपिच तन्मतेन नक्षत्राणा प्राचीनक्रमस्य पश्चादस्तित्व नासीत्। अत एव नक्षत्रपद्धतिप्रतिपादकस्य विष्णुपुराणस्य समय पञ्चमशतकस्यान्तिमभागस्य परवर्तिनि काले न सम्भवति।[२] डॉ० सुरेन्द्रनाथगुप्तेन विष्णुपुराणस्य समय तृतीयं शतकं मतमस्ति।[३]

डॉ० हाजरा-मतेन विष्णुपुराण पाञ्चरात्रसांप्रदायिकं पुराण विद्यते। अत्रादितोऽन्तपर्यन्त वैष्णवधर्मस्य प्रतिपादन वर्तते। अन्यपुराणवदत्रापि स्मृतिसम्बन्धिनोऽनेकेऽध्याया वर्तन्ते। अत्र विविधनरकवर्णन-वर्णाश्रमधर्मविवेचन - गृहस्थसम्बन्धिसदाचारनिरूपण - श्राद्धादिक्रियाकलाप - युगधर्मकर्मविपाक-विविधतापाना साङ्गोपाङ्ग विवरण विद्यते। अस्या परिस्थितावस्य पुराणस्य तिथिक्रमनिर्धारणे कठिना समस्या वर्तते। यदि वैष्णवमतप्रभावित कूर्मपुराण ५५०—६५० मध्ये रचित वर्तते तर्हि विष्णुपुराण सप्तमशतकारम्भस्यानन्तरकालीन न भवितुमर्हति[४]।

विष्णुपुराणस्य रचनासम्बन्धे पार्जिटरो ब्रवीति यद् यतोऽत्र वायु-ब्रह्म-मत्स्यपुराणवद् विविधा सामग्र्यो नोपलभ्यन्ते। अत्र जैन-बौद्धवादानामुल्लेखात् प्रतीयते यदस्य रचना ब्राह्मणवादस्य समाप्त्यनन्तरं जातास्ति। अतो ब्राह्मणवादस्य प्रतीकत्वादनुमानतो विष्णुपुराण पञ्चमशताब्दीरचना वर्तते[५] डा० पार्जिटरमतसमर्थकस्य विन्टरनित्सस्य कथनमस्ति यद् विष्णुपुराण पञ्चमशतकादधिकपश्चाद् रचनास्ति[६] डा० फर्क्युहरस्य मतमस्ति यद् रचनासादृश्यात् ४०० कालिकहरिवंशाद् विष्णुपुराण पश्चान्न भवितुमर्हति। अतो ज्ञायते यदिदमपि पुराण तात्कालिकमेव[७]। यवनजातीयै कैकिलै आन्ध्रे ५७५-९०० पर्यन्त शासनं कृत ७८२ ईशवीये तेषा प्रभुत्व चरम सीमानमुपगतमासीत्। विष्णुपुराणे ककिलानामुल्लेखात् सी० बी० वैद्यो विष्णुपुराण नवमशताब्दीरचना मन्यते[८]। याज्ञवल्क्यस्मृतियुग यावत् तिथि-नक्षत्रग्रहोपग्रहै सह परिचये जातेऽपि विष्णुपुराणे राशिचक्रसस्थानस्य विवरणाद् ध्वन्यते यदस्य

१ पु० रे० हि० पृ० ५५। २ तत्रैव पृ० २२-२३। ३ हि० इ० फि० भा० ३ पृ० ५०१। ४ पु० रे० हि० पृ० २१-२२। ५. ए० इ० हि० पृ० ८५। ६ हि० इ० लि० भा० १ पृ० ५४५, पा० टी० २। ७. आ० ला० लि० पृ० १४३। ८ हि० डि० इ० पृ० ३५०।

पुराणस्य रचनाकाले राशिचक्रस्य पूर्णप्रसिद्धिर्जाताऽऽसीत्। एतेन निष्कर्षो नि सरति यद्भारतीयसमाजो द्वितीयशतकात् पूर्व राशि-सम्स्थानात् सर्वथाऽपरिचित आसीत्। अतो राशिपद्धति-होरापद्धतिभ्यां परिचितस्य विष्णुपुराणस्य रचनाकाल प्रथमशतकस्यान्तिमभागात् पूर्व न भवितुमर्हति[१]।

अत्र गुप्तवशस्य विस्तारपूर्वक वर्णन विद्यते। अत षष्ठशताब्दीत पूर्वमस्य रचना न सम्भवति। विष्णुगुप्तेन ६२८ ईशवीये वर्षे विष्णुपुराण-परिशिष्टस्य विष्णुधर्मोत्तरस्याधारेण ब्रह्मसिद्धान्तस्य स्थापना कृता। अत ६२८ पश्चादस्य रचना मन्तुं न शक्या। विषय-सामग्री-शैलीप्रभृतिदर्शने-नावगम्यते यदस्य रचना काल षष्ठशताब्दी विद्यते। विष्णुपुराणे येषा पौराणिकाख्यानाना सक्षिप्तो निर्देशो विद्यते, तेषामेव विस्तृत रूप श्रीमद्भागवते प्राप्यतेऽतो भागवतस्य रचनाकाल षष्ठमष्टम वा शतक विद्यते। अतो विष्णुपुराणस्य प्रणयन षष्ठशताब्द्या आरम्भे एव सभवति[२]। वस्तुत इमा सर्वाविचारधारा आपत्तिरहिता न सन्ति। अतो नवीनया कयाऽपि पद्धत्या विष्णुपुराणरचनाकालस्य निर्द्धारणमावश्यक प्रतीयते।

एतस्य विष्णुपुराणस्य पाठ-श्रवण-फल-इतिकर्त्तव्यतानिर्देशो यथा—

वाराहकल्पवृत्तान्त व्यासेन कथितन्त्विह।
यो नर पठते भक्त्या य शृणोति च सादरम्॥
तावुभौ विष्णुलोक हि व्रजेताम्भुक्तभोगकौ।
तल्लिखित्वा च यो दद्यादाषाढ्या घृतधेनुना॥
सहित विष्णुभक्ताय पुराणार्थविदे द्विज ?
स याति वैष्णव धाम विमानेनार्कवर्चसा॥
यश्च विष्णुपुराणस्य समनुक्रमणी द्विज।
कथयेच्छृणुयाद्वाऽपि स पुराणफल लभेत्॥

यत्रादौ भगवाश्चराचरगुरुर्मध्ये तथान्ते च स,
ब्रह्मज्ञानमयोऽच्युतोऽखिलजगन्मध्यान्तसर्गप्रभु।
तच्छृण्वन् पुरुष पवित्रपरम भक्त्या पठन् धारयन्,
प्राप्नोत्यस्ति न तत् समस्तभुवनेष्वेकान्तसिद्धिर्हरि॥ ६।८।५४

१ पु० रे० हि० पृ० २४। २. वि० पु० का भारत पृ० १२७।

## ४ ( क ) शिवपुराणम् ( ख ) वायुपुराणम्

सार्वजनीन हितमुपदेष्टु प्रवृत्ताना पुराणाना नाम-क्रम-सख्यासम्बन्धे पुराणेष्वेव महान् मतभेदो दृश्यते। विष्णु-पद्म-श्रीमद्भागवत-मार्कण्डेय-ब्रह्मवैवर्त-कूर्म-वाराह-लिङ्ग-स्कन्दपुराणेषु चतुर्थपुराणस्थाने शिवपुराणस्योल्लेखो विद्यते, किन्तु मत्स्य-नारदीय-देवीभागवतेषु शिवपुराणस्य स्थाने चतुर्थस्य वायुपुराणस्य नाम निर्दिष्टमस्ति । एव तत्तत्पुराणेषु निर्दिष्टपुराणसूच्यनुसार चतुर्थपुराणरूपेण द्वे पुराणे दृष्टिगोचरीभवत :—

एक शिवपुराणमपरञ्च वायुपुराणम् । मुद्गलपुराणे तूभयोरेव पुराणयो स्पष्टमुल्लखो विद्यते । तत्र कतरद् महापुराण कतरच्चोपपुराण मन्तव्यमित्यत्र किमस्ति वास्तविक रहस्यमिति समीक्षा जागर्ति । कियन्तो विद्वास. शिवपुराण चतुर्थं महापुराण स्वीकुर्वन्ति । केचिद् वायुपुराणमेव चतुर्थ महापुराण मन्यन्ते । कतिपये च समालोचका शिवपुराण वायुपुराणञ्चैकमेव पुराणमङ्गीकुर्वन्ति । तेषा मते शिवपुराणान्तर्गतमेवास्ति वायुपुराणम्, यतो हि शिवपुराणस्य वायवीयसहिताया वायुप्रोक्तत्वात् तदेव वायुपुराण नाम्ना प्रसिद्ध जातम् । बंगलाविश्वकोशकारेण च द्वयो' पुराणयोर्नाम्ना एकस्यैव शिवपुराणस्य सूचो प्रदत्तास्ति, तन्मतेऽपि शिवपुराणस्यैव नामान्तरमस्ति वायुपुराणम्, न तदस्ति भिन्न पुराण तथाहि—

यथा शिवस्तथा शैवपुराण वायुनोदितम् ।
शिवभक्तिसमायोगान्नामद्वय - विभूषितम् ।। इति

तन्न युक्तिसह प्रमाणपुष्टञ्च। 'एसियाटिक सासायटी' कालिकातात:, आनन्दाश्रमसस्कृतग्रथावलीपूनात , महामहोपाध्याय-प०पञ्चाननतर्करत्नद्वारा सम्पादित-वङ्गवासी-प्रेससस्करणत गुरुमण्डलग्रथमालाया कालिकातातश्च प्रकाशितस्य वायुपुराणस्य विषयसूची, वेङ्कटेश्वरप्रेस-बम्बईत: पण्डितपुस्तकालय-वाराणसीतश्च प्रकाशितस्य शिवपुराणस्य विषयसूचीत: सर्वथास्ति भिन्ना। अतो वायुपुराण शिवपुराणान्तर्गतमिति स्वीकरणम् उभयोरैक्यञ्चेति मतमप्रामाणिकम् । तस्माद् शिवपुराण वायुपुराणस्य विकल्पाङ्गीकरणमेव युक्तियुक्त प्रामाणिकञ्च । किञ्च, अरबयात्रिणा अल्बेरुणिनापि स्वकीये भारतभ्रमणनामके पुस्तके पुराणाना सूचीद्वय प्रदत्तम् अस्ति । तत्रैकस्या सूच्या वायुपुराणस्योल्लेखो विद्यते, अपरस्या च वायुपुराणस्य स्थाने शिवपुराणस्य नाम निर्दिष्टमस्ति ।

अपि च, साम्प्रत शिवपुराण-वायुपुराणनाम्ना प्रकाशिते विषयभेदान्विते हस्तलिखिते च भिन्ने-भिन्ने द्वे पुराणे उपलब्धे स्त । उभयोरपि पुराणयोराकार-प्रकार-वर्ण्यविपया भिन्ना भिन्ना उपलभ्यन्ते । अतस्तयोर्द्वयोः स्वरूपमुपस्थापयितुमत्यावश्यक मत्वा तयो स्वरूप वर्ण्यविषयाश्चाग्रे पृथक् पृथक् प्रदर्श्यन्ते ।

## शिवपुराणस्य स्वरूपम्

शिवपुराणस्योमासहिताया लिखितमस्ति यद् यस्य पुराणस्य पूर्वोत्तरखण्डे भगवत. शिवस्य पवित्र चरित्र विविधै प्रकारैर्वर्णितमस्ति, तत् पुराणं पुराणमर्मज्ञा विद्वासश्चतुर्थ शिवपुराणं कथयन्ति—

यत्र पूर्वोत्तरे खण्डे शिवस्य चरित वहु ।
शैवमेतत् पुराण हि पुराणज्ञा वदन्ति च ॥४४।१२५

शिवपुराण हि सप्तसु संहितासु विभक्तमस्ति (१) विद्येश्वरसहिता, (२) रुद्रसंहिता, (३)शतरुद्रसहिता, (४) कोटिरुद्रसहिता, (५) उमासहिता, (६) कैलाससहिता, (७) वायवीयसहिता च—

विद्येश्वराख्या तत्राद्या द्वितीया रुद्रसहिता ।
तृतीया शतरुद्राख्या कोटिरुद्रा चतुर्थिका ॥
पञ्चमी कथिता चोमा षष्ठी कैलाससहिता ।
सप्तमी वायवीयाख्या सप्तैव सहिता इह ॥वा०स०१।५९-६०

तत्रापिद्वितीयाया रुद्रसहितायां सृष्टिखण्ड-सतीखण्ड पार्वतीखण्डकुमारखण्ड-युद्धखण्डनामानि पञ्च खण्डानि सन्ति । सप्तम्या वायवीयसहितायाम् अपि द्वौ भागौ स्त :–पूर्वार्द्धमुत्तरार्द्धञ्च । सप्तस्वासु सहितासु क्रमश २५, १९७ ( २०+४३+५४+२०+५९=१९७ ) ४२, ४३, ५१, २३, ७६ ( ३५+४१=७६ ) सङ्कलनया ४५७ अध्याया सन्ति ।

शिवपुराणस्य वायवीयसहिताया पूर्वार्द्धे तु द्वादशसहितात्मकस्यापरस्यैकस्य शिवपुराणस्यापि सङ्केतोऽस्ति, यत्र लक्षसख्याकाः श्लोका. सन्ति—

तत्र शैव तुरीय यच्छार्व सर्वार्थसाधकम् ।
ग्रन्थो लक्षप्रमाणं तद् व्यस्त द्वादशसहितम् ॥
विद्येश्वरं तथा रौद्र वैनायकमनुत्तमम् ।
औमं मातृपुराण च रुद्रैकादशक तथा ॥

कैलास-शतरुद्र च कोटिरुद्राख्यमेव च ।
सहस्रकोटिरुद्राख्य वायवीयमत परम् ॥
धर्मसञ्ज्ञ पुराण चेत्येव द्वादश सहिता ॥ ४५, ५०-५२

किन्तु साम्प्रत द्वादशसहितात्मक शिवपुराण नोपलभ्यते, पर भगवता व्यासदेवेन तत एव सक्षिप्तीकृत सप्तसहितात्मक चतुर्विशतिसहस्रश्लोक चतुर्थ शिवपुराण तूपलभ्यत एव—

व्यासेन तत्तु सक्षिप्त चतुर्विशत्सहस्रकम् ।
शैव तत्र पुराण वै चतुर्थ सप्तसहितम् ॥ ७।१।५८

## वर्ण्यविषया

भगवत शिवस्य महत्त्व-सात्त्विकचरित्रेतिहास-विविधोदारतापूर्णाना कथाना विशदतया वर्णन शिवपुराणस्यास्ति वैशिष्ट्यम् । अत्र शिवसम्बन्धिना व्रतोपवास-पूजापद्धति-तपस्या-योगसाधनादीना वर्णन महदुत्कृष्ट विद्यते । प्रसङ्गतो ब्रह्माण्ड-भारतवर्ष-द्वीप-ग्रहस्थिति-कश्यपपत्नीनामपत्य-वर्णनमिक्ष्वाकुवश-मनुवशवर्णन च मनोहर विद्यते। जनसाधारणानामशिव शमयितु शिवमाहात्म्यप्रतिपादकस्य शिवपुराणस्य,पठन-पाठन-श्रवण-मननै. विविधतापसन्तप्ताना प्राणिना स्वान्ते शान्तिरुपजायते । अत एव बहवो मनीषिण सासारिकं प्रपञ्चमपहाय गाढभक्तिपुर सरं शिवाराधनपरायणा ऐहलौकिक पारलौकिक चाभीष्ट लभमाना अमन्दमानन्दमनुभवन्तोऽहर्निश भगवतो निटिलेश्वरस्य गुणगणान् गायमाना लोककल्याण कुर्वन्ति ।

अत्र ही सप्तसु सहितासु सन्तितत्र—(१) आद्याया विद्येश्वरसहिताया तीर्थराजे मुनियज्ञावलोकनार्थमागताय सूताय कलिदोषै क्षीयमाणे वर्णाश्रमे धर्मे नृणा श्रेय साधनमधिजिगमिषूणा मुनीना प्रश्नस्योत्तरे शिवपुराणस्य कलिकल्मपध्वसित्ववर्णनानन्तर सहिताभेदनिरूपणं शिवलिङ्गस्य अर्चनान्मुक्तिप्राप्ति , तथा विविधप्रकारै पुष्पैर्बिल्वपत्रैश्च पूजने फलवर्णन भस्मरुद्राक्षधारणमहत्त्वं शिवनिर्माल्यभक्षणनिर्णय पार्थिवेश्वरपूजनञ्चाति-स्पृहणीयमस्ति । (२) द्वितीयाया रुद्रसहिताया (क) प्रथमे सृष्टिखण्डे निर्गुणस्य शिवस्य शक्तिसम्बन्धेन प्रपञ्चनिर्माणवर्णनम्, शिवदर्शनार्थ स्थितयोर्ब्रह्मविष्ण्वोरोङ्कारनादश्रवण ततो ब्रह्माण्डोत्पत्तिस्तदनन्तर पञ्चवक्त्र-शिवसगुणमूर्तिप्रादुर्भाव ततो वेदाधिगम , लिङ्गपूजैव शिवसृष्टौ कारणम् । पुष्पविशेषैर्लिङ्गपूजने फलविशेषवर्णनम् । ततोऽनेकविधसृष्टिवर्णनं विद्यते ।

(ख) सतीखण्डे दक्षप्रजापते पुत्र्या भगवत्या सत्या पावनं चरित्रम् ४३ अध्यायेषु वर्णितमस्ति । यत्र दक्षकन्यकाया रत्या सह मदनस्य विवाहवर्णनपूर्वकं सतीशिवयोर्विवाहोत्सवानन्तर लीलया पृथिव्यामटतोस्तयोर्वने विरहिण राम प्रणमन्त शिवमवलोक्य सीतारूप धृत्वा सतीद्वारा सीतावियुक्तस्य श्रीरामचन्द्रस्य परीक्षाया मार्मिक प्रसङ्गो वर्णितोऽस्ति । यस्याधारेण गोस्वामिना तुलसीदासेनात्मीये रामचरितमानसे मार्मिक वर्णन कृतमस्ति । दक्षयज्ञे योगाग्निना सतीशरीरत्यागेन पवित्रपातिव्रत्यधर्मस्य अद्भुतमुदाहरण प्रस्तुतं वर्तते । (ग) पार्वतीखण्डे ५५ अध्यायेषु पर्वतराजस्य हिमालयस्य भार्याया मेनाया द्वितीये जन्मनि पार्वतीनाम्ना प्रसिद्धायास्तस्या पूर्वपति भगवन्त शिव पतिरूपेण पुन प्राप्तु घोरतपश्चर्यानुष्ठानसमये कामदहनं, परीक्षायै समागतेन जटिलब्रह्मचारिवेषेण शिवेन सह भगवत्या पार्वत्या सवादोऽत्यन्तं रुचिकरो विद्यते । यस्य शब्दतोऽर्थतश्च कुमारसम्भवे महाकाव्ये स्पष्टतर. प्रभाव परिलक्ष्यते । तयोस्तुलनया प्रतीयते यत् कविकुलकलाधरेण महाकविना कालिदासेन तस्यैवाधारेण स्वकीय महाकाव्य कुमारसम्भव विरचितम् । यथा—

त्व स्त्रीरत्न तव पिता राजा निखिलभूभृताम् ।
तथाविध पति कस्मादुग्रेण तपसेहसे ॥ शि पु २७।२०

दिव यदि प्रार्थयसे वृथा श्रम पितु प्रदेशास्तव देवभूमय ।
अथोपयन्तारमल समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥ कु स ५।४५

वरेषु ये गुणा प्रोक्ता नारीणा सुखदायका ।
तन्मध्ये हि विरूपाक्षे एकोऽपि न गुण स्मृत ॥ शि पु २७।३२
वपुर्विरूपाक्षमलक्ष्यजन्मता, दिगम्बरत्वेन निवेदित वसु ।
वरेषु यद् बालमृगाक्षि मृग्यते, तदस्ति कि व्यस्तमपि त्रिलोचने ॥ कु स ५।७२

वारणीय. प्रयत्नेन सख्यय हि द्विजाधमः ।
पुनर्वक्तुमनाश्चैव शिवनिन्दा करिष्यति ॥
न केवल भवेत् पाप निन्दा कर्तु शिवस्य च ।
यो वै शृणोति तन्निन्दा पापभाक् स भवेदिह ॥ शि० पु० २८।३६-३७

निवार्यतामालि किमप्ययं वटु पुनर्विवक्षु स्फुरितोत्तराधर ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि य स पापभाक ॥ कु सं. ५।८३

अद्यप्रभृति ते दासस्तपोभि क्रीत एव ते ।
क्रीतोऽस्मि तव सौन्दर्यात् क्षणमेक युगायते ॥
सर्व श्रमो विनष्टोऽभूत् मन्यास्तु मुनिसत्त ।
फले जाते श्रम पूर्वो जन्तोर्नाशमवाप्नुयात् ॥ शि० पु० २८।४३

अद्यप्रभृत्यवनताङ्गि तवास्मि दास क्रीतस्तपोभिरिति वादिनि चन्द्रमौली ।
अह्नाय सा नियमज क्लममुत्ससर्ज क्लेश फलेन हि पुनर्नवता विधत्ते ॥कु.५।८६

तत शिवपार्वत्योर्विवाहविधिवर्णनानन्तर वधूवरयोर्यात्राप्रसङ्गे मेनाया. पार्वतत्यै शिक्षणमिषेण पातिव्रत्यधर्मस्योपदेश , लौकिकरीत्या सर्वं विवाहकृत्य निर्वर्त्य शिवाशिवयो कैलासगमनमित्यादि वर्णितमस्ति । (घ) कुमारखण्डे २० अध्यायेषु कार्तिकेस्य जन्म तारकासुरेण सह युद्धवर्णनम् । गणेशोत्पत्ति तस्य काये गजमुखयोजनं पूजाप्राथम्यनिरूपणं तद्विवाहादिक च वर्णितमस्ति । (ङ) युद्धखण्डे ५९ अध्यायेषु त्रिपुर-जालन्धरादीना देवै साक युद्ध प्रदर्शनादिक च वर्तते ।

(३) तृतीयाया शतरुद्रसहितायाम् ४२ अध्यायेषु शिवस्याष्टमूर्तिवर्णनं पुत्रकामस्य शिलादेर्मुनेर्नन्दीश्वरपुत्रप्राप्तये तपश्चर्यावर्णनानन्तर-मुक्तमस्ति यत्—

शिव स्वल्पेन कालेन सप्रसीदति भक्तित ।
सुप्रसन्नो महेशो हि भक्तेभ्य सकलप्रद ॥
भुक्तिमुक्तिमिहामुत्र यच्छतीति सुनिश्चितम् ।
तस्मात् सेव्य सदा शम्भु भुक्ति-मुक्तिफलेप्सुभि ॥ ३७।५७-५८

ततो महर्षेर्व्यासस्योपदेशेन इन्द्रकीलपर्वते तपस्यतेऽर्जुनाय पाशुपतास्त्र-प्रदानप्रसङ्गे किरातवेष विधायोपस्थितेन शिवेन सहार्जुनस्य युद्धञ्चाति-मनोहर चित्रितमस्ति । मन्ये, तदाशयमेव गृहीत्वा महाकविना भार-विणापि स्वमहाकाव्य किरातार्जुनीय निर्मितम् । अत्रापि शब्दतोऽर्थतश्च साम्यमाश्चर्यकर विद्यते । (४) चतुर्थ्या कोटिरुद्रसहिताया ४३ अध्यायैः द्वादशज्योतिर्लिङ्गाना काशीस्थाना च नामानुकीर्तनपूर्वक माहात्म्यवर्णनम्, अनसूयात्रितपोवर्णनं महत्महत्त्वाधायकमस्ति । (५) पञ्चम्यामुमासहितायां ५१ अध्यायेषु पुत्रार्थ भगवत. श्रीकृष्णस्य तपश्चर्या, नरकपातालवर्णनम्, स्वायम्भुवादिमनुवंशवर्णनं देवीचरितप्रसङ्गे सुरथ-वैश्ययोश्चरित्रचित्रणञ्चो त्कृष्ट स्वाभाविकचास्ति । (६) षष्ठ्या कैलाससहितायाम् १६-१७ अध्यायोः प्रथमोङ्कारस्वरूपमन्त्रदीक्षाग्रहण - विरजाहोमादीना विस्तृत वर्णन-

मस्ति। ततः प्रत्यभिज्ञादर्शनस्य सिद्धान्तानां विस्तृतं विवेचनं विद्यते। तथा वसुगुप्तद्वारा प्राप्तस्य शिवसूत्रस्य तत्सम्बद्धभास्करप्रणीतवार्त्तिकानां च निर्देशो दृश्यते। शिवसूत्रं हि प्रत्यभिज्ञादर्शनस्यादिग्रन्थोऽस्ति, तत्र भास्करेणाभिनवगुप्तप्रधानशिष्यस्य क्षेमराजस्य शिवसूत्रवृत्तिमाधारीकृत्य शिवसूत्रवार्त्तिकस्य प्रणयनं कृतम्। शिवसूत्रस्योपलब्धिसम्बन्धे काश्मीरीयशैवाचार्याणां परम्परायामेव प्रसिद्धिरस्ति यद् भगवता शिवेन स्वप्ने प्रदत्तादेशानुसारं वसुगुप्तेन महादेवगिरिशिखरप्रस्तरेऽङ्कितेषु त्रिषून्मेषेषु विभक्तानि ७७ सूत्राणि प्राप्तानि। तत्प्रस्तरमद्यत्वेऽपि शङ्करोपलनाम्ना प्रसिद्धतरं विद्यते। **'चैतन्यमात्मा'** शिवसूत्रस्य प्रथमं सूत्रमस्ति, द्वितीयञ्च सूत्रं **'ज्ञानं बन्धः'** इति विद्यते। अनयोर्द्वयोः सूत्रयोर्निर्देशः, तथा तत्र निर्मितयोर्वार्त्तिकयोरप्युल्लेखः, शिवपुराणे एवमुपलभ्यते—

> चैतन्यमात्मेति मुने शिवसूत्रं प्रवर्तितम्।
> चैतन्यमिति विश्वस्य सर्वज्ञानक्रियात्मकम्॥
> स्वातन्त्र्यं तत्स्वभावो यः स आत्मा परिकीर्तितः।
> इत्यादिशिवसूत्राणां वार्त्तिकं कथितं मया॥
> ज्ञानं बन्ध इतीदं तु द्वितीयं सूत्रमीशितुः॥ १६।४४-४६

(७) एवं सप्तम्यां वायवीयसंहितायां शैवतन्त्रसम्बद्धायां उपासनापद्धतेर्विशदं विवेचनं विद्यते। शैवागमसिद्धान्तानां निरूपणं शैवतान्त्रिकाणां मनसो विनोदाय परमं साधनमुपयोगि च वर्तते।

एवं शिवपुराणे तान्त्रिकतायाः पूर्णः प्रभावो लक्ष्यते। शिवस्य प्रतियुगं शिवावतारवर्णनम्, शैवावरणपूजायाः क्रमः, पञ्चाक्षरमन्त्रजपविधिः, सपरिकरशिवलिङ्गप्रतिष्ठाविधानम्, शैवागमोक्तायाः पूजापद्धतेश्च विवेचनं सम्यगस्ति। ऋषिभ्यः शैवं ज्ञानं दत्त्वा शिवसन्निधिगमनादिवर्णनं शिवभक्तानां महानुल्लासकरो विद्यते। शिवपुराणस्याश्रयः सर्वेषां प्राणिनां महानुपकारी शिवभक्तिसाधकः सकलतापवारकश्चेतिसिद्धान्तितम्—

> शैवं पुराणमिदमात्मविदां वरिष्ठं सेव्यं सदा परमवस्तु सतां समर्च्यम्।
> तापत्रयाभिशमनं सुखदं सदैव प्राणप्रियं विधिहरीशमुखामराणाम्॥९।५०

**शिवपुराणस्य समयः**

भास्करप्रणीतशिवसूत्रवार्त्तिकयोरुद्धरणात्, अल्बेरुणिना सङ्केतितायां पुराणसूच्यां शिवपुराणस्य नामनिर्देशात्, तान्त्रिकयुगस्य प्रभावाच्च शिवपुराणस्य समयो दशमशताब्दीति निर्णयो न्यायसंगतः प्रतिभाति।

## वायुपुराणस्य स्वरूपनिर्णयः

मत्स्यपुराणानुसार श्वेतकल्पप्रसङ्गे वायुना यस्मिन् पुराणे धर्मकथाया रुद्रमाहात्म्यस्य च वर्णनं विहितमस्ति, तदेवास्ति वायुपुराणम्, यस्य श्लोकसख्या चतुर्विंशतिसहस्रात्मिका विद्यते—

श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
यत्र तद् वायवीय स्याद् रुद्रमाहात्म्यसंयुतम् ॥
चतुर्विंशतिसाहस्र पुराण तदिहोच्यते ॥ ५३।१८

नारदीयपुराणे वायुपुराणस्यैवमुल्लेखो विद्यते यद् यत्र पुराणे श्वेतकल्पप्रसङ्गतो भगवत शिवस्य महिम्न प्रकाशकाश्चतुर्विंशतिसहस्रश्लोकाः सन्ति, तदस्ति वायुपुराणम्, यस्य श्रवणमात्रेण शिवलोक प्राप्यते । तत्र हि भागद्वयमेव विद्यते—पूर्वभाग उत्तरभागश्च—

शृणु विप्र प्रवक्ष्यामि पुराण वायवीयकम् ।
यस्मिन् श्रुते भवेद्धाम रुद्रस्य परमात्मन ॥
चतुर्विंशतिसाहस्र तत् पुराण प्रकीर्तितम् ।
श्वेतकल्पप्रसङ्गेन धर्मानत्राह मारुत ॥
तद्वायवीयमुदितं भागद्वयसमाचितम् । ९५।१-२३

रेवामाहात्म्ये वायुपुराणस्यैव परिचयः प्रदत्तोऽस्ति तच् चतुर्थं पुराणं वायुपुराण विद्यते, यत्र शिवमाहात्म्यप्रदर्शकाश्चतुर्विंशतिसहस्राणि श्लोकाः सन्ति । अस्य पूर्वभागे पराशरमुनिपुत्रेण महर्षिणा व्यासेन भगवत सदाशिवस्य महिमा वर्णितोऽस्ति । उत्तरभागे च नर्मदाया नद्या विशेषतो महत्त्व प्रदर्शित विद्यते—

पुराण यन्मयोक्त हि चतुर्थं वायुसंज्ञितम् ।
चतुर्विंशतिसाहस्र शिवमाहात्म्यसयुतम् ॥
महिमान शिवस्याह पूर्वे पाराशर पुरा ।
उत्तरार्द्धे तु रेवाया माहात्म्यमतुल मुने ॥ २७।२-३

किन्तु स्वय वायुपुराणे प्रोक्तमस्ति यच् चतुर्थ महापुराण लोककल्याणार्थं वायुप्रोक्तत्वाद् वायुपुराणनाम्ना प्रसिद्धमस्ति । इद हि चतुर्षु पादेषु विभक्तमस्ति—(१) प्रक्रियापादः, (२) अनुषङ्गपादः, (३) उपोद्घातपाद, (४) उपसहारपादश्च—

प्रक्रिया प्रथम पादः कथावस्तुपरिग्रहः ।
अनुषङ्ग उपोद्घात उपसहार एव च ॥

एवमेव चतुष्पाद पुराण लोकविश्रुतम् ।
उवाच भगवान् साक्षाद् वायुर्लोकहिते रत ॥ १०३।४४-४५

एषा चतुर्णा पादाना तुलना चतुर्भिर्वेदैश्च सह कृताऽस्ति । एषु चतुर्षु पादेषु श्लोकसख्या हि द्वादशसहस्रपरिमिता वर्तते--

एव द्वादशसाहस्र पुराण कवयो विदु ।
यथा वेदश्चतुष्पादश्चतुष्पाद यथा युगम् ॥ ३२।६६

**वर्ण्यविषयाः**

आरम्भेऽनुक्रमणिकावर्णनानन्तरम् ऋषीणा पुराणविषयकः प्रश्नः, पुराणकथानुक्रम , द्वादशवार्षिकसत्रनिरूपणम्, ससख्याकपुराणगणना, व्याससशयापनोदनम्, प्रजापतिसृष्टिप्रक्रियाया ब्रह्माण्डस्योत्पत्तिप्रलययं। विवेचन युक्तियुक्तेन प्रकारेण कृत विद्यते । तत्र तर्कस्य कल्पनायाश्च प्रचुरः प्रश्रयो दत्तो विद्यते । वाराहोत्पत्ति-पृथिवीसन्निवेश-आश्रमविभाग-मन्वन्तरप्रसङ्ग-योगनिरूपण-शौचाचाराणा च प्रदर्शनानि दर्शनीयानि सन्ति । २१-२२ अध्याययो· कल्पनिरूपण तथा २४ अध्याये विष्णुना कृतं शिवस्तवन महत्त्वपूर्णमस्ति । ३० अध्याये सतीशरीरत्यागप्रसङ्गे दक्षप्रजापतिद्वारा कृता शिवस्तुति साहित्यिकदृष्ट्या अत्यन्त स्पृहणीयास्ति । पुराणमिद भौगोलिकज्ञानायात्यन्तमुपयोगि सिध्यति । ३४-५० अध्यायेषु सरित्-समुद्र-लोक-द्वीप-वन-पर्वत-नद-नदीप्रभृतीना समीक्षात्मकं वर्णनमुपलभ्यते । ६०-६१ अध्याययोर्वेदशाखाविवरण धार्मिकदृष्ट्यानुशीलनयोग्य विद्यते । ६२-६९ अध्यायेषु कश्यपवंश-ऋषिवशयोर्विवरणमैतिहासिकदृष्ट्या महत्त्वपूर्ण वर्तते । ८६-८७ अध्याययो सगीतशास्त्रस्य स्वररागमूर्च्छना-तालालङ्कारादीना सामान्यपरिचय· सगीतप्रियाणा कृतेऽत्यन्तं मनोहरो विद्यते । ८८-९९ अध्यायेषु प्राचीन-भविष्यद्राजवशादीनां प्रामाणिकम् इतिहासप्रदर्शनम् ऐतिहासिकदृष्ट्या महत्त्वाधायक वर्तते ।

तत्र चन्द्रवंशानुकीर्तनप्रसङ्गे· राज्ञो दीर्घतपसो गुहे धन्वन्तरेरवतारजिज्ञासया मुनिभिः पृष्टः सूत· काशिराजवशपरम्परामेव प्रोक्तवानस्ति ·—

तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा ।
काशिराजो महाराज सर्वरोगप्रणाशनः ॥
आयुर्वेदं भरद्वाजश्चकार सभिषक्क्रियाम् ।
तमष्टधा पुनर्व्यस्य शिष्येभ्य प्रत्यपादयत् ॥

धन्वन्तरिसुतश्चापि केतुमानिति विश्रुत ।
अथ केतुमतः पुत्रो विभो भीमरथो नृप. ॥
दिवोदास इति ख्यातो वाराणस्यधिपोऽभवत् । ९२।२९-२३

तत्रैवाग्रे काश्या अविमुक्तेतिनामकरणकारणं प्रख्यापयता भगवता शिवेन एवम्विध सम्बोधिता भगवती पार्वती देवी—

नाह वेश्म विमोक्ष्यामि अविमुक्त हि मे गृहम् ।
प्रहस्यैनामथोवाच गिरिजामात्मवल्लभाम् ॥
नाह देवि गमिष्यामि गच्छस्वेह वसाम्यहम् ।
तस्मात्तदविमुक्त हि प्रोक्त देवेन वै स्वयम् ॥ ९२।५७-५९

१०० अध्याये मन्वन्तर-प्रलययोर्निरूपण दर्शनीयतर विद्यते १०३ अध्याये सृष्टिवर्णन पुराणगुरुपरम्परावर्णनञ्चास्ते । १०४ अध्याये परमानदसन्दोहस्यानदविग्रहस्य लीलाविलासरसिकस्य गोलोकनिवासिनो राधासवलितस्य भगवत श्रीकृष्णस्य महत्त्व प्रदर्शित वर्तते । १०५-११२ अध्यायेषु गयातीर्थ-श्राद्धादीना माहात्म्यस्य सविस्तर वर्णनमस्ति । यो हि श्राद्धशीलाना मानवाना परमोपयोगी वर्तते । तत्र मुक्तेश्चातुर्विध्य प्रतिपादितम्—

ब्रह्मज्ञान गयाश्राद्ध गोगृहे मरण तथा ।
वास पुसा कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥

वायुपुराणे ईश्वरस्वरूप - पृथिवीसन्निवेश - शौचाचार - मन्वन्तर-कल्पभेद-विविधसर्ग-प्रतिसर्ग-भुवनविन्यास-राजर्षि-महर्षि-देवर्षिवशनिरूपण-तीर्थ-व्रत-पितृयान-गुरुभक्ति-भूगोल-खगोल-भक्ति-ज्ञान-वैराग-पितर श्राद्धादीना साङ्गोपाङ्ग वर्णन विद्यते । तथा समस्तानामुपयोगिना विषयाणा लोकग्राहिण्या अभिनवदृष्ट्या सम्यग् विवेचन विद्यते ।

अस्य पुराणस्य सर्वतो वैशिष्ट्यमिदमास्ते यद् भगवतो भूतभावनस्य भवानीपतेः शिवस्य पवित्र चरित्र चारु चर्चितमस्ति । अथापि पुराणमिद साम्प्रदायिकदृष्ट्या दूषित न वतते । अत्र विष्णोरपि रुचिर चरित्रं वर्णितमस्ति, तदवतारस्य च साटोप विवरणमुपस्थापित विद्यते । एव शैव पुराण सदपि वायुपुराण विष्णुमाहात्म्य वर्णयित्वा आत्मनः पक्षपातहीनतायाः परिचय ददाति । तथा च पुराणेषु वायुपुराणस्यैतिहासिकदृष्ट्या सामाजिकदृष्ट्या, धार्मिकदृष्ट्या भौगोलिकदृष्ट्या चैक विशिष्ठ स्थानमस्तीति, नास्ति काचित् सशीतिः ।

**वायुपुराणे विकासवाद·**

भारतीयसस्कृतिविकासविषये वायुपुराणमप्याधुनिका नरा इव स्वकीय तर्कसगत मतमुपस्थापयति। वायुपुराणानुसारं मनुष्या प्रथम वनवासिन आसन्, तदनन्तरं तैर्ग्रामीण नागरिक च जीवनमारब्धम्। सर्वप्रथम ते पशुवत् शीतोष्णसहनशीला आसन्, किन्तु कालान्तरे तेषा बुद्धेर्विकासो जात। तदनु ते शीतोष्णाभ्यामात्मनो रक्षितुमुपाय विचिन्त्य शनै शनै स्वाङ्गाच्छादनाय शरीररक्षायै च वस्त्राणामाविष्कार कृतवन्त। पूर्व ते गृह निर्मातु न जानन्ति स्म। गृहहीना सन्तो वृक्षाणामधस्तले गिरिगुहासु च निवसन्त. स्वेच्छया आहार विहार च कुर्वन्त समय यापयन्ति स्म। ततो गृहिण. सदाचारप्रियाश्च जाता। प्रथमं ते लघुगृह पर्वतेषु नदनदीतटेषु निर्मातुमारब्धवन्त., यत्र तेषा प्राकृतिकी सुखसामग्री समुपलब्धा आसीत्। पश्चात्ते शनै शनैर्ग्राम-खर्वट-पुर-नगरादिनिर्माण समर्था अभूवन्।

**वायुपुराणपरम्परा**

समस्तपापापहारक पुण्यप्रद यशोदायक वायुपुराण सर्वप्रथम लोकपितामहेन ब्रह्मणा मातरिश्वने उपदिष्टम्, तेनेन्द्राय समुपदिष्टम्, तेन वसिष्ठाय प्रदत्तम्, तेन सारस्वताय, तेन त्रिधाम्ने, तेन शारद्वताय तेन च त्रिविष्टपाय समुपदिष्टम्। सोऽन्तरिक्षाय दत्तवान्, स च वर्पिणे, तेन त्रय्यारुणाय दत्तम्। ततो धनञ्जयेन लब्धम्, तत कृतञ्जयेन प्राप्तम्। ततो भरद्वाजो लब्धवान्, ततो गोतम, ततो निर्यन्ता, ततो वाजश्रवा, ततः सोमसुष्मा, ततस्तृणबिन्दु, ततो लब्धवान् दक्ष·, तत शक्ति, तत· पराशर श्रुतवान्, ततो जातुकर्ण·, तत कृष्णद्वैपायन·, तत्तो लोमहर्षणि. सूत प्राप्तवान्। स च नैमिषारण्ये शौनकादिभ्य ऋषिभ्यः प्रोक्तवान्, तदनन्तरमेतत् पुराण परम्परयाऽद्यत्वेऽस्माक श्रुतिपथ पथिकायते।

**कालनिर्णयः**

श्राद्ध हि हिन्दुधर्मस्यास्त्यैकमनिवार्यमङ्गम्। अतो मत्स्यपुराणवद् वायुपुराणेऽपि धर्मशास्त्रीयविषयाणा वाहुल्य विद्यते। काणेमहोदयस्य कथनानुसारं कल्पतरुकारेण वायुपुराणस्य श्राद्धसम्बन्धिन· १६०, मोक्षविषयका. २२, तीर्थमहत्त्वाधायका· ७, ब्रह्मचर्यपोषका ५, गृहस्थोपयोगिनश्च ५ श्लोका समुद्धृता सन्ति। एव वायुपुराणतोऽपरार्केण ७५, स्मृतिचन्द्रिकाकारेण च २५ पद्यानि श्राद्धप्रतिपादकानि गृहीतानि। अपि

च वायुपुराणे भविष्यद्राजवंशनिरूपणप्रसङ्गे गुप्तसाम्राज्यस्यारम्भिकसीमोल्लेखा वर्तते—

> अनुगङ्गं प्रयागं च साकेतं मागधं तथा।
> एतान् जानपदान् सर्वान् भोक्ष्यन्ते गुप्तवंशजाः ॥ ९९।३८३

वायुपुराणं हि भारतीयजीवनस्य संस्कृतेश्च मूलाधारोऽस्ति। अस्य शैली अपि प्राचीनतायाः साक्ष्यं प्रददाति। अन्यपुराणवदत्र भावुकतायाः प्राधान्यं नास्ति, अपि त्वत्र तर्कस्य प्रचुरं प्राधान्यं विद्यते। अस्य पुराणस्य वर्णनशैल्या वेदकालतो बौद्धकालपर्यन्तं भारतीयराजनीतिकस्योत्कर्षस्य गौरवपूर्णं उल्लासो निहितोऽस्ति। अत्र राजवंशवर्णनप्रसङ्गे शौनकायनेन स्वसमकालीनस्य राज्ञोऽधिसामकृष्णस्योल्लेखः कृतोऽस्ति, यो हि परीक्षितपुत्रस्य जनमेजयस्य पौत्र आसीत्—

> अधिसामकृष्णो धर्मात्मा साम्प्रतोऽयं महायशाः।
> यस्मिन् प्रशासति महीं युष्माभिरिदमाहृतम् ॥ ९९।२५८

अस्य राज्ञः समयो महाभारतयुद्धात् परं स्वीक्रियते। एतदनुसारं वायुपुराणस्य कालो महाभारतानन्तरं शतद्वयवर्षात् परमङ्गीकर्तुं युक्तं प्रतिभाति। महाकविबाणभट्टेन स्वकीये हर्षचरिते कादम्बर्यां च वायुपुराणस्य चर्चा कृतास्ति। अतो विवेकदृष्ट्या विचारे क्रियमाणे ३५०-५५० मध्ये चतुर्थशताब्द्या वायुपुराणस्य रचनाकालनिर्णयः संगतः प्रतीयते।

**समीक्षा**

वायुपुराणस्य रचना प्राचीनास्ति, शैली च समीचीना विद्यते। अस्मिन् पुराणपञ्चलक्षणानां सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितानां विवरणं स्पष्टं प्रतीयते। अत्र ११२ अध्यायाः सन्ति। तत्र प्रक्रियापादे १-६, उपोद्घातपादे ७-६४, अनुषङ्गपादे ६५-९९, उपसंहारपादे च १००-११२ अध्याया विद्यन्ते, किन्तु अन्तरङ्गपरीक्षया प्रतीयते यदत्र १०३ अध्याय एवास्त्यन्तिमोऽध्यायः, यतोऽत्रान्तिमे भागे वायुपुराणस्यावतरणं पुराणगुरुपरम्परा च प्रामाणिकरूपेण निबद्धास्ति। ततः फलश्रुतेरुल्लेखं विधायोपसंहारः कृतोऽस्ति। तदनन्तरं गयामाहात्म्यद्योतका अध्यायाः सन्ति। अतः प्रतीयते यत् १०४-११२ अध्यायाः केनचिद् वैष्णवलेखकेन वैष्णवमतपुष्ट्यर्थं तत्र योजिताः सन्ति। १०४ अध्याये कोटिकन्दर्पदर्पदलनेप्रवीणस्य सकलकामकलापूर्णस्य राधाविलासरसिकस्य गोलोकवासिनो

भगवत. श्रीकृष्णस्य सरस वर्णनं विद्यते, तथा १०५-११२ अध्यायेषु विस्तरशो गयातीर्थस्य माहात्म्य श्राद्धसम्बन्धिनो विषयाश्च वर्णिताः सन्ति। अस्य पुराणस्य प्रथमाध्यायस्थाया पुराणानुक्रमणिकाया गयामाहात्म्यानुल्लेख, अन्ते नवानामध्यायाना वैष्णवमतसम्पुष्ट्यर्थ केनचित् वैष्णवेन विचारकेण कृत प्रक्षिप्तत्व द्योतयति। गयाप्रशसा यथा—

ब्रह्मज्ञानेन कि कार्य गोगृहे मरणेन किम्।
किं कुरुक्षेत्रवासेन यदि पुत्रो गया व्रजेत्॥
गया यास्यति य पुत्रः स नस्त्राता भविस्यति।
गयाप्राप्त सुत दृष्ट्वा पितॄणामुत्सवो भवेत्॥ १०५।८९

### वायुपुराणस्य महत्त्वम्

वायुपुराणस्य महत्त्वविषये लिखितमस्ति यत् प्रचीनकालेऽस्य महती प्रतिष्ठासोदत एवैतत् पुराण प्रोच्यते। य एनत्पुराणनिरुक्तितात्पर्य वेत्ति, स समस्तपापेभ्यो विमुक्तो भवति, यश्चैद श्रेष्ठतर पुराण श्रुत्वा धर्मे प्रवर्तते स स्वशरीरस्थरौमकूपसमसख्याककोटिवर्षाणि स्वर्गे आनन्दमनुभवति। पुराणमिद यशोदायक सर्वप वहर पुण्यप्रद चास्ति—

यस्मात् पुरा ह्यनतीद पुराण तेन चोच्यते।
निरुक्तमस्य यो वेद सर्वपापै प्रमुच्यते॥

### उभयोः महापुराणत्वसमीक्षा

चतुर्थमहापुराणस्य निर्णयार्थं विभिन्नेषु पुराणेषु प्रदत्ते लक्षणे विषयानुक्रमणिकायाञ्च ध्याने दीयमाने प्रतीयते यद् नारदीयपुराणानुसारं चतुर्थे पुराणे रुद्रमहिमप्रतिपादकाः चतुर्विंशतिसहस्रश्लोकाः श्वेतकल्पप्रसगेन वायुना प्रोक्ता. सन्ति। पुराणस्यास्यास्ति भागद्वयम्—पूर्वभागः उत्तरभागश्च। तत्रादौ सर्गानामुल्लेख., गयासुरवधप्रसग, व्रत-दान-राजधर्म-पृथिव्याकाश-पातालादीना च विद्यते विवरणम्। तथोत्तरभागे विशेषतया नर्मदानद्या वर्णनं भगवत शिवस्य चौत्कृष्टय्य वर्णितमास्ते।

रेवामाहात्म्यानुसार चतुर्थे महापुराणे शिवस्य महत्त्वप्रतिपादकाश्च तुर्विंशतिसहस्रश्लोका एव तस्य पूर्वभागे भगवत· सदाशिवस्य महिमा प्रदर्शितो विद्यते। तदुत्तरभागे च नर्मदानद्या माहात्म्यमुपदिष्टं वर्तते। मत्स्यपुराणानुसार तदस्ति चतुर्थ पुराणम्, यत्र वायुना श्वेतकल्पप्रसंगतश्चतुर्विंशतिसहस्रश्लोकद्वारा भगवत शिवस्य महत्त्व प्रदर्शितमस्ति।

अत्रेद समीक्षणीय विद्यते यदिमानि चतुर्थपुराणलक्षणानि कस्मिन् पुराणे सघटन्ते, वायुपुराणे उत शिवपुराणे ? वस्तुतो लक्षणानामेषा शिवपुराणे समन्वयो न सम्भवति, यतो हि वायुद्वारा केवल तदन्तिमाया: सप्तम्या वायवीयसहिताया एव प्रवचन जातमस्ति, न तु सम्पूर्णस्य शिवपुराणस्य वायुप्रोक्तत्व विद्यते। अपि च शिवपुराणे वायवीयसहिताया पूर्वार्द्धोत्तरार्द्धभागद्वयस्य विद्यमानत्वेऽपि तस्य श्लोकसख्या केवल चतु सहस्रात्मिकैवास्ते। किञ्च, पूर्वार्द्धे न गयामुरवधस्य प्रसगोऽस्ति, न वोत्तरार्द्धे नर्मदानद्या माहात्म्य सकेतितमति। सम्पूर्णे शिवपुराणे श्लोकास्तु चतुर्विंशतिसहस्राणि सन्ति, किन्तु तत्र केवल पूर्वोत्तरभागद्वय-मेव नास्ति, अपि तु तत्र सन्ति सप्त सहिता, तत्राप्यनेकान्यवान्तरखण्डा-निवर्तन्ते। एव स्थितौ शिवपुराण चतुर्थं महापुराणमिति वक्तु न युक्तम्, यतो हि पूर्वोक्ताना चतुर्थपुराणस्य वशिष्ट्याना तत्रास्ति सर्वथाऽभाव। यद्यपि वायुपुराणस्य वक्ता वायुदेवोऽस्ति, तत्र शिवस्य महिमा विशदतया च वर्णितो विद्यते, तथाप्यद्यत्वे तत्र भागद्वय नास्ति, किन्तु तत्र सन्ति चत्वार पादा, परन्तु प्राचीनेषु हस्तलेखेषु भागद्वय-मेवोपलभ्यते। ३५९९ सङ्ख्याकस्य अड्यारलायब्रेरी-पूनात उपलब्धस्य वायुपुराणस्य पुष्पिकाया लिखितमस्ति—"इति श्रीमहापुराणे वायुप्रोक्ते द्वादशसाहस्र्या सहिताया ब्रह्माण्डावर्त समाप्तम्। समाप्तञ्च वायुपुराण-पूर्वार्द्धम्। अत पर रेवामाहात्म्य भविष्यति।"

डॉ० पुसालकरमहोदयस्य कथनानुसारम् ३५९९ सङ्ख्याके आग्ल-हस्तलेखे वायुपुराणान्तर्गताया कस्याश्चिद् लक्ष्मीसहिताया अप्युल्लेखो विद्यते। सम्भवत एव वायुपुराणसम्बद्धा अन्या अपि सहिता स्यु, या साम्प्रत वायुपुराणत पृथग्भूता जाता। अतोऽद्यत्वे वायुपुराणस्य श्लोकेषु न्यूनता समागता। नारदीयपुराणानुसार गयामाहात्म्य हि पूर्वभागे उप-लब्धुमुचितमासीत्, परमिदानीमुत्तरभागस्यान्तिमे भागे तदुपलभ्यते। इत्थ वायुपुराणेऽपि चतुर्थमहापुराणस्य सर्वाणि लक्षणानि न सर्वथा सङ्गतानि भवन्ति, किन्त्वधिकाशस्य सङ्गतिस्तु जायत एव। अपि च शिवपुराणमर्वाचीन साम्प्रदायिकसिद्धान्तै परिचितमस्ति। तथा तत्र तन्त्रस्य पूर्ण. प्रभावो लक्ष्यते, शैवागमसिद्धान्तसनाथञ्च दृश्यते, किन्तु वायुपुराण तान्त्रिकप्रभावरहितम्, सम्प्रदायसङ्कीर्णतावर्जितम्, साम्प्रतिकप्रभावातिरिक्त प्राचीनञ्च प्रतीयते। श्रीस्वामिवर्यशङ्कराचार्यात्

पूर्ववर्तिना षष्ठशताब्द्या वर्तमानेन गद्यमहाकाव्यप्रणेत्रा महाकविना बाण-भट्टेन स्वकीयकादम्बर्या जाबालेराश्रमवर्णनप्रसङ्गे 'पुराणेषु वायुप्रलपितम्' इत्युक्त्वा वायुपुराणस्य सत्ता तु स्वीक्रियत एव। महाभारतस्य वनपर्वणि ऋषिभि सस्तुतस्य वायुपुरास्य स्पष्टमुल्लेखो विद्यते, यत्र भूत-भविष्य-चरिताना चर्चा कृतास्ति—

एतत्ते सर्वमाख्यातमतीतानागत मया।
वायुप्रोक्तमनुसृत्य पुराणमृषिसत्तम ॥ १९१।१६

अस्मिन् पद्येऽतीतानागतयो॰ पदयो तात्पर्य तै राजवशै. सहास्ते, ये कले पूर्वमासन्, भविष्ये च भविष्यन्ति। वायुपुराणे राजवशावली विस्तृतरूपेण विद्यते, किन्तु शिवपुराणेऽस्या निर्देशो नास्ति। एव वायुपुराणे सर्ग-प्रतिसर्ग-वश-मन्वन्तर-वशानुचरिताना वर्णनद्वारा पुराणपञ्च-लक्षणस्य समन्वयस्तु स्पष्टतया जायते, किन्तु शिवपुराणे केवल सर्गमात्र-स्यैवास्ति चर्चा। वायुपुराणे स्थले स्थले राज्ञाम्, ऋषीणाम्, राजवशा-वल्या वशानुचरितस्य च स्पष्टतर उल्लेखो विद्यते। शिवपुराणे शिवसम्ब-न्धिनीना कथाना चरित्र-पूजापद्धति-दीक्षानुष्ठानतपश्चर्यादीना विशाल वर्णन विद्यते। शैवतन्त्रे शैवदर्शनसिद्धान्तविवरणे च तान्त्रिकप्रभावस्य पर्याप्तमात्रा विद्यते। अत॰ शिवपुराणस्येद स्वरूप वायुपुराणस्वरूपत: सर्वथास्ति भिन्नम्। अतो द्वे अपि पुराणे स्त इत्यत्र न कश्चनास्ति सदेह॰। एवमुभयो पुराणयो सम्यक् समीक्षायामिदमेव निश्चेतु शक्यते यत् शिवपुराणापेक्षया वायुपुराण प्राचीनम्, अधिक संयत पुराणलक्षणलक्षितं च विद्यते। अतो वायुपुराण चतुर्थं महापुराण शिवपुराणञ्चोपपुराणमि-त्यङ्गीकरण न्यायसङ्गतम्, तर्कप्रतिष्ठितम्, युक्तियुक्त शास्त्रसम्मतञ्च प्रतीयते। वस्तुत विष्णुब्रह्मणोर्नाम्ना पुराणयोः सत्वात् शिवनाम्नापि शिवपुराण भवितुमर्हतीमे द्वे अपि पुराणे कल्पभेदाद् महापुराणे स्तः। यतो हि प्रतिद्वापर पुराणाना विभागो जायते। कस्मिश्चिद् द्वापरे शिवपुराण महापुराणमभिमतमस्ति, कस्मिञ्चिद् द्वापरे वायुपुराण मेव महापुराण मन्यते। अतः श्रीमद्भागवतदेवीभागवतयोरिवेतयोरपि महापुराणत्व मतान्तरेणाङ्गीकार्यमिति सुधीभिर्विभावनीयम्।

## ५ श्रीमद्भागवतम् (क)

श्रीमद्भागवतं हि नारदीयपुराणानुसारं पञ्चमं पुराणमस्ति, किन्तु देवीभागवतोक्तरीत्येदं तृतीयं पुराणं भवितुमर्हति, पर स्वय श्रीमद्भागवत-

मात्मानमष्टादशं पुराण मनुते। सप्तदशपुराणप्रणयनानन्तर मनसोऽसन्तोषान्नारदस्योपदेशेनास्य प्रणीतत्त्वात्। परीच्छिच्छुकसम्वादात्मकेऽस्मिन् पुराणेऽष्टादशसहस्रश्लोका द्वादश स्कन्धाश्च सन्ति। तत्र प्रथमे स्कन्धे १९ द्वीतीये १० तृतीये ३३ चतुर्थे ३१ पञ्चमे २६ षष्ठे १९ सप्तमे १५ अष्ठमे २४ नवमे २४ दशमे ९० एकादशे ३१ द्वादशे च १३ सङ्कलनया ३३५ अध्याया वर्तन्ते। तथाहि पद्मपुराणे श्रीमद्भागवतमाहात्म्यप्रसगे—

श्रीमद्भागवताभिध सुरतरुस्ताराङ्कुर मज्जनि।
स्कन्धै र्द्वादशभिस्तत प्रविलसद् भक्तचालवालोदय॥
द्वात्रिशत्त्रिशत च यस्य विलसच्छाखा सहस्राण्यला।
पर्वाण्यष्टदशेष्टदोऽतिमुलभो वरिवर्ति सर्वोपरि॥ १९८।५१॥

अत्र केचित् द्वात्रिशस्त्रिशतमित्यस्य ३३२ इत्यर्थ कुर्वन्ति, तन्न सङ्गतम्, यतोहि श्रीमद्भागवते ३३५ एवाध्याया सन्ति। अतोऽस्य मर्मज्ञो विद्वान् प० वशीधर स्वकीयवशीधर्या द्वात्रिशत्त्रिशतमित्यस्य पदस्य समासमेव कृतवानस्ति-द्वाभ्यामधिका त्रिशत् द्वात्रिशत्। शत च शत च शतं च शतानि द्वात्रिशच्च त्रयश्च शतानि चेति समाहारे द्वन्द्वे द्वात्रिशत् त्रिशतम्। द्वात्रिशदिति पदे मध्यमपदलोपी तत्पुरुपसमास.। शतशब्दस्यैकशेपे शतानि, इति जायते। ततो द्वात्रिशच्च त्रयश्च शतानि चेति समाहारद्वन्द्वे बहुप्रकृतिरेव द्वन्द्व एकवदिति नियमादेकवचनं स नपुसकमितिपुस्त्वे द्वात्रिंशदितिपद निष्पद्यते। अतोऽस्यार्थो भवति ३३५ इति।

अत्र पुराणेऽशान्तहृदयस्य शान्तये भगवद्रुचिरचरित्रश्रवणादधिकः कश्चनोपायो न विद्यते। अत· सर्वसाधारणस्य पुस· कल्याणार्थं भगवत्लीलाश्रवणकीर्तनमत्यावश्यकमुक्तमस्ति। इदमेव समस्ताना तप-शास्त्र यज्ञदान-ज्ञानादीना मुख्य फलमुक्तमस्ति।

इद हि पुस तपस श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः।
अविच्युतोऽर्थ. कविभि निरूपितोयदुत्तमश्लोकगुणानुवर्णनम्॥ १।५।२२

अत्रादितोऽन्तपर्यन्त प्राधान्येन भगवत श्रीकृष्णस्य रुचिर चरित्रचित्राण वर्तते। समेषा कर्मोपासनाज्ञानाना प्रतिपाद्यो भगवान् श्रीकृष्ण एवास्ति। अतः पुराणमिदं कल्पवृक्ष इव समेषा सकलमनोरथपूरकं महापुराणं प्रोच्यते विपश्चिद्भिः।

यथा नदीषु लोकपावनी गङ्गा, देवतासु भगवान् श्रीकृष्णः, वैष्णवेषु भगवान् शङ्कर श्रेष्ठो वर्तते तथैव पुराणेषु श्रीमद्भागतमेव श्रेष्ठतरमस्ति। भ क्त ज्ञान-वैराग्यपरिपूर्णस्यास्य पुराणस्य रसास्वादने तृप्तस्य पुसोऽन्यत्र क्वचिदनुराग एव न भवति। एव लीलापुरुषोत्तमस्य भगवत श्रीकृष्णस्य पवित्रेण रुचिरेण चरित्रेण मधुरया लीलया च सनाथ श्रीमद्भागवत चतुर्वर्गफलप्रद महापुराण विद्यते। यो मानव पुराणमेतत् स्वय श्रद्धया शृणोति, अन्याश्च श्रावयति, तदन्त करण परम पवित्र जायते। एतस्य पाठेन ब्राह्मणो निर्मलबुद्धिर्जायते, क्षत्रियो भूमिपतित्व लभते, वैश्यो धनपतिर्भवति, शूद्रश्च सर्वविधपातकाद्विमुच्यते। श्रीमद्भागवते सर्व-वेदान्तसारो निहितोऽस्ति। अत्र भक्तिसहितस्य निर्मलज्ञानस्य वैराग्यस्य च पदे पदे प्रतिपादन विद्यते। अतो भक्तिपूर्वकमस्य श्रवणेन चिन्तनेन नूनमेव भगवति भक्ति सभवति। इद हि सर्वेषु पुराणेषु मूर्धन्य पुराणमस्ति, यतो हीदं साक्षाद्भगवत श्रीकृष्णस्य विग्रहरूपमस्ति। तथाहि—

पदादिजानुपर्यन्त प्रथम स्कन्ध ईरित।
तदूर्ध्व कटिपर्यन्त द्वितीय स्कन्ध उच्यते॥
तृतीयो नाभिरित्युक्त श्चतुर्थ उदर स्मृतम्।
पञ्चमो हृदय प्रोक्तं षष्ठ कण्ठ सबाहुकम्॥
सर्वलक्षणसयुक्तं सप्तमो मुखमुच्यते।
अष्टमश्चक्षुषी विष्णोः कपोलो भृकुटिपर॥
दशमो ब्रह्मरन्ध्रश्च मन एकादश स्मृत।
आत्मा तु द्वादशस्कन्ध श्रीकृष्णस्य प्रकीर्तित॥ कौ सं॰ २५।८

भगवद्विग्रहवत्वादेव श्रीमद्भागवतस्य महिम्नो वर्णनवप्रसङ्गे पद्मपुराणे प्रोक्तमस्ति यत् सद्गति वाच्छता पुसा प्रतिदिनं श्रीमद्भागवतस्य श्लोकं श्लोकार्द्ध मेकपाद वाऽवश्य पठनीयम्।

येन स्वजीवने एकबारमपि श्रीमद्भगवत न श्रुतं तेन चाण्डालवद् गदर्भववच्च स्वजीवनं व्यर्थं कृत्वा निजजन्मना मातुर्दुःखदायकत्वाद् भारतभूःकलङ्किता—

आजन्ममात्रमपि येन शठेन किञ्चिच्चित्तं विधाय शुकशास्त्रकथा न पीता।
चाण्डालवच्च खखवद् वततेन नीतं मिथ्या स्वजन्मजननीजनदुःखनाजा॥ ३।४२

श्रीमद्भागवत हि धार्मिकाध्यात्मिकवाङ्मये एक समुज्ज्वल ग्रन्थरत्नमस्ति। इदं भक्ति-ज्ञान-वैराग्यानामानन्ददायिनी पवित्रतमा त्रिवेणी निगद्यते। भारतीयानामास्तिकजनाना हृदयेषु, न केवल सर्वश्रेष्ठपुरणरूपेण, प्रत्युत श्रीभगवद्विग्रहरूपेणास्मिन्नास्था विद्यते। सर्वैं वैष्णवाचार्यैरत्र स्वस्वमतपुष्ट्यर्थ सारगर्भिता वैदुष्यपूर्णा व्याख्या विहिता, निवन्धा लिखिता, वोपदेवप्रभृतिभिश्च मनीषिभिरस्य रसामृतास्वादनाय रसिकाना हृदयानि चाप्लावयितुमनेका· सरसा कृतयः कृता।

ब्रह्मादिसप्तदशमहापुराण-महाभारत ब्रह्मसूत्रप्रणयनानन्तरमपि महर्षिणा वेदव्यासेन यदा स्वमनसि सन्तोषो न लब्ध तदा, देवर्षेर्नारदस्योपदेशेन भगवद्गुणवर्णनप्रधान भक्तिप्रकर्षोत्पादक श्रीमद्भागवत निर्माय परमा शान्तिरवाप्ता। श्रीमद्भागवत हि भगवतो मधुरमर्याभि र्लीलाभिरुचिरैश्चारित्रैश्चोतप्रोत महापुराणमस्ति। अतः सर्वेषा ज्ञानिना कर्मिणा मुमुक्षूणा विषयिणा च भक्ताना परमप्रियस्य अस्य पुराणस्य त्रिविधतापपापदु खदारिद्रयादिनिवृतये सर्वाभीष्टप्राप्तये च पारायणस्य परम्परा चिरकालात् समस्ते भारते प्रचलन्ती दृश्यते।

श्रीमद्भागवते हि सर्वमतसमन्वयात् शैव-शाक्त-वैष्णवादीना समानेवास्था विद्यते। सरसभगवद्भक्तिरसाप्लुतत्वादस्योपादेयता सर्वप्रसिद्धास्ति एतद्वारा अशान्त मन· सुस्थिर कृत्वा चतुर्विधाना पुरुषार्थाना धमार्थकाममोक्षाणा प्राप्तावग्रेसरो भूत्वा मानवो लौकिक पारलौकिक चाभीष्टमुपलभ्य मानवजीवन सफल कर्तु शक्नुयात्। पारिवारिक जीवन धार्मिक शान्त सफल सुखि च विधातु श्रीमद्भागवतमत्यन्तमुपादेयमुपकरि च वर्तते। अत एवोक्त वैयासकिना शुकेन श्रीमद्भागवते—

> अकाम सर्वकामो वा मोक्षकाम उदारधी।
> तीव्रेण भक्तियोगेन यजेत पुरुषं परम्॥२।३।१०

श्रीमद्भागवते भक्तेः साङ्गोपाङ्ग विवेचनमस्ति। सरलेनोपायेन संसारसागरमुत्तर्तुं भगवद्भक्तिरेवैक साधनमस्ति। विविधदु खदु.खितस्य पुसो भगवल्लीलाकथाश्रवणमेव श्रेयस्करं विद्यते—

> संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्य· प्लवो भगवत पुरुषोत्तमस्य।
> लीलाकथारसनिषेवणमन्तरेण पु सो भवेद्विविध दु खदवार्दितस्य॥१२।४।४०

अत्र भक्तिलक्षणस्य परमधर्मस्य निरूपण विद्यते, येन भगवत: श्रीकृष्णस्य ज्ञानमतिसरलतया जायते। इद श्रीमद्भागवतं वेदरूपिण: कल्पवृक्षस्य परमानन्दप्रद रसमय मधुर फलमस्ति, यद् जीवाना कल्याणाय अमलात्मनस्तत्त्वज्ञानिन परमपरमहसस्य श्रीमत श्रीशुकदेव-मुनेर्मुखाम्भोजान्निर्गत्य पृथिव्यामागत वर्तते।

अत्र प्रथमे स्कन्धे मुख्यतया सूतशौनकसवादप्रसङ्गे व्यास-नारद-प्रश्नोत्तरम्, पाण्डवचरित्रम्, शृगिमुनिद्वारा राज्ञे परीक्षिते शाप:, शुकदेवमुनेरागमनं कथारम्भश्च। द्वितीये सद्योमुक्ति-मार्गवर्णनम्, ब्रह्म-नारदसम्वादे चतु श्लोकी भागवतस्योपदेश पुराणलक्षणनिर्देशश्चास्ति। तृतीये विदुरोद्धवसवाद, विदुरमैत्रेयवार्तालाप, पुराणसम्बन्धिप्रश्नो-त्तरम्, प्रलये भगवत्स्थिति, प्राकृत-वैकृतसर्गनिरूपणम्, ब्रह्माण्डोत्पत्ति:, कालगति, विष्णोर्नाभिकमलाद् ब्रह्मण प्रादुर्भाव, वाराहावतारद्वारा पृथिव्या उद्धार, हिरणाक्षबध:, मनुशतरूपोत्पत्ति, कर्दम देवहूतिविवाह, कपिलावतार कपिलद्वारा देवहूत्यै साख्ययोगभक्त्युपदेशो वर्णितोऽस्ति। चतुर्थे सतीचरित्रम्, दक्षयज्ञविध्वस, ध्रुव-वेन-पृथुचरित्रम्, प्राचीन वर्हिष: सवादे पुरञ्जनोपाख्यानवर्णन विद्यते। पञ्चमे वैवस्वतमनुवशप्रसङ्गे प्रियव्रतोपाख्यानम्, नाभि-ऋषभदेवकथा-भरत-रहूगणसवादे भवाटवा-वर्णनम्, भूगोल-खगोल नरकादीना च वर्णन वर्तते। षष्ठे अजामिलो-पाख्यानम्, दक्षद्वारा सृष्टिवर्णनम्, वृत्रासुरवध, चित्रकेतूपाख्यानम्, मरु-तामुत्पत्तिपुसवनव्रतवर्णनमस्ति। सप्तमे नारदयुधिष्ठिरसम्वादद्वारा प्रह्लादचरित्र - वर्णाश्रम-धर्मनिरूपणम्, नारदपूर्वजन्मनो वर्णनं च वर्तते। अष्टमे चतुर्दशमन्वन्तरवर्णनम्, गजेन्द्रमोक्ष:, समुद्रमन्थनम्, कलिवामनयो: चरित्रम्, मत्स्यावतारकथा च वर्णितास्ति। नवमे सोम-सूर्यवशवर्णनम्, सुद्युम्नचरितम्, शशादीना चरित्रवर्णनम् सुकन्याचरितम्, अम्बरीषो-पाख्यानम्, इक्ष्वाकुवशवर्णनम्, ककुत्थ खट्वाग-मान्धातृ-सौभरि-त्रिशङ्कु-हरिश्चन्द्र-सगर-भगीरथ-रामादीना चरित्रचित्रणम्, निमिवशस्य वर्णनम्, परशुरामचरित्रम्, चन्द्रवशे नहुष-ययाति-यदुवशवर्णम् विद्यते। दशमे श्रीकृष्णादिजन्मतच्चरित्रचित्रणे पूतनादिवध:, कालीयदमनम्, चीर-हरणम्, गोवर्द्धनोद्धारणम् इन्द्रदर्पदलनम्, रासलीला, अक्रूरद्वारा कृष्ण-वलरामयो: मथुरानयनम्, कंसादिबध:, जरासन्धयुद्धम्, कालयवनवध:, द्वारकानिर्माणम् रुक्मिणीहरणम्, श्यमन्तकोपाख्यानम्, वाणासुरयुद्धम्, भौमासुरवध:, शिशुपालवध: सुदाम्न चरित्रम्, वेदस्तुतिवर्णन च विद्यते।

एकादशे यदुकुलशाप, यदुकुलक्षय, निमि-नवयोगीश्वप्रश्नोत्तरे भागवतधर्मनिरूपण श्रीकृष्णोद्धवसवादे आध्यात्मविद्याया वर्णनम्, सशरीरं भगवत श्रीकृष्णस्य स्वधामगमनवर्णनं वर्तते। द्वादशे च स्कन्धे कलियुगीयाना राज्ञा वशवर्णनम्, युगधर्मविवेचनम्, कल्क्यवतार, प्रलयवर्णनम्, परीक्षिन्मोक्ष, वेदशाखाविभाजनम्, मार्कण्डेयमुनिचरितम्, सूर्यव्यूह - पुराण सख्यावर्णन च विद्यते। एव हि श्रीकृष्णचरित्रेणोतप्रोतः श्रीमद्भागवतमहापुराणस्य वर्ण्यविषयो विद्यते।

विश्वस्मिन् जीवाना श्रेयसो मुख्य साधन भगवति श्रीकृष्णे निश्चला भक्तिरेवास्ति। भगवति दृढया भक्त्या ज्ञान-वैराग्ययोरुदयो जायते। धर्मानुष्ठाने कृतेऽपि यदि भगवत कथाया रुचिर्नोत्पद्यते तर्हि केवल श्रम एव ज्ञेय। धर्मो हि मोक्षाय क्रियते, नत्वर्थोपार्जनाय। अर्थोऽपि धर्मोपार्जनायव भवति, न विषयसुखाय, विषयोऽपि शरीरनिर्वाहार्थमेव सेव्यते, नत्विन्द्रियतृप्त्यै। ससार जीवस्य प्रयोजनमिदमेवास्ति, यत् यत् तत्त्व जिज्ञासत तत्तत्व च भगवान् श्रीकृष्ण एवास्ति। अतो निश्चलेन भावेन तस्यैव श्रवण कीर्तन ध्यान पूजनं च कर्तव्यम्—

तस्मादेकेन मनसा भगवान् सात्वता पति।
श्रोतव्य. कीर्तितव्यश्च ध्येय पूज्यश्च नित्यदा॥ १।२।१४

वेद-यज्ञ-जप-तप प्रभृतयाऽस्यैव प्रतिपादन कुर्वन्ति, यतो हि इमे सर्वे भगवत्प्राप्तेरेवोपायाः सन्ति। एतदनुभूय पूर्वमपि महर्षिभिर्यज्ञ-जपादि-द्वाराऽस्यैवाराधनं कुर्वन्तिस्म। अतोऽस्माभिरपि एतस्यैवाराधना विधेया। यदा मानवो भगवदाराधने दृढानिष्ठा कुर्वन्ति तदा भगवान् तद्धृदये प्रविश्य दुर्वासना नाशयति, तदा निर्मल चित्तं प्रसीदति, परमा च शान्ति जायते। भगवदाश्रितान् शारीरिका मानसिका दैविका मानुषा भौतिका वा क्लेशा न बाधन्ते। तथचोक्तवान् विदुर प्रति भगवान् मैत्रेयः—

शारीरा मानुषा दिव्या वैहासे ये च मानुषा।
भौतिकाश्च कथं क्लेशा बाधन्ते हरिसश्रयम्॥ श्री. भा. ३।२२।३७

श्रीमद्भागवतकथाश्रवणप्रसङ्गे कौषितकीसहिताया प्रोक्तमस्ति यदतिदुर्लभ मानवशरीर प्राप्यापि येन श्रीमद्भागवत न श्रुतम्, पुराण-पुरुषस्य भगवतः समाराधना न कृता, ब्राह्मणाना मुखेषु अज्याहुतिर्न प्रक्षिप्ता, तस्य जन्म व्यर्थमस्ति, स पृथिव्यै भारभूतो वर्तते—

यैर्न श्रुत भागवत पुराण नाराधितो यै. पुरुष पुराण.।
हुत मुखे नैव धरामराणा तेषा वृथा जन्म गत नराणाम्॥

पद्मपुराणे श्रीमद्भागवतसप्ताहश्रवणस्याद्भुतो महिमा गीतोऽस्ति। श्रद्धया सप्ताहश्रवणेन पापराशयो भस्मसाद्भवन्ति, योग-जप-तपः-समाधि-जफल प्राप्यते महापातकान्यपि पलायन्ते। कलियुगे श्रीमद्भागवतस्य सप्ताहश्रवण सर्वश्रेष्ठो धर्मो विद्यते। सप्ताहश्रवणेन सर्वे मनोरथा पूर्णा भवन्ति शरीरत्यागानन्तर सप्ताहश्रोता श्रीकृष्णेन भगवता सह सायुज्यमुक्ति लब्ध्वा जननमरणचक्राद्विमुक्तो जायते। श्रीमद्भागवतस्य भक्त्या सप्ताहश्रवणेन श्रद्धया पारायणेन वा भगवत्प्राप्त्यर्थ शाश्वतशान्तेरुपलम्भादास्तिकजगति सप्ताहश्रवणस्य प्रथा प्रचलिता विद्यते।

एतदीयैकश्लोकस्य श्लोकार्द्धस्य श्लोकपादस्य वा पाठ-श्रवणाभ्या राजसूयाश्वमेधादीना यज्ञाना फलं जायते। सहस्राश्वमेधवाजपेययज्ञफल श्रीमद्भागवतकथाश्रवणजन्यफलस्य षोडशाशफलतुलना कर्तुं न प्रभवति—

अश्वमेधसहस्राणि वाजपेयशतानि च।
शुकशास्त्रकथायाश्च कला नार्हति षोडशीम् ॥ = ३१३०

श्लोकार्द्धं श्लोकपाद वा पठेद् भागवत च य ।
नित्य पुण्यमवाप्नोति राजसूयाश्वमेधयो ॥ = ३१३४

यस्य श्रवणमात्रेण भगवान् विष्णु प्रसन्नतया भक्तस्य हृदय समाश्रयते मुक्तिश्च करतलायते। यावत् श्रीमद्भागवत कर्णगोचरी न भवति तावदेव नर. ससारचक्रे चङ्क्रमते। यस्मिन् गृहे श्रीमद्भागवतस्य कथा प्रवर्तते तद्गृह तीर्थरूप प्रजायते। तत्र निवसता प्राणिना पापानि प्रणश्यन्ति। येन पुसा श्रीमद्भागवतं कदापि न श्रूयते, तस्य जन्म व्यर्थमस्ति। तत्त्वज्ञा जीवन्त त पापकर्माण शवसदृश मन्यन्ते। पृथिव्या भार भूत निजजन्मना जननीदु खदायक च त पापकर्माण जन धिक्—

जीवन् शवो निगदित' स तु पापकर्मा,
येन श्रुत शुककथावचन न किञ्चित्।
धिक् त नर पशुसम भुवि भारभूत-
मेव वदन्ति दिवि देवसमाजमुख्या ॥ = ३।४३

**श्रीमद्भागवतसप्ताहश्रवणक्रमः**

श्रीमद्भागवतस्य सप्ताहश्रवणे नियतस्थले प्रतिदिनं विश्रमो विधेयो येन नूनं कामना पूर्तिर्भवेत्, अन्यथा फले विपर्ययः सभवति। तथा हि—

कौशिकीमहितायाम्—

मत्ताहे पाठनियम शृणु शौनक ? सयतः ।
मनुकदर्म नम्बादपर्यन्त प्रथमेऽहनि ॥ १ ॥

ऋपभाख्यानपर्यन्त द्वितीये दिवसे वदेत् ।
तृतीये दिवसे कुर्यात् सप्तमस्कन्धपूरणम् ॥ २ ॥

कृष्णाविर्भावपर्यन्त चतुर्थेऽहनि वाचयेत् ॥
रुक्मिण्युद्वाहपर्यन्त पञ्चमेऽह्नि वदेत् सुधी ॥ ३ ॥

श्रीहसाख्यानपर्यन्त षष्ठेऽह्नि वाचयेद् ध्रुवम् ।
सप्तमे दिवमे कुर्याच्छ्रीभागवतपूरणम् ॥ ४ ॥

| | | |
|---|---|---|
| ( १ ) | प्रथमेऽहनि प्रथमस्कन्धत तृतीयस्कन्धे २२ अध्यायपर्यन्तम् | ५१ अध्यायाः |
| ( २ ) | द्वितीयेऽहनि तृतीयस्कन्धस्य २३ अध्यायत. पञ्चमस्कन्धे ६ अध्यायपर्यन्तम् | ४८ ,, |
| ( ३ ) | तृतीयेऽहनि पञ्चमस्कन्धस्य ७ अध्यायत. सप्तमस्कन्धे १५ अध्यायपर्यन्तम् | ५४ ,, |
| ( ४ ) | चतुर्थेऽहनि अष्टमस्कन्ध्यस्य प्रथमाध्यायतो दशमस्कन्धस्य ३ अध्यायपर्यन्तम् | ५१ ,, |
| ( ५ ) | पञ्चमेऽहनि दशमस्कन्धस्य ४ अध्यायतो दशमस्कन्धस्य ५४ अध्यायपर्यन्तम् | ५१ ,, |
| ( ६ ) | पञ्चमेऽहनि दशमस्कन्धस्य ५५ अध्ययतः एकादशस्कन्धे १३ अध्यायपर्यन्तम् | ४९ ,, |
| ( ७ ) | सप्तमेऽहनि एकादशस्कन्धस्य १४ अध्यायतो द्वादशस्कन्धसमाप्तिपर्यन्त प्रवचनं कार्यम् । | ३१ ,, |
| | | सङ्कलनया ३३५ अध्यायाः |

मतान्तरेण च

प्रथमे हिरण्याक्षवधो द्वितीये भरतावधि ।
तृतीये क्षीरमथनं चतुर्थे कृष्णजन्मनि ॥
पञ्चमे रुक्मिण्युद्वाह षष्ठे चोद्धववादत ।
सप्तमेऽह्नि समाप्तिः स्यात् सप्ताह मुनयोऽब्रुवन् ॥

अपिच–मनुकर्दमसंवादपर्यन्तं प्रथमेऽह्नि ।
भारताख्यानपर्यन्त द्वितीयेऽह्नि वाचयेत् ॥
तृतीये दिवसे कुर्यात् सप्तमस्कन्धपूरणम् ।
कृष्णाविर्भावपर्यन्त चतुर्थे दिवसे वदेत् ॥
रुक्मिण्युद्वाहपर्यन्त पञ्चमेऽह्नि शस्यते ।
श्रीहंसाख्यानपर्यन्त षष्ठेऽह्नि वदेत् सुधी ॥
सप्तमे तु दिने कुर्यात् पूर्ति भागवतस्य वै ।

| दिनम् | अवधि | स्कन्धाध्यायौ | योगः |
|---|---|---|---|
| १. | मनुकर्दमसंवादपर्यन्तम् | १ १९, २·१०, ३ १–१९ | = ४८ |
| २ | भरतचरितपर्यन्तम् | ३·२०–३३, ४ १–३१, ५,१–७ | = ५२ |
| ३ | सप्तमस्कन्धसमाप्तिपर्यन्तम् | ५ ८–२६, ६·१–१९, ७ १–१५ | = ५३ |
| ४. | श्रीकृष्णजन्मपर्यन्तम् | ८·१–२४, ९·१–२४, १० १–३ | = ५१ |
| ५ | रुक्मिणिविवाहपर्यन्तम् | १० ४–५४ | = ५१ |
| ६ | हसाख्यानपर्यन्तम् | १०·५५–९०, ११ १–७ | = ४३ |
| ७. | अवशिष्टात् समाप्ति यावत् | ११ ८–३९, १२·१–१३ | = ३७ |
| | | | ३३५ |

देवीभागवतं मपि श्रीमद्भागवतवत् १८००० श्लोकै· द्वादशस्कन्धेषु विभक्त पुराणवाङ्मये मुक्ति-भुक्तिप्रदायक पञ्चम पुराण प्रोच्यते—

महर्षिव्यासोऽस्याप्यस्ति वक्ता, श्रोता च जनमेजयः । अय जनमेजयः स एवास्ति, यस्य जनक महाराज-राजान परीक्षित शुकदेवमुनि श्रीमद्भागवतसप्ताह गङ्गाद्वारे हरिद्वारे मुनिसमाजे श्रावयामास।

देवीभागवतस्यानुशीलनेन ज्ञायते यद् देवी एव परम तत्त्वमस्ति, या निर्गुणा, नित्या, सर्वव्यापिका, कल्याणमयी, योगगम्या, जाग्रत्स्वप्नसुषुप्तिभ्यः पराया तुरीयावस्थाया विराजते । तस्याः तिस्र. सात्त्विकी-राजसी तामसी चेति शक्तयः, क्रमशः लक्ष्मी-सरस्वती-कालीरूपेण प्रकटीभवन्ति । तत्र रचनायै रजोगुणशक्ते, पालनाय सत्त्वगुणशक्ते·, सहाराय च तमोगुणशक्तेरावश्यकता भवति । अनयैव दृष्ट्या सरस्वत्या ब्रह्मणा सह, लक्ष्म्या विष्णुना साकं, काल्याश्च शिवेन सार्द्ध सम्बन्धो भवति । अनयैव च दृष्ट्या पुराणेषु ब्रह्मविष्णुमहेश्वरा त्रिमूर्तिरूपेण वर्णिता सन्ति ।

परमतत्त्वमीमांसादृष्ट्या सर्वाणि पुराणानि एकस्यैव परमतत्त्वस्य प्रतिपादन कुर्वन्ति, नाम रूपसविशेष-निर्विशेषादीनां भेदे सत्यपि तत्त्वतः

परम तत्त्वमेकमेव भवितुमर्हति। समेषा धर्मग्रन्थाना परम तात्पर्यमेक-स्मिन्नेव परमे तत्त्वे विद्यते। तच्च तत्त्व देवीभागवतानुसार देवी-तत्त्वमेवास्ति, सविशेषात् पर निर्विशेपचर्चापूर्वकमुक्तमस्ति यत्

निर्गुणा दुर्गमा शक्तिः निर्गुणश्च पर पुमान्।
ज्ञानगम्यौ मुनीना तु भावनीयौ पुन पुन ॥
अनादिनिधनौ विद्धि सदा प्रकृति-पुरुषौ।

अस्येद तात्पर्यं विद्यते यत् परमशक्तिर्निगुणास्ति तथा परम पुरुषोऽपि अस्ति निर्गुण:। एनयोर्द्वयोर्नाम रूप च भिन्न भिन्न वर्तते, पर तत्त्वत: या शक्ति स एव परमात्मा, यश्च परमात्मा सैव शक्तिरस्ति, न तयोरस्ति भेद:—

या शक्ति परमात्माऽसौ योऽसौ सा परमा मता।
अन्तर नैनयो कोऽपि सूक्ष्मं वेद च नारद। = ३।७।१५

एव च या शक्ति सैव शक्तिमान् परमात्मास्ति तथा यश्च परमात्मा विद्यते, सैव शक्तिर्विद्यते। अनयोर्द्वयो. तत्त्वत कश्चन भेदो नास्ति। तथाचोक्त देव्या स्वयमेव ब्रह्माण प्रति—

सदैकत्व न भेदोऽस्ति सर्वदैव ममास्य च।
योऽसौ साऽहमह योऽसौ भेदोऽस्ति मतिविभ्रमात् ॥
आवयोरन्तर सूक्ष्म यो वेद मतिमान् हि स।
विमुक्त स तु ससारान् मुच्यते नात्र सशय ॥ = ३।६।२.३

वस्तुत शक्ति शक्तिमाश्च द्वावपि एकमेव तत्त्वमस्ति। शक्तिसमा-राधनदृष्ट्या देवीभागवतस्य प्रतिपादन जातमस्ति। शक्ते साधनैव शक्तिमतो लक्षणं विद्यते। जगति साधनैवाराधनरूपेणाभिव्यक्ती भवति। विभिन्न निर्दर्शनद्वारा सर्वाणि साधनरूपाणि देवीभागवते वर्णितानि सन्ति।

अधिदैविकधरातले भगवत्याश्चरित्रस्य विश्लेपणे क्रियमाणे पञ्च प्रसङ्गा उपतिष्ठन्ते—(१) मधुकैटभवध (२) महिषासुरवध (३) चण्ड-मुण्डवध· (४) धूम्रलोचनवध (५) शुम्भनिशुम्भवधश्च। ऐतिहासिकदृष्ट्या प्रसङ्गाश्चैते देवासुरसग्रामत सम्बद्धा वर्तन्ते।

मधुकैटभवधो देवीभागवतस्य प्रथमे स्कन्दे वर्णितोऽस्ति। अवशिष्टा-श्चत्वार· प्रसङ्गा. पञ्चमे स्कन्धे उपलभ्यन्ते। मार्कण्डेयपुराणेऽपि दुर्गा-सप्तशतीभागे एते सर्वे प्रसङ्गा. समागता. सन्ति। तत्र मधुकैटभवधो प्रथमे चरित्रे, महिषासुरवधो मध्यमे, शुम्भनिशुम्भवधश्चोत्तमे चरित्रे विद्यते।

मधुकैटभौ आहारविहारयो प्रतीकौ स्त, महिषासुरो मोहस्य प्रतीक:, शुम्भनिशुम्भौ चाहङ्कारविषयसुखयो प्रतीकौ, धूम्रलोचन आलस्यस्य, चण्डमुण्डो रागद्वेषयो:, रक्तबीजश्च वासनाया प्रतीको विद्यते। एषा वधेनैव जीवनशक्ते साधना सफला भवितुमर्हति, नान्यथा।

देवी सच्चिदानन्दमयी मूर्तिर्विद्यते। मधुकैटभवधे सत्ताया, महिषासुरवधे चिन्मयताया, शुभनिशुभवधे चानन्दमयताया अभिव्यक्तिर्जायते। देव्या माध्यमेन एतत्तत्त्वनिष्ठाग्रहणे लक्ष्यस्य पूर्ति सम्भवति। देवी भागवते स्थाने स्थाने देव्या विविधरूपाणा तदाराधनायाश्च वर्णन विद्यते। इद वर्णन मूलप्रकृतेरारभ्य मणिद्वीपस्य देवीभुवनेश्वरीपर्यन्तमुपतिष्ठते। मणिद्वीपस्था पराम्बा भुवनेश्वरी देवी एव देवीभागवतस्य परमलक्ष्याभिमता विद्यते। देव्या विविधेषु रूपेषु पञ्चाना दुर्गा-राधा-लक्ष्मी-सरस्वती-सावित्रीणा प्राधान्य नवमस्कन्धे निरूपितमस्ति—

गणेशजननी दुर्गा राधा लक्ष्मी सरस्वती।
सावित्री च सृष्टिविधौ प्रकृति पञ्चधा स्मृता॥

एतासु सर्वशक्तिस्वरूपा दुर्गा, सर्वसम्पत्स्वरूपा लक्ष्मी:, सर्वविधस्वरूपा सरस्वती, शुद्धसत्त्वस्वरूपा सावित्री तथा परमानन्दरूपा राधा, एता पञ्चापि परिपूर्णतमा सन्ति। आस्वपि राधा मूलस्थानीया, परमाह्लादरूपा, सन्तोषस्वरूपा, हर्षरूपिणी, निर्गुणा निराकारा निर्लिप्ता आनन्दमयी चास्ति—

परमाह्लादरूपा च सन्तोषहर्षरूपिणी।
निर्गुणा च निराधारा निर्लिप्ताऽऽत्मस्वरूपिणी॥

एव विश्वस्मिन् परिदृश्यमानशक्तिस्वरूपेषु देव्या एव विस्तारोऽस्ति। कया शक्तया शक्तिमत: कस्मिन् रूपेऽभिव्यक्ति जायते इत्यादिरहस्ये परिज्ञाते साधकस्य शक्तिसाधनमार्ग प्रशस्तो जायते। देवीभागवतेऽनयैव-दृष्ट्या शाक्त विविधरूपाणामुपासनाया प्रतिपादनं विद्यते।

श्रीमद्भागवत-देवीभागवतयो समालोचनात्मकेनानुशीलनेनोभयो: साम्य विद्यते। उभयत्र बहव श्लोका समाना अवलोक्यन्ते येनानुमीयते यदेकमपरस्य पूरक विद्यते। शक्तिप्राधान्याद्देवीभागवस्य तथा शाक्तमत: प्राधान्याच्छ्रीमद्भागवतस्य निर्माण जातम्। ससारेऽस्मिन् मातृत्वजातविषये या विशेषता दृश्यते, तस्या ईश्वरीयनिर्देश: समस्ताया: सृष्टेरादिकारणादेवास्ति। सर्व दृश्यमान प्रपञ्चमनादिनिधनाया महामायाया

विलासमात्रमस्ति । अत सर्वत्र सर्वशास्त्रैरस्या प्रशस्तिः गीयते । ब्रह्म-स्वरूपा नित्या शक्तिः चिच्छक्तिद्वारा ब्रह्म-विष्णु-महेश्वरान् प्रेरयति । तथा अभिन्ननिमित्तोपादनरूपेण सृष्टेर्विस्तार च कुरुते । शक्तिमता सहा-भेदरूपेण निगमागमेपु प्रतिपाद्या इयमेव सनातनी शक्ति .—

सर्वचैतन्यरूपा तामाद्या विद्याञ्च धीमहि ।
बुद्धि या न प्रचोयात् · · · । = १।१।१

इति मङ्गलाचरणे त्रिपदाया गायत्र्या प्रतिपादिताऽस्ति । अस्य नित्य-तत्त्वस्य साक्षात्कार एव परम पुरुषार्थो विद्यते । तथाऽस्यैव विधान भग-वत्या परमे पवित्रे चरित्रे सविस्तार प्रतिपादितमस्ति । अस्यैव तत्त्वस्य सर्वात्मनाऽस्य पुराणस्य प्रतिपाद्यत्वाद् द्वादशेष्वपि स्कन्धेपु पूर्णतया तदेव तत्त्व वर्णितमस्ति । विशेपरूपेण द्वादशे स्कन्धे गायत्र्या महत्त्वपूर्ण वर्णन विद्यते । सर्वाधिष्ठात्री आद्या शक्तिर्हि सर्वाभीष्टफलप्रदात्री अपि विद्यते —

ये स्तुवन्ति जगन्मातर्भवतीमम्बिकेति च ॥
जगन्मयेति मायेति सर्व तेपा प्रसिद्ध्यति ॥

अत एव देवीभक्ता. स्वाभीष्टसिद्धये श्रीमद्भागवतसप्ताहवद् देवी-भागतस्य नवाह्पारायण कुर्वन्ति । तस्य च क्रम एवमस्ति—

| | | |
|---|---|---|
| प्रथमदिने—आदितस्तृतीयस्कन्धस्य १३ अध्यायपर्यन्तम् | ३५ | अध्यायाः |
| द्वितीयदिने—चतुर्थस्कन्धस्याष्टमाध्यायपर्यन्तम् | ३५ | ,, |
| तृतीयदिने—पञ्चमस्कन्धस्याष्टादशाध्यायं यावत् | ३५ | ,, |
| चतुर्थदिने—षष्टस्कन्धस्याष्टादशाध्याय यावत् | ३५ | ,, |
| पञ्चमदिने-सप्तमस्कन्धस्याष्टादशाध्याय यावत् | ३१ | ,, |
| षष्ठदिने—अष्टमस्कन्धस्य सप्तदशाध्याय यावत् | ३९ | ,, |
| सप्तमदिने—नवमस्कन्धस्याष्टाविंशत्यध्याय यावत् | ३५ | ,, |
| अष्टमदिने—दशमस्कन्धस्य त्रयोदशाध्याय यावत् | ३५ | ,, |
| नवमदिने—द्वादशस्कन्धस्यान्तपर्यन्तम् | ३८ | ,, |
| | सङ्कलनया ३१८ | ,, |

देवीभागवतं पुराणममल यद् ब्राह्मणाना धन,
धर्मो धमसुतेन यत्र गदितो नारायणेनामल ।
गायत्र्याश्च रहस्यमत्र च मणिद्वीपश्च संवर्णित ,
श्री देव्या हिमभूभृते भगवती गीता च गीता स्वयम् । = १२५।९७

एतच्छ्रवणफलमितिकर्तव्यतानिर्देशो यथा—

अष्टादशपुराणाना मध्ये सर्वोत्तम परम् ।
देवीभागवत नाम धर्म-कामार्थमोक्षदम् ॥ = १।२३

ये श्रृण्वन्ति सदा भक्त्या देव्या भागवती कथाम् ।
तेषा सिद्धिर्न दूरस्था तस्मात् सेव्या सदा नृभि ॥ = १।२४

आश्विने मधुमासे वा तपोमासे शुचौ तथा ।
चतुर्षु नवरात्रेषु विशेषात् फलदायकम् ॥ = १।३१

तथा न गङ्गा न गया न काशी न नैमिष नो मथुरा न पुष्करम् ।
पुनाति सद्यो वदरीवनं नो यथा हि देवीमख एष विप्रा ॥ = १।३६

पठन् द्विजो वेदविदग्रणीर्भवेत् वाहुप्रजातो धरणीपति. स्यात् ।
वैश्य पठन् वित्तसमृद्धिमेति शूद्रोऽपि श्रृण्वन् स्वकुलोत्तम स्यात् ॥ = १।५०

## ६—नारदीयपुराणम्

पुराणेषु नारदीयपुराणस्य षष्ठं स्थानं विद्यते, परं देवीभागवतमिदं त्रयोदश पुराणं मन्यते। मत्स्यपुराणानुसारं यस्मिन् पुराणे देवर्षिणा नारदेन वृहत्कल्पकथाप्रसङ्गे अनेका धर्मकथा कथिता. पञ्चविंशति-सहस्रश्लोकसख्याकं तत् नारदीय पुराणं प्रोच्यते—

तत्राह नारदो धर्मान् वृहत्कल्पाश्रयान् बहून् ।
पञ्चविंशत्सहस्राणि नारदीय तदुच्यते ॥ = ५३।२३

स्वय नारदीयपुराणे नारदीयपुराणस्य लक्षणं कुर्वता प्रोक्तमस्ति यद् व्यासदेवद्वारा वृहत्कल्पकथाश्रय कृत्वा यस्य पुराणस्य निर्माणं जातमस्ति, तदस्ति नारदीयं पुराणम्, यत्र पञ्चविंशतिसहस्राणि श्लोका· सन्ति—

श्रृणु वत्स प्रवक्ष्यामि पुराण नारदीयकम् ।
पञ्चविंशतिसाहस्र वृहत्कल्पकथाश्रयम् ॥ = ९७ । ५

शिवपुराणानुसारं नारदप्रोक्तत्वादिद पुराण नारदीयमुच्यते—

नारदोक्त पुरण तु नारदीय प्रचक्षते ।

नारदीयपुराणोक्तविषयै· सह नारदीयपुराणस्य पूर्णा सगतिरस्ति, परं सप्रति प्रचलिते नारदीयपुराणे केवलं द्वाविंशतिसहस्रश्लोका मिलन्ति त्रिसहस्रश्लोकाना तत्र न्यूनतास्ति । अत पुराणमिदमपूर्णपुराणमुच्यते ।

नारदीयपुराणे खण्डद्वय विद्यते। पूर्वखण्डमुत्तरखण्डञ्च। तत्र पूर्वं खण्डे चत्वार पादा. १२५ अध्यायाश्च सन्ति। उत्तरखण्डेच ८२ अध्याया संकलनया उभयत्र २०७ अध्याया सन्ति। नारदीयं पुराणं वैष्णवं पुराण प्रोच्यते यतोहि अत्र वैष्णवानामनुष्ठानस्य तथा तत्साम्प्रदायिकदीक्षादेर्विस्तृत विधान वर्णितमस्ति। अत्र न केवल वैष्णवागमस्यैव विमर्शोऽस्ति, अपितु पाञ्चरात्रानुष्ठानस्यापि सङ्केतो विद्यते। अत इदं वैष्णवधर्मस्य विशिष्ट पुराणमभिमतमस्ति। अस्य पुराणस्योत्तरभागे वैष्णवसम्प्रदयस्य विशेषस्थान वर्तते, पर पूर्वभागे सम्प्रदायवादस्य स्थान नास्ति। अत्र यथा समेषा पुराणाना विषयानुक्रम प्रदर्शितोऽस्ति, तेन प्रतीयते यदिद पुराण तेभ्य सर्वेभ्य पुराणेभ्य पश्चान्निर्मितमस्ति, अथवा अयमश पश्चात् केनचिद् योजितोऽस्ति। वृहन्नारदीयपुराणनाम्नाप्येकमपरं वैष्णवं पुराणामुपलभ्यते, यदुपपुराणेषु गण्यते। एव लघुनारदीयपुराणस्यापि नाम यत्र तत्रावाप्यते, तन्न महापुराणेषु नापि उपपुराणेषु विद्यते, किन्तु स्वतन्त्रो ग्रन्थोऽस्ति। नारदीयपुराणस्य पूर्वभागे चतुर्णा वर्णाना चतुर्णामाश्रमणा चाचार-विचार-श्राद्ध-कर्म प्रायश्चित्तादीना वर्णन कृतमस्ति। एतदतिरिक्तमेकस्मिन्नध्याये व्याकरण-निरुक्त-छन्द शास्त्राणामपि विचार कृतोऽस्ति। अत्र राम-कृष्ण-शिव-हनुमत्-कालो प्रभृतोना विधिवन्मन्त्रवर्णनमपि कृतमस्ति। पुराणेऽस्मिन् विष्णुभक्तिवदेव मुक्तेरपि परम साधनमुक्तमस्ति तथा विष्णुभक्ता एव मुक्तेः परमसाधका अभिमता सन्ति। उत्तरे भागे च विख्यातस्य भक्तस्य राज्ञो रुक्माङ्गदस्य चोरत्र चारुरूपतया चित्रितमस्ति।

पुराणस्यास्य सर्वतो विशेषतेयमस्ति यद् अत्र अष्टादशानां पुराणाना विषयानुक्रमणिका विशदतयादत्तास्ति, यया सक्षेपत सर्वेषां पुराणाना ज्ञान जायते। अशोऽयमत्यन्तमुपयोगी उपादेयश्च विद्यते। अत्र दत्तया पुराणाना श्लोकवद्धया सक्षिप्तया सूच्या स्पष्टं जायते, यत् तत्तत्पुराणेषु के केऽशाः प्राक्षिप्ता सन्ति, ये पश्चात् सयोजिता सन्ति। अत ऐतिहासिकदृष्ट्या पुराणमिद महन्महत्त्वपूर्णमस्ति। तथास्य विषयानु क्रमणिका प्रत्येपुराणाना विषयज्ञानाय नितान्तमुपयोगिनी विद्यते।

प्रो० विल्सनो नारदीयपुराणं षोडशशताब्द्यां रचितमेकं भक्तिग्रन्थ मनुते, परन्तु एकादशेशताब्द्या गोण्डाधिपेन वल्लालसेनेन स्वकीये दान सागरे नारदीयपुराणस्यानेके श्लोका उद्धृता सन्ति। अपिच नारदीय-

पुराणपर्यालोचनया पुराणस्यास्य भक्तिग्रन्थस्वीकारोऽप्यप्रामाणिकः, यतोहि अस्योत्तरखण्डे वेष्णवानामनुष्ठानसाप्रदायिकदीक्षाविधानदर्शनेनेदं पुराण वैष्णवपुराण प्रतीयते, किन्तु पूर्वभागे वर्णितविशेषतासु दृष्टि-पातेऽय साम्प्रदायिको ग्रन्थो भवितु नार्हति। अल्बेरुणिना आत्मसमये भारतीयविशेषताना यद् वर्णन कृतमस्ति तेनानुमीयते यत् तस्मिन् काले तान्त्रिकी, पौराणिकी, देवप्रतिष्ठा, मन्त्रदीक्षा च प्रचलिताऽसीत्। अत्र कापि कथा नैवभूता उपलभ्यते, यया पुराणमिद परवर्तिकालस्य रचना स्वीकृता स्यात्। अत डा० विल्सनस्य मतमस्ति अप्रामाणिकम्।

प्रो० विल्सनो नारदीयपुराण महापुराण नाङ्गीकरोति, यतो हि तेन केवल तत्र ३००० श्लोका एवोपलब्धा, यत्र पुराणपञ्चलक्षण न सघटते, किन्तु नारदीयपुराणविवरणपाठेन प्रतीयते यत् तेन तदुत्तरभागमात्र-मेवावाप्तमासीत्। अतोऽत्र तेन पुराणपञ्चलक्षण नावाप्तम्। वस्तुतो-मत्स्यनारदीयपुराणानुसार नारदोयपुराणस्य महापुराणत्वस्वोकारे न काप्यनुपपत्तिरस्ति। यतोऽत्र पुराणपञ्चलक्षण निश्चप्रच सघटते।

नारदीयपुराणमग्निपुराण-गरुडपुराणवदेव समस्तविद्याप्रतिपादकं पुराणमङ्गीक्रियते। पुराणमिद दार्शनिकविषयाणा विवरणे महाभारत-स्यास्त्यधमर्णः, यतोहि महाभारते शान्तिपर्वणि १७६-१८५ अध्यायाना श्लोका विषयाश्चास्य पूर्वभागे ४२-४५ अध्यायेपु यथातथमुपलभ्यन्ते।

इद वैष्णवधर्मस्य प्रचारक पुराण विद्यते। अस्योत्तरे भागे एकादशी-व्रतानुष्ठानवर्णन तथा परमवैष्णवस्य राज्ञो रुक्माङ्गदस्य चारु चरित्र वर्तते। तेन स्वराज्ये ८–८० वर्षवयस्कस्य कृते अयमादेशः प्रचारित आसीद् यद् य एकादशीव्रत न करिष्यति स वध्यो दण्डभाक् राज्यतो वहिष्कार्यश्च भविष्यति तथा राजकीय यै सौविध्यै. वञ्चितो भविष्यति—

अष्टवर्षाधिको मर्त्य अशीतिनाह पूर्यते।
यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापकृत्॥
स मे वध्यश्च दण्डचश्च निर्वास्यो विषयाद्वहिः। = २३।४१

नारदीयेपुराणे बौद्धाना महती समालोचना कृताऽस्ति। बौद्धमन्दिरेषु प्रवेशकर्तृणा ब्राह्मणना प्रायश्चिते कृतेऽपि शुद्धिर्न भविष्यति, यतो हि बौद्धा वेदनिन्दकत्वात् पाषण्डिनः प्रोक्ताः सन्ति पूर्वभागे—

बौद्धालय विशेद् यस्तु महापद्यपि वै द्विजः।
न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तशतैरपि॥
बौद्धा पाषण्डिन प्रोक्ता यतो वेद-विनिन्दका। = १५।५०

बौद्धान् प्रति एवमालोचनाभाव सप्तम्या शताब्द्या जागृत आसीत्, यदा धार्मिकवातावरण विशुद्ध विधातु कुमारिलभट्टो बौद्धाना प्रबल खण्डन कुर्वन्नासीत्। तथा नारदीयपुराणस्य निम्नाङ्कित पद्य महाकवे-र्भारवे· किरातार्जुनीयमहकाव्यस्य श्लोकेन सह शब्दतोऽर्थतश्चोभयथा मिलति—

अविवेको हि सर्वेपामापदा परम पदम् ॥ = ना० पु० १।९।५० ॥
अविवेक. परमापदा पदम् ( किरातार्जुनीये महाकाव्ये २।३० )

एवमाधारेण विद्वद्भि नारदीपुराणस्य रचनाकाल. सप्तम-नवम ( ७-९ ) शताब्द्योर्मध्ये एव मनन समुचितमभिधीयते। अस्मात् पुराणात् कार्तिकमाहात्म्य-पार्थिवलिङ्गमाहात्म्य-दत्तात्रेय स्तोत्र-सङ्कटगणपतिस्तोत्र-श्रीकृष्णमाहात्म्य-मृगव्याधकथा यादवगिरिमाहात्म्यादिनि सृत च मन्यते। श्रवणादिफलमितिकर्तव्यतानिर्देशश्चैवमस्नि—

य शृणोति नरो भक्त्या श्रावयेद्वा समाहित ।
स याति ब्रह्मणो धाम नात्र कार्या विचारणा ॥
यस्त्वेतदिपपूर्णाया धेनूना सप्तकाचितम् ।
प्रदद्याद् द्विजवर्याय स लभेन्मोक्षमेव च ॥।
यश्चानुकमणीमेता नारदीयस्य वर्णयेत् ।
शृणुयाद्वैकचित्तेन सोऽपि स्वर्गगति लभेत् ॥

## ७—मार्कण्डेयपुराणम्

मार्कण्डेयपुराण पुराणगणनाया सप्तम स्थान विभर्त्ति, परन्तु देवी-भागवतानुसारमिद द्वितोय पुराणमस्ति। मत्स्यपुराणानुसार पक्षिण उद्दिश्य धर्मपालकै र्मुनिभि प्रश्ने कृते यत्र मार्कण्डेयेन मुनिना सविस्तर धर्मार्थादीनां सम्यक् प्रतिपादनं कृतमस्ति तदेवास्ति मार्कण्डेयपुराण यस्य श्लोकसख्या नवसहस्राणि सन्ति—

यत्राधिकृत्य शकुनीन् धर्मान् धर्मविचक्षणा ।
व्याख्याता वै मुनिप्रश्ने मुनिभिर्धर्मचारिभि ॥
मार्कण्डेयेन कथितं तत्सर्व विस्तरेण तु ।
पुराण नव साहस्र मार्कण्डेयमिहोच्यते ॥ = ५३।२५।२६

नारदीयपुराणे मार्कण्डेयपुराणस्य परिचयप्रसङ्गे उक्तमस्ति यद् यत्र शकुनीनधिकृत्य मार्कण्डेयमुनिना महर्षि जैमिनि प्रति प्रथम सर्वेषा-धर्माणा प्रतिपादन कृतमस्ति तदस्ति मार्कण्डेयपुराणम्—

अथात सप्रवक्ष्याभि मार्कण्डेयाभिधं मुने !
पुराण सुमहत् पुण्य पठता श्रृण्वता सदा ।।
यत्राधिकृत्य शकुनीन् सर्वधर्मनिरूपणम् ।
मार्कण्डेयेन मुनिना जैमिने प्राक् समीरितम् ।। ९८।१

शिवपुराणस्योत्तरखण्डे लिखितमस्ति यत् यस्मिन् पुराणे महामुनि. मार्कण्डेयो वक्ता जात. तत् सप्तम मार्कण्डेयपुराणमस्ति—

यत्र वक्ताऽभवत् खण्डे मार्कण्डेयो महामुनि ।
मार्कण्डेयपुराण हि तदाख्यात च सप्तमम् ।।

एव नारदीय-मत्स्य-शिव पुराणेपु यद् मार्कण्डेयपुराणस्य लक्षणमुक्तमस्ति, तत् प्रचलितमार्कण्डेयपुराणे पूर्णरूपेण प्राप्यते । पौर्वात्या पाश्चात्याश्च समे समालोचका मार्कण्डेयपुराणस्य यथार्थता मौलिकता प्राचीनता च स्वीकुर्वंति । यतोहीद यावदुपलभ्यते तावदेव निर्विवाद मौलिक मन्यते सर्वैः ।

मत्स्य-नारद-ब्रह्मवैवर्त-श्रीमद्भागवतानुसारमत्र ९००० श्लोका भवितुमर्हन्ति, किन्तूपलब्धे तत्पुराणे २१०० श्लोका न्यूना सन्ति । केवलमत्र ६९०० श्लोका उपलभ्यन्ते, यत्र १३७ अध्याया सन्ति । नारदीयपुराणस्य विषयानुक्रमणिकया प्रतीयते, यदत्र नरिष्यन्तचरित्रानन्तरमपि इक्ष्वाकुचरित्र-तुलसीचरित्र - श्रीकृष्णबालचरित्र - रामकथा - सोमवशीय-पुरूरवो नहुष-ययातिचरित्र-साख्यतत्त्वविवेचन-प्रपञ्चसत्त्व-मार्कण्डेयचरितवर्णनमासीत्, पर सप्रति उपलब्धे मार्कण्डेयपुराणे नरिष्यचरित्रानन्तर दमस्याख्यानान्तरं प्रस्तुत्य मार्कण्डेयपुराणस्योपसहारात्मकैः श्लोकै. सह ग्रन्थसमाप्ति जायते । इतोऽग्रेऽशो नेदानी यावत प्रकाशितमार्कण्डेयपुराणप्रतिषूपलभ्यते । सम्भवतः एषा चरित्राणामेकत्रीकरणे मार्कण्डेयपुराणस्य ९००० सहस्राणि श्लोकाः पूर्णाः स्यु. ।

मुद्रित मार्कण्डेयपुराण नरिष्यन्तचरित्रे एव समाप्तिमेति, परन्तु नारदीयपुराणस्य सूच्यनुसारमिद पुराणमिक्ष्वाको. कुशपर्यन्तं पुरूरवसः श्रीकृष्णचरित यावत् सम्यग् वर्णयित्वा समाप्त भवितुमर्हति । अतो निश्चीयते यदस्यान्तिमो भागा नून लुप्तोऽस्ति । अथापि सर्वे समालोचका मन्यन्ते यदस्य पुराणस्य प्राप्योऽशो यथातथैवास्ति ।

लोकप्रसिद्धा दुर्गासप्तशती अस्यैव पुराणस्यैको महत्त्वपूर्णोऽशो विद्यते। यत्र जगज्जनन्या सर्वस्वरूपाया आदिशक्ते दुर्गादेव्या पवित्र रुचिरं चरित्रं विशदतयाऽङ्कितमस्ति। अत्र देवाद्वारा मधु-कैटभ-चण्डमुण्ड-शुम्भ-निशुम्भादीनामसुराणा वधकथा कथितास्ति। मार्कण्डेयपुराणस्य ७८-९० अध्याय पर्यन्त १३ अध्याया दुर्गासप्तशतीनाम्ना पृथक् प्रकाशित वर्तते सर्वत्र चोपलभ्यतेऽपि। कलियुगे सकलकामनापूर्तयऽयमशो विशेषरूपेणो पादेय वाञ्छासाधकश्चाभिमतोऽस्ति। एव सर्वैरास्तिकजनैः श्लाघनीय. श्रद्धेय उपादेय सततमभ्यसनीयश्चास्ति। अस्याशस्य पाठकरणेन सर्वे-मनोरथा नून सिध्यन्ति। सम्पत्तौ विपत्तावपि अस्य पाठकरण श्रेयस्कर भवति। विशेषत आश्विन-चैत्रमासयोर्नवरात्रयो समेषा हिन्दूनामास्तिकाना गृहे गृहे स्वस्वेष्टसिद्धये दुर्गासप्तशतीपाठो भवति। वस्तुतः "**कलौ चण्डी विनायकौ**" इत्यनुसार सर्वकार्यसिद्धये श्रद्धापूर्वक दुर्गादेव्या आराधना परमावश्यिकाऽस्ति।

मार्कण्डेयपुराणे सत्या मदालसया. स्वरूपमादर्शनारीरूपेणाङ्कितमस्ति तथास्याः परम पवित्र जीवनचरित्र च महता विस्तरेण प्रदर्शितमस्ति। सतीशिरोमण्यामदालसाया पुत्रोल्लापनप्रकारोऽपूर्वो वर्तते। तथा सा स्वकीयेऽङ्के लालन-पालने कुर्वन्ती प्राथमिकान् त्रीन् पुत्रान् एवमुपदिष्टवती यतस्ते बाल्ये एव विरक्ताः सन्त ईश्वरभक्ता अजायन्त। चतुर्थपुत्रायालर्काय बाल्यावस्थायामेवैव ज्ञानयोगमुपादिदेश येन राजा भूत्वापि स ज्ञानयोगेन सह कर्मयोगस्यापूर्व सामञ्जस्य स्थापितवान्। मदालसया अलर्काय दत्तः प्रवृत्तिमर्गस्योपदेशो विश्ववाङ्मयेऽद्वितीय उच्यते—

धन्योऽसि रे यो वसुधामशत्रुरेकश्चिर पालयितासि पुत्र।
तत्पालनादस्तु सुखोपभोगो धर्मात् फल प्राप्स्यासि चामरत्वम्॥
धरामरान् पर्वसु तर्पयेथा· समीहित बन्धुषु पूरयेथा।
हितं परस्मै हृदि चिन्तयेथा मन· परस्त्रीषु निवर्तयेथा॥
सदा मुरारिं हृदि चिन्तयेथा तद्ध्यानतोऽन्त षडरीन् जयेथा.।
मायाप्रबोधेन निवारयेथा अनित्यतामेव विचिन्तयेथाः॥
अर्थागमाय क्षितिपान् जयेथा यशोऽर्जनायार्थमपि व्ययेथा।
परापवादश्रवणाद् बिभीथा विपत्समुद्राज्जनमुद्धरेथा॥

मा० पु० २६।३५-३८

मदालसाया इयमान्तरिकी अभिलाषऽसीत् यद मम गर्भादुत्पन्न कोऽपि बालको विषयासक्तो मा भूत्वाऽस्या भवाटव्या न भ्रमेत्। अत सा बाल्ये पुत्रलालन-पालनयोरेव ज्ञानवैराग्यसदुपदेश ददातिस्म। तत्पुत्रोल्लापन प्रकरोऽपि अपूर्व एवासीत्—

शुद्धोऽस्ति रे तात न तेऽस्ति नाम कृत हि ते कल्पनयाऽधुनैव।
पञ्चात्मक देहमिद तवैतन्नैवास्य त्व रोदिषि कस्य हेतो॥
दुःखानि दुःखोपशमाय भोगान् सुखाय जानाति विमूढचेता।
तान्येव दुःखानि पुन सुखानि जानात्यविद्वान् सुविमूढचेता॥

मा० पु० १५।११।१६

मार्कण्डेयपुराणस्यारम्भ पक्षिद्वारा महाभारतसम्बन्धिना चतुर्णा प्रश्नाना समाधानाय भवति। अत्र सर्वप्रथम धर्मसञ्ज्ञकपक्षिणा जन्मनिरूपणम्, तेषा पूर्वजन्मकथा इन्द्रद्वाराशापप्रदानञ्च। बलरामतीर्थयात्रा, द्रौपद्या पुत्राणामाख्यानम्। राज्ञो हरिश्चन्द्रस्य पवित्र चरित्रम्। आडिवकयुद्धम्, कार्तवीर्याख्यानम्, सतीमदालसाया अपूर्वोपाख्यानम्। अलर्कचरित्रम्। द्वीप-वर्षादीना वर्णनम्। चतुर्दशाना मनूना महत्त्वपूर्णा कथा। अष्टममन्वन्तरे आद्याशक्ते प्रथम-मध्यम-उत्तम चरितेषु महाकाली-महालक्ष्मी-महासरस्वतीना चरित्रचित्रणम्। सूर्यस्योत्पत्ति-माहात्म्य-निरूपणम्। वैवस्वतवशसमाख्यानम्, राजर्षिवत्सप्री चरित्रम्, खनित्रस्य पुण्यकथा, अविक्षितचरित्रम्। मरुत्त-करन्धम-नाभाग-नरिष्यन्त दमादीना चरित्रवर्णनमस्ति। पुराणमिद देवीभक्ताना महत् प्रियमस्ति, योहि अत्र देवीमाहात्म्यप्रतिपादक एको महत्त्वपूर्णोशोऽस्ति, यत्र देव्या त्रिविधरूपस्य पावनचरितस्य चित्रणं विस्तरत कृतमस्ति। अत्र मन्वन्तराणा विस्तृतं विवरण सर्वपुराणेभ्य प्रामाणिकरूपेण ६९-८० अध्यायेषु अङ्कितमस्ति। अत्र पुराणपञ्चलक्षणं सम्यक् सघटते। सृष्टिवर्णने पुराणमिद विष्णुपुराणमनुकरोति। अत्र वैदिकीनामिष्टीना महत्वपूर्णो निर्देशोऽस्ति। उत्तममनुना मित्रवृन्दानामिकया इष्ट्या सकीया परित्यक्ता पत्नी पाताललोकादवाप्ता, सरस्वतीष्ठ्या च तस्या नागकन्याया मूकत्वं व्यपगतं, या एतस्य पत्न्या सहवासेन स्वपत्या अभिशप्ता सती मूका जाताऽसीत्। दत्तात्रेयद्वारा दत्तेऽलर्कायोपदेशे राजधर्म-वर्णाश्रम धर्म-स्वर्ग-नरक-श्राद्ध-कर्मविपाक-सदाचार-योगादीनां महन्मौलिकं दिग्दर्शनं विद्यते।

अत्र सह्यपर्वतस्योत्तरे भागे गोदावरोसमीपभूभागो विश्वस्मिन् सर्वोत्तमः परमो मनोरमश्चाभितोऽस्ति, येन कियन्तः समालोचका इद पुराणं तत्रैव स्थले निर्मित मन्यन्ते।

विभिन्नैर्निवन्धकारै अस्मात् पुराणात् स्वस्वनिबन्धेषु अनेकानि उद्धरणानि प्रस्तुतानि सन्ति। कल्पतरौ योगविषयका अस्य प्रायः १२० श्लोका उद्धृताः सन्ति। अपरार्केण ८५ उद्धरणानि दत्तानि। यत्र ४२ योगविषयकानि दानविषयकानि तथान्यानि दानविषयकानि सन्ति। अतो विषयप्रतिपादनदृष्ट्या इद पुराण गुप्तकालीनमिति स्वीकारे न काप्यस्ति विप्रतिपत्तिः।

**अस्य श्रवणादिफलमितिकतव्यतानिर्देशो यथा—**

य श्रृणोति नरो भक्त्या पुराणमिदमादरात्।
मार्कण्डेयामिध वत्स! स लभेत् परमा गतिम्॥
यस्तु व्याकुरुते चैतच्छैवं स लभते पदम्।
तत् प्रयच्छेल्लिखित्वा य सौवर्णकरिसयुतम्॥
कार्तिक्या द्विजवर्याय स लभेद् ब्रह्मणः पदम्।
श्रृणोति श्रावयेद्वापि यश्चानुक्रमणीमिमाम्॥
मार्कण्डेयपुराणस्य स लभेद्वाञ्छितम्फलम्।

## ८—अग्निपुराणम्

मत्स्यपुराणानुसारमीशानकल्पवृत्तान्ताधारेणाग्निना वसिष्ठाय य उपदेशो दत्तोऽस्ति स एवाग्निपुराणं विद्यते यत् सर्वयज्ञफलप्रदं वर्तते। तत्र षोडश सहस्राणि श्लोका सन्ति, किन्तु नारदीयपुराणानुसारमग्निना ईशानकल्पवृत्तान्याधारीकृत्य महर्षये वसिष्ठाय य उपदेशो दत्तः स एवाग्निपुराणनाम्ना प्रख्यातोऽस्ति, यत्र पञ्चदश सहस्राणि सन्ति श्लोकाः। अस्य पाठेन श्रवणेन च सर्वाणि पापानि दूरीभवन्ति। अत्र विविधानामद्भुतचरित्राणा चित्रण वर्तते—

यत्तदीशानकं कल्पवृत्तान्तमधिकृत्य च।
वसिष्ठायाग्निना प्रोक्तमाग्नेय तत् प्रचक्षते॥
तच्च षोडश साहस्र सर्वक्रतुफलप्रदम्।
(म० पु० ५३।२८)

अथातः संप्रवक्ष्यामि तवाग्नेयपुराणकम् ।
ईशानकल्पवृत्तान्तं वसिष्ठायानलोऽब्रवीत् ॥
तत् पञ्चदश साहस्र नाम्ना चरितमद्भुतम् ।
पठता शृण्वता चैव सर्वपापहर नृणाम् ॥
( ना० पु० ९१ २ )

अस्य पुराणस्य वक्ता अग्नि', श्रोता च महर्षि वसिष्ठोऽस्ति । अत्रे-शानकल्पस्य कथानक विद्यते । अग्निपुराण लोकशिक्षायै उपयोगिनीना विद्याना संग्रह प्रस्तोतृ पुराणमस्ति । अत इद भारतीयसमस्तविद्यानाकोशः प्रोच्यते । अस्यानुशीलनेन ज्ञायते यत् अस्य पुराणस्योद्देश्यं जनसाधारणे विविधानां विद्याना प्रचारकरणमस्ति । अस्मिन् ३८३ अध्याया. सन्ति । येषु विविधाना विद्याना सन्निवेश आश्चर्यकरो वर्तते । अत्रावतारतत्त्वेन साकं रामायणस्य, महाभारतस्य, हरिवशस्य च कथानां सारो दत्तोऽस्ति ।

अग्निपुराणस्य प्रथमेऽध्याये भगवतो विष्णोर्वैशिष्ट्यवर्णनानन्तर द्वितीयाध्यायतो मत्स्य-कूर्म-वराहावतारदिग्दर्शन विधाय रामावतारस्य मनोरम विवेचन विद्यते । रामावतारवर्णनप्रसङ्गे वलिवधानन्तरं किष्किन्धाराज्यमवाप्य सीतान्वेषणे विलम्ब कुर्वाण सुग्रीव सन्देष्टुं लक्ष्मण प्राहिणोद् भगवान् श्रीराम । तदनुसार स तत्र गत्वा श्रीरामसन्देश श्रवयन् सुग्रीव प्रति सरोषमुवाच—

तदाऽब्रवीत्त रामोक्त लक्ष्मणो व्रज राघवम् ।
न च संकुचित पन्था येन वाली हतो गतः ॥
समये तिष्ठ सुग्रीव ! मा वालिपथमन्वगा. । ८।६।१/२

एवमग्रे सीताहरणप्रसङ्गे रावणमारीचयो प्रश्नोत्तरे मारीच-विचारोऽपि हार्दिक सैद्धान्तिकश्च दरीदृश्यते—

मारीचो रावण प्राह रामो मृत्युर्धनुर्धरः ।
रावणादपि मर्तव्यं मर्तव्य राघवादपि ॥
अवश्यं यदि मर्तव्यं वर रामो न रावण: । १४।६।१/२

इत्थं ५-११ अध्यायेषु रामावतारमुद्दिश्य रामायणसार. प्रदत्तोऽस्ति तथा १२-१४ अध्यायेषु हरिवशवर्णनावसरे कुरुपाण्डवयोरुत्पत्तिं वर्णयित्वा महाभारतसारोऽपि प्रदर्शितो विद्यते । तत्र महाभारतरणाङ्गणे

सर्वेषा वीराणा निधनानन्तरं त्रयो दुर्योधनपक्षीया सप्त च पाण्डवपक्षीया अवशिष्टा आसन्निति निर्दिष्टमस्ति—

कृतवर्मा कृपो द्रौणिस्त्रयो मुक्तास्ततो रणात् ।
पाण्डवा सात्यकि कृष्ण सप्त मुक्ता न चापरे ।। १३।२४

अत एवोक्तमग्निपुराणस्यान्ते माहात्म्यवर्णनावसरे—

सर्वे मत्स्यावताराद्या गीता रामायण त्विह ।
हरिवशो भारत च नव सर्गा प्रदर्शिता ।। ३८३।५२

अस्मिन् पुराणे ३७९ अध्याये च भगवतोऽर्थवर्णनमपि नूनं स्मरणीयं वर्तते—

उत्पत्ति प्रलय चैव भूतानामागति गतिम् ।
वेत्ति विद्यामविद्या च स वाच्यो भगवानिति ।। ३९।१३

अत्रानेकविधमन्दिरनिर्माण गृहशिल्पकलाना निरूपणेन सह मूर्ति-प्रतिष्ठा पूजाविधान च विस्तरमुपदिष्टमस्ति । चतुर्णामुपवेदाना वेदाङ्गाना तथा दार्शनिकविषयाणाञ्च दिग्दर्शनेनातिरिक्त पशुचिकित्सा-रत्नपरीक्षा-वास्तुविद्या - ज्योतिषि - धर्मशास्त्र-राजनीति-आयुर्वेदादिशास्त्राणा वर्णनं विशेषरूपेण कृतं विद्यते । काव्यस्य सुन्दरनिरूपणेन सहालङ्कारशास्त्रस्य विवेचन महत्या मार्मिकरीत्या कृतमस्ति । छन्द शास्त्रस्य निरूपण व्याकरणस्यान्वेषणमपूर्व विद्यते । कौमारव्याकरणनाम्ना उपयोगिनो व्याकरणस्य, एकाक्षरकोशस्य, नामलिगानुशासनस्य, योगाभ्यासस्य यमनियमासनादीनामष्टानामङ्गाणा विवेचनं तथाद्वैतवेदान्तस्य सार सङ्कलितोऽस्ति, तथैकस्मिन्नध्याये गीताया साराशोऽपि दत्तोऽस्ति । एवमग्निपुराणे भारतीयसाहित्यस्य सस्कृतेश्च समेषा विषयाणा समावेशो जातोऽस्ति । सर्वासा विद्याना समावेशादेवेद भारतीयविद्याना कोश. प्रोच्यते । तथाचोक्तम्—

नास्मात् परतर भूमौ विद्यते वस्तु दुर्लभम् ।
आग्नेये हि पुराणेऽस्मिन् सर्वा विद्या प्रदर्शिता ।।
( अ० पु० ३८३।५१ )

एवमग्निपुराणस्य ३८३ अध्यायेषु वेदवेदाङ्गार्थशास्त्रायुर्वेदगान्धर्व वेदादीनां विषया सम्यक् निरूपिताः सन्ति । तथा हिन्दुसाहित्य-सस्कृतिप्रभृती-

नामुपयोगिनो विषया समाविष्टा सन्ति, येषामनुशीलनेन पर्याप्त भारतीय ज्ञानं समुपजायते। अत्र पुराणे पुराणाना पञ्चलक्षणं सम्यक् सघटते। नारदीयपुराणविषयानुक्रमाणिकया सह उपलब्धाग्निपुराणसूचीसम्मेलनेन प्रतीयते यत् ईशानकल्पाग्निवसिष्ठसम्वाद वर्जयित्वा प्राय. सर्वा कथा मिलन्ति। अत्र किञ्चित्परिवर्तनमवश्य जातमस्ति। प्रतीयतेऽस्य कियान् वास्तविकोऽशः पुराणान्तरे उपपुराणेषु वा योजतमस्ति।

एवमस्मिन् पुराणे सर्ग-प्रतिसर्गवर्णनेन सह अनेकतन्त्र-मन्त्र-योग प्रक्रिया - दान - व्रतोपवासाभिषेक - देवताप्रतिष्ठा- वर्णाश्रमव्यवस्था-नाना व्यवहार - वास्तुविद्या - राजधर्म - राजनीतीविषयक ज्ञान-युद्धोपयोगिना-मस्त्राणा वर्णन तिथि-वार-नक्षत्र-सामुद्रिकविज्ञान-स्त्रीपुरुषलक्षण-मृतस-ञ्जीवनीप्रयोगसम्मोहनोच्चाटनादिसन्वन्धिविपयमणिमाणिक्यादिपरोक्षौ - षधिप्रयोग - सर्वशास्त्र-निरूपण-चतुषष्टीकला - साङ्गोपाङ्गनिरूपणादीना विषया विवेचिता' सन्ति। अग्निपुराणेऽनेकेषा तान्त्रिकाणामनुष्ठाना-नामुल्लेखात् कियन्तो विद्वांसोऽस्योद्भवस्थान वङ्गदेशस्य पाश्चिमो भागोऽङ्गीक्रियते।

प्रतीयते यत् अग्निपुराणं विभिन्नासु शताब्दिषु अनेकेषा प्राचीनाना ग्रन्थाना सार सगृह्य निर्मितमस्ति। एकत्राग्निपुराण भोजराजस्य सरस्वतीकण्ठाभरणस्योपजीव्यमस्ति तर्हि अपरत्र तदुपजीव्य दण्डिनः काव्यादर्श प्रतीयते। अतोऽग्निपुराणस्य निर्माणकालः सप्तमनवमशताब्द्यो' मध्यभागो भवितुमर्हति। कियन्तो विद्वास इद चतुर्थशताब्द्या रचना स्वीकुर्वन्ति। एवमस्य निर्माणकालविषये महानस्ति विदुषां मतभेदः।

एतस्य श्रवणफलमितिकर्तव्यतानिर्देशो यथा--

अग्निना प्रोक्तमाग्नेय पुराण वेदसम्मितम्।
ब्रह्मविद्याद्वयोपेत भुक्तिद मुक्तिद महत्॥
नोपसर्गा नचानर्था न चौरादिभयं गृहे।
तस्मिन् स्याद् यत्र चाग्नेयपुराणस्य हि पुस्तकम्॥
शृण्वन् विप्रो वेदवित् स्यात् क्षत्रिय पृथिवीपति।
ऋद्धिं प्राप्नोति वैश्यश्च शूद्रश्चारोग्यमृच्छति॥
आग्नेयं पठितं ध्यातं शुभं स्यात् भुक्तिमुक्तिदम्।
अग्नये तु नमस्तस्मै येन गीत पुराणकम्॥

यूयं स्मरत आग्नेयं पुराण रूपमैश्वरम् ।
सूतो गत पूजितस्ते शौनकाद्या हरिं ययुः ॥

## ९—भविष्यपुराणम्

मत्स्यपुराणानुसारं यस्मिन् ग्रन्थे चतुर्मुखेन ब्रह्मणा भगवन्तं मनुं प्रति भगवत सूर्यस्य वर्णन विधाय अघोरकल्पवृत्तान्तप्रसङ्गे जगतः स्थितेः भूतग्रामस्य च लक्षणं वर्णित, यत्र वा वाहुल्येन भविष्यत् चरित्रं चर्चित विद्यते। तद् भविष्यपुराणनाम्ना विख्यात वर्तते, यस्य श्लोकसख्या १४५०० अस्ति—

यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्त - प्रसङ्गेन जगत् स्थितिम् ॥
मनवे कथयामास भूतग्रामस्य लक्षणम् ।
चतुर्दश सहस्राणि तथा पञ्चशतानि च ॥
भविष्य चरितप्राय भविष्य तदिहोच्यते ।
( म० पु० ५३।३०,३१ )

परन्तु नारदीये पुराणे भविष्यपुराणस्य लक्षणनिर्देशपूर्वकमुक्तमस्ति यद् यत्र सर्वेषा देवाना समानतया वर्णनं विद्यते, यच्च सर्वाभीष्टफलदायकमस्ति तद् भविष्यपुराणमुच्यते, यस्य श्लोकसख्याः चतुर्दश सहस्राणि सन्ति—

अथात सप्रवक्ष्यामि पुराणं सर्वसिद्धिदम् ।
भविष्यं भवत सर्वलोकाभीष्ट-प्रदायकम् ॥
चतुर्दश सहस्र तु पुराणं परिकीर्तितम् ।
भविष्यं सर्वदेवाना साम्य यत्र प्रकीर्तिम् ।
( ना० पु० ९-१,२ )

शिवपुराणे प्रोक्तमस्ति यद् भविष्यद्घटनानां वर्णनादिदं भविष्यपुराणमुच्यते-भविष्योक्तेर्भविष्यकम् । भविष्यपुराण हि पञ्चसु पर्वसु विभक्तं विद्यते (१) ब्राह्मपर्व (२) वैष्णवपर्व (३) शैवपर्व (४) सौरपर्व (५) प्रतिसर्गपर्व च —

प्रथम कथ्यते ब्राह्म द्वितीयं वैष्णवं स्मृतम् ।
तृतीयं शैवमाख्यातं चतुर्थ त्वाष्ट्रमुच्यते ॥
पञ्चमं प्रतिसर्गाख्य सर्वलोकैः सुपूजितम् ।
एतानि तात ! पर्वाणि लक्षणानि निबोध मे ॥

एवमत्र पञ्चसु पर्वसु ६०५ अध्याया सन्ति । नारदीयपुराणानुसारं १४००० मत्स्य-ब्रह्मवर्वतपुराणानुसार तु १४५०० श्लोका भवितुमर्हन्ति । भविष्यपुराणे सृष्टेरुत्पत्ते भूगोलस्य च सुन्दर वर्णन विद्यते । सूर्यस्य ब्रह्मस्वरूप वर्णनेन सह विभिन्नरङ्गपुष्पार्पणस्य पृथक्-पृथक् विधान फलं च निर्देष्टमस्ति । व्रतोपासनाविधि–त्याज्यपदार्थ रहस्य–वेदाध्ययन–विधान-गायत्रीमाहात्म्य – सन्ध्यावन्दनसमय – चतुर्वर्णविवाहव्यवस्था–सर्पदशननिवारणविधि - विषहरणी-मृतसञ्जीवनीगुटिकावर्णन- कले राज्ञां वशावली प्रभृतीना विपयाणां निरूपणम् । कले राजवंशावल्या पाण्डवतो गुप्तवशीराजपर्यन्तमुल्लेखो नास्ति । सूर्योपासनारहस्यस्य कलिप्रसूताना राजवंशानामितिहासज्ञानाय च भविष्यपुराणमत्यन्तमुपकारि उपयोगि उपादेयञ्चास्ति ।

भविष्यपुराणस्य ब्राह्मपर्वणि एका ऐतिहासिकी कथा उपलभ्यते, यत्र शाकद्वीपिब्राह्मणाना शाकद्वीपत आनयनं वर्णितमस्ति । एपामानयनकर्ता भगवत : श्रीकृष्णस्य पुत्रः साम्व प्रोच्यते । भविष्यपुराणे एपा ब्राह्मणाना रीतिव्यवस्था सम्यक् प्रदर्शितास्ति । यया प्रतीयते यत् सूर्योपासका आर्या भारतस्य पश्चिमे प्रदेशे निवसन्तिस्म, पारसीकाना रीतय एभिः मिलन्ति । एवं श्रूयते यत् साम्वेन आत्मनः कुष्ठस्य शान्तये सूर्यस्थापना कृता, किन्तु तेन तदुपयुक्त पूजको यदा न लब्ध तदा देवर्षेनादस्योपदेशात् पक्षिराजं गरुड सम्प्रेष्य शाकद्वीपत· अष्टादशप्रकारा मगब्राह्मणा अत्रानीता यैः सूर्योपासनाबलेन साम्वो रोगमुक्तो विहित । भगवत· श्रीकृष्णस्याज्ञया एभि. मगब्राह्मणै यादवकन्याभि सह विवाह. कृत । ते च मगब्राह्मणाः सूर्यपूजाया अधिकारिणो मता । प्राचीनेतिहासानुसार पूर्वकाले अरव-पारसयोरग्निपूजकानां मगानामेका शाखा भारते आगत्य शाकद्वीपिब्राह्म-णनाम्ना प्रसिद्धा । अद्यत्वेऽपि तेषु यन्त्रमन्त्रतन्त्रादीनामधिकश्चमत्कारः सिद्धयश्चदरीदृश्यन्ते ।

भविष्यपुराणसम्बन्धेऽनेकेषा विदुषा महत्य आपत्तय उपतिष्ठन्ते । तन्मते अस्य पुराणस्य वहवः कथा. आधुनिक्य प्रक्षिप्ताश्च प्रतीयन्ते ।

पर कियता विचारकाना विपश्चितां कथनमस्ति यत् त्रिकालदर्शिना महर्षिणा व्यासेन स्वीयया दिव्यदृष्ट्या भविष्य प्रत्यक्षीकृत्य पुराणमिद प्रणीतम् । अन्यथा भविष्यवर्णन विना अस्य पुराणस्य भविष्यं नाम कथ-कारं चरितार्थं स्यात् ? अथापि इद स्वीकर्तुं न योग्यमस्ति यदिदं पुराण

यथातथैवोपलभ्यते । अस्य प्रतिसर्गपर्वणि वह्व्य· कथा प्रक्षिप्ताः प्रतीयन्ते तथाऽत्र वह्वो नूतना आधुनिका शब्दा प्रयुक्तानि सन्ति । एवमाधुनिक-सम्प्रदाय-देश-नगर-व्यक्तीना नामान्यपि तत्र सगृहीत· सन्ति । यथा देहली प्रति गच्छतः । तथा प्रसिद्धाना नवीनाना राज्ञा नाम विक्टो-रियापर्यन्तमागत्यावरुद्धं जातम्, यदिद व्यासकृत स्यात् तर्हि सप्तम एडवर्ड-जार्जपञ्चमादीनामपि नामोल्लेख स्यात् । श्लोकनिर्माणशैली अपि नवीनैव प्रतिभाति । नारदीयपुराणे प्रदत्तसूचीतोप्येते अशा न मिलन्ति । अतोऽसशय प्रतिसर्गपर्वं प्रक्षेपबहुलत्वादविश्वसनीयं जातमस्ति ।

प: ज्वालप्रसादमिश्रेण चतुर्विध भविष्यपुराणमुपलब्धमस्ति । तस्य कथनमस्ति यत् सम्प्रति उपलभ्यते भविष्यपुराण तत्र सेमेषा मिश्रण मस्ति । तेषु परस्पर भेदो विद्यते । चतुर्थभविष्यपुराणापेक्षया प्रथम-द्वितीय-तृतीयानि किञ्चिदर्वाचीनानि प्रतीयन्ते । एषु आदित्यमाहात्म्यस्य वर्णने सत्यपि अघोरकल्पस्य वृत्तान्त ब्रह्मकर्तृको मनुसमीपे जगत स्थिते· प्रसगश्च न वर्तते । नारदीयपुराणानुसारमष्टमीकल्पतो वैष्णवपर्वण प्रारम्भो विद्यते । द्वितीये भविष्यपुराणे १५१ अध्यायतो वैष्णवपर्व-णोऽष्टमीकल्पस्य चारम्भो दृश्यते । विशेषरूपेणास्मिन् पर्वणि रूद्रमाहात्म्य-स्य वर्णनादनेन साक शैवपर्वापि सम्मिलितमस्ति । शेषाशे सौरपर्वणो विषयाणामभावोऽस्ति । अत्र प्रतिसर्गपर्व नास्ति । द्वितीय भविष्यपुराणीय-कथात· प्रथमभविष्यपुराणकथाना सगतिर्नास्ति । अस्याधिकाश· प्रक्षिप्त· परवर्ती च प्रतीयते । प्रथम द्वितीय भविष्यपुराणापेक्षयाऽत्र भविष्यपुराणे किञ्चिद्वैशिष्ट्यमस्ति । अत्र भविष्यस्य लक्षणसगमनेऽपि अस्य रचना परव-र्तिनो कालस्य प्रतीयते । यदा समस्ते भारते तान्त्रिक प्रभावो विस्तृत आसीत् तस्यैव समयस्य रचना तृतीय भविष्यपुराण भवितुमर्हति, यतोहि अस्य सप्तमेऽध्याये आगमतन्त्र-जामल-डामरादीना विशिष्ट विवरण विद्यते । मत्स्यपुराणानुसार भविष्यपुराणेऽनेकासा भविष्यकथानामाभासोऽस्ति योऽस्मिन् तृतीये भविष्णपुराणे किञ्चित् मिलति । अस्य नवमेऽध्याये म्लेच्छोक्तशास्त्रपरित्यागस्य चर्चा दशमेऽध्याये कलियुगे निगमज्योतिष-वेदसग्रहयो· दोषप्रदर्शन मनसादेवी-दशहरा-षष्ठ्यादिपूजाया वर्णनमस्ति । अत्रोद्भिज्जविद्याया यादृक् प्रसगोऽस्ति तादृक् नान्येषु केषु पुराणेषु विद्यते । अनेन विज्ञानस्य महान् लाभो भविष्यति ।

श्री वेंकटेश्वर प्रेस बम्बईतो मुद्रिते भविष्यपुराणे पुराणलक्षणं न संघटते नापि श्लोकसख्यात· साम्यमस्ति। अतो विद्वत्समाजे प्रक्षेप-बाहुल्यात् पुराणमिदमुपेक्षित जातमस्ति। विशेषतोऽस्य प्रतिसर्गपर्वं च सर्वथा उपेक्षणीयमप्रामाणक च जातमस्ति।

महतो दु खस्य विषयोऽस्ति यत् यस्य भविष्णपुराणस्य आपस्तम्ब धर्मसूत्रादिप्राचीनेषुप्रामाणिकेषु आदरणीयनिबन्धग्रन्थोषु सम्मानपूर्वकं नामोल्लेखो विद्यते तत् सर्वसामान्य भविष्णपुराणमद्यत्वेऽदृश्य जातमस्ति। अस्यानुशीलनमत्यावश्यकमस्ति। अतोऽधकारिभि· समालोचकै र्विद्वद्भिरस्य विशुद्धतायै अग्रेसरैर्भाव्यमिति मामकीनमस्ति अभ्यर्थनम्।

बेंकटेश्वर प्रेस बम्बईतः प्रकाशिते भविष्यपुराणे २२४–२२९ अध्यायेषु या श्रीसत्यनारायणव्रतकथा समुपलभ्यते सा लोके प्रचलितया स्कन्द-पुराणीयसत्यनारायणव्रतकथया वर्ण्यविषये एकतामापन्नाऽपि भिन्नाऽस्ति। अस्य विशेषविवेचन स्कन्दपुराणविवेचनप्रसङ्गे द्रष्टव्यम्।

एतदतिरिक्त नवलकिशोरप्रेस लखनऊत· प्रकाशिते भविष्णपुराणे खण्ड द्वयमुपलभ्यते-पूर्वार्द्धम् उत्तरार्द्धं च। तत्र पूर्वार्द्धे ४१ उत्तरार्द्धे च १७१ सङ्कलनया २१२ अध्याया सन्ति।

मत्स्य-नारदीयाग्निपुराणेषु भविष्यपुराणस्य या विषयानुक्रमणिका प्रदत्ताऽस्ति। ततो वर्तमानं भविष्णपुराण मिलति। भविष्यपुराणस्य रूपे इयत् परिवर्तन जातमस्ति, यदस्य वास्तविकता प्रच्छन्ना जाताऽस्ति। मुम्बईतो मुद्रिते भविष्यपुराणे इयती नवीवता सयोजिताऽस्ति ययेद सर्वथा अविश्वसनीय जातमस्ति। वाराहपुराणे भविष्णपुराणस्य वारद्वयमुल्लेखोऽस्ति, यत्र जाम्वतीसुतसाम्वद्वारा सूर्यमूर्तिस्थापनायाः चर्चास्ति।

अस्य पुराणस्योल्लेखोऽल्वेरुणिनापि स्वकीयाया पुराणसूच्या कृतोऽस्ति। अतोऽस्य पुराणस्य दशमशताब्दीतः पूर्वरचनास्वीकारे न कापि विप्रतिपत्ति र्भवितुमर्हेति।

**एतस्य श्रवणफलमितिकर्तव्यतानिर्देशो यथा—**

तल्लिखित्वा तु यो दद्यात् पौष्या विद्वान् विमत्सरः।
गुडधेनुयुतं होमं वस्त्रमाल्यविभूषणैः॥

वाचकं पुस्तकञ्चापि पूजयित्वा विधानत. ।
यो वै जितेन्द्रियो भूत्वा सोपवास. समाहित· ।
अथवा यो नरो भक्त्या कीर्तयेच्छृणुयादपि ॥
स मुक्तः पातकैर्घोरैः प्रयाति ब्रह्मण पदम् ।
योऽप्यनुक्रमणीमेता भविष्यस्य निरूपिताम् ॥
पठेद्वा शृणुयाच्चैतौ भुक्ति मुक्तिञ्च विन्दत. ।

## १०—ब्रह्मवैवर्तपुराणम्

मत्स्यपुराणानुसारं यत्र सावर्णिना मनुना देवर्षि नारद प्रति रथन्तर-कल्पवृत्तान्तं लक्ष्योकृत्य भगवत. श्रीकृष्णस्योत्तमं चीरत तथा वाराह-चरित च वर्णितमस्ति तद् ब्रह्मवैवर्तपुराणनाम्ना विख्यात विद्यते, यस्य श्लोकसख्या अष्टादशसहस्राणि सन्ति—

रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
सावर्णिना नारदाय कृष्णमाहात्म्यमुत्तमम् ॥
यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहु ।
तदष्टादश साहस्रं ब्रह्मवैवर्तमुच्यते ॥
( मत्स्यपुराणे ५३।३३-३४ )

नारदीयपुराणे तु कथितमस्ति यद् यस्मिन् पुराणे सावर्णिना मनुना देवर्षि नारदं प्रति धर्मार्थकाममोक्षाणामलौकिकसारस्य वेदमार्गप्रवतक-पुराणार्थस्य च प्रतिपादन तथा विष्णुशिवयोरभेदसिद्ध्यर्थ प्रेमप्रदर्शक-स्योपदेशस्य सग्रह· कृतोऽस्ति तद् दशम ब्रह्मवैवर्तनामकं पुराणमस्ति—

शृणु वत्स प्रवक्ष्यामि पुराण दशम तव ।
ब्रह्मवैवर्तकं नाम वेदमार्गानुदर्शकम् ॥
सावर्णिर्यत्र भगवान् साक्षाद्देवर्पयेऽथित ।
नारदाय पुराणार्थं प्राह सर्वमलौकिकम् ॥
धर्मार्थकममोक्षाणा सारं प्रीति र्हरौ हरे ।
तयोरभेदसिद्ध्यर्थं ब्रह्मवैवर्तमुत्तमम् ॥
( नारदीयपुराणे १०१।१-३ )

शिवपुराणस्योमासहितायामुक्तमस्ति यद् ब्रह्मणो विवर्तप्रसंग-कारणादिद ब्रह्मवैवर्तपुराणमुच्णते—

विवर्तनाद् ब्रह्मणस्तु ब्रह्मवैवर्तमुच्यते
( शि० पु० उ सं० ४४।१३३ )

स्वय ब्रह्मवैवर्त स्वनाम्नो विवरणमुपस्थापयत् कथयति यत् कृष्णद्वैपायनव्यासद्वारा ब्रह्मणो विवरणोपस्थापनाद् विद्वांस एतद् ब्रह्मवैवर्तपुराणं कथयन्ति—

विवृतं ब्रह्म कार्त्स्न्य च कृष्णेन यत्र शौनक।
ब्रह्मवैवर्तकं तेन प्रवदन्ति पुराविद ॥
( १।२।५८ )

तदेव ब्रह्मवैवर्ते १८००० श्लोका. चत्वारश्च खण्डा सन्ति (१) ब्रह्म खण्ड (२) प्रकृतिखण्ड (३) गणेशखण्ड. (४) श्रीकृष्णजन्मखण्डश्च। एपु क्रमश ३०, ५७, ४६, १३३ सङ्कलनया २६६ अध्याया सन्ति—

अष्टादशसहस्र तत् पुराण परिकीर्तितम्।
ब्रह्म-प्रकृति-विघ्नेश-कृष्णखण्डै समाचितम् ॥

नारदीयपुराणानुसारमत्र चत्वारि खण्डानि तु सन्ति, परमनेकाभिः कथाभिः संङ्गतिर्न भवति। नारदीयपुराणोक्ते ब्रह्मखण्डे सृष्टिप्रकार-ब्रह्मनारदविवाद-नारदशिवलोकगमन - शिवाद्ज्ञानलाभादयो विषयास्तु मिलन्ति, किन्तु नारद-मरीचि-सिद्धाश्रमगमन सावर्णिकथा च नोपलभ्यते तथा प्रकृतिखण्डे सावर्णिनारदसम्बादस्य मुख्यतया श्रीकृष्णमाहात्म्यस्योल्लेखस्तु अस्ति पर वर्तमाने ब्रह्मवैवर्ते नोपलभ्यते। अपितु प्रकृते. पूजाया माहात्म्यस्य च विस्तारपूर्वक वर्णनमस्ति।

नारदीय-मत्स्य-शिवपुराणना लक्षणेन कथाभिश्च प्रचलितब्रह्मवैवर्तपुराणस्यैकता नास्ति, रथन्तरकथन - नारदसावर्णिसम्बाद-ब्रह्मवराहवृत्तान्त-ब्रह्मविवर्तप्रसङ्गादि प्रचलिते ब्रह्मवैवर्ते नोपलभ्यते।

मत्स्य-शिवपुराणानुसार पुराणमिद ब्रह्मणो महिम्न प्रकाशक पुराण कथ्यते। मात्स्ये उक्तमस्ति यदस्य यो दान करोति तस्य ब्रह्मलोके निवासो जायते। स्कन्दपुराणोक्त—सवितुर्ब्रह्मवैवर्तम् इत्यनुसारमिद पुराणं सवितृमहिम्नः प्रकाशकं विद्यते-परं स्वय ब्रह्मवैवर्ते भगवतो विष्णो महत्ता प्रतिपदिताऽस्ति। अत इद वैष्णवं पुराणं मन्यते तथा पुराणमिद सर्वश्रेष्ठं पुराणमुक्तमस्ति-सारभूतं पुराणेषु ब्रह्म वैतर्तमुच्यते।

नारदीयपुराणानुसारं ब्रह्मवैवर्तपस्योपक्रमे भगवता श्रीकृष्णेन ब्रह्म-तत्त्वस्य विवरणादस्य नाम ब्रह्मवैवर्त जातम्, किन्तु प्रचलिते ब्रह्मवैवर्ते नेदमुपलभ्यते। एवमुच्यते यद् ब्रह्मवैवर्ते प्रथम ब्रह्मणो विवर्तविषयो वर्णित आसीत्, पर द्वितीये सस्करणे सावर्णिवसिष्ठसम्वादे श्रीकृष्णचरित सम्वद्धम्। तदनन्तरमादित्यमाहात्म्यप्रकाशकमिद सौरं पुरणमभिमतम्। पश्चात् मस्कृत मदिद वैष्णव पुराण जातम्। वैष्णवा. पुराणमिद सात्त्विकं स्वीकुर्वन्ति, परमिद पुराणं तन्त्रस्यापि प्रकाशकमस्ति। अत इदं राजस पुराणं मन्यते, यतो हि प्रकृते (शक्ते) प्राधान्यादिद देवीयामलादौ शाक्त पुराण कथितमस्ति।

साम्प्रत ब्रह्मवैवर्तस्य किञ्चिद्रूपान्तर जातमस्ति। अत· केचन समालोचका इदमाद्य पुराणमकथयित्वा आधुनिक ब्रह्मवैवर्त कथयन्ति।

अत्र वहवः श्लोका· पश्चात् सयोजिता प्रतीयन्ते। यथा सङ्करजाते-रुत्पत्तिविवरणप्रसङ्गे लिखितमस्ति यत् म्लेच्छात् कुविन्दकन्याया-मुत्पन्ना जाति जोला (जुलाहा) वभूव तथा तत कुविन्दकन्याया-मुत्पन्ना जाति शराक इत्युच्यते—

मलेच्छात् कुविन्दकन्याया जोला जाति र्वभूव ह।
जोलात् कुविन्दकन्याया शराक परिकीर्तित ॥
(ब्र० वै० पु० १०।१२१)

श्रीमद्भागवतवद् ब्रह्मवैवर्तपुराणेऽपि पुराणानां दशलक्षणानि कथितानि सन्ति तथोपपुराणाना पञ्चलक्षाणि उक्तानि। तथाहि—

सर्गश्च प्रतिसर्गश्च वशो मन्वन्तराणि च।
वशानुचरित विप्र ! पुराण पञ्चलक्षणम् ॥
एतदुपपुराणाना लक्षण च विदुर्वुधा।
महता च पुराणाना लक्षणं कथयामि ते ॥
सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेपा च पालनम्।
कर्मणा वासना वार्ता मनूना च क्रमेण तु।
वर्णन प्रत्ययाना च मोक्षस्य च निरूपणम् ॥
उत्कीर्तन हरेरेव देवाना च पृथक् पृथक्।
दशादिक लक्षण च महता पकीर्तितम् ॥
(ब्र० वै० श्री० ज० ख० १३१।६, ९)

ब्रह्मवैवर्तं समस्तस्य ज्ञानस्यास्ति आकरः वैष्णवानाञ्च मान्यतमम् विशेषतो गौडीयवैष्णवा अस्य पुराणस्य महदादर कुर्वन्ति। अस्य प्रतिपाद्यो गोलोकवासी भगवान् श्रीकृष्णस्तथा तस्याह्लादिनी शक्तिः श्रीराधाजी वर्तते, यौ सर्वदा दिव्ये गोलोके गोपोभिः सह रासलीला कुर्वन्तौ भक्तानलौकिकैरानन्दैराह्लादयत।

ब्रह्मवैवर्तपरम्पराप्रसङ्गे लिखितमस्ति यद् इद पुराण पुरा भगवता श्रीकृष्णेन गोलोके ब्रह्मणे प्रदत्त, तेन पुष्करे धर्माय प्रदत्तं, तेन स्वपुत्राय नारायणाय प्रदत्त, तेन नारदाय प्रदत्त, तेन जह्नवीतटे व्यासाय प्रदत्त, तेन च सिद्धिक्षेत्रे सूताय प्रदत्तमित्येव परस्परमिद पुराणमद्यत्वेऽस्माकं दृष्टिगोचरो भवति—

इद पुराण सूत्र च पुरादत्त च ब्रह्मणे।
निरामये च गोलोके कृष्णेन परमात्मना॥
महातीर्थे पुष्करे च दत्तं धर्माय ब्रह्मणा।
धर्मेणेदं स्वपुत्राय प्रीत्या नारायणाय च॥
नारदो व्यासदेवाय प्रददौ जावह्नीतटे।
व्यास पुराणसूत्र तत् सव्यास्य विपुल महत्॥
मह्य ददौ सिद्धिक्षेत्रे पुण्यदे सुमनोहरम्।
(ब्र० वै० ब्र० ख० १।५९–६३)

ब्रह्मवैवर्त हि चतुर्षु खण्डेषु विभक्तमस्ति। तत्रार्द्धे खण्डत्रय विद्यते, अर्द्धादधिके चतुर्थ श्रीकृष्णजन्मखण्डं विद्यते।

तत्र प्रथमे ब्रह्मखण्डे परब्रह्मणो वर्णन विद्यते, यस्य ध्यानादिकं वैष्णवा योगिराजा. सन्तसमुदायाश्च कुर्वन्ति—

ब्रह्मखण्डे सर्वबीज पर ब्रह्मनिरूपणम्।
ध्यायन्ते योगिन सन्तो वैष्णवा यत्परात्परम्॥
(ब्र० वै० १।४५)

द्वितीये प्रकृतिखण्डे प्रकृतेश्चित्रणमस्ति, या भगवत· श्रीकृष्णस्यादेशानुसारं आत्मान समये समये दुर्गा-लक्ष्मी सावित्री सरस्वती राधादिरूपपरिणमयित्री। सावित्री-तुलसी प्रभृतीना देवीना पवित्र चरित्रं जीवाना कर्मविपाकः शालग्रामशिलावर्णनम् मन्त्र-स्तोत्र-कवचादीना विद्याना

प्रकृतिलक्षणनिरूपण पुण्यात्मना पपिना च स्थाननिर्देश. शुभाशुभनरक वर्णनञ्चास्ति।

तृतीये गणेगखण्डे गणेशजन्मचरित्रादिवर्णनान्तर स श्रीकृष्णावतार-रूपेण वर्णित । अत्र गणेशभृगुसम्वाद–गुप्तस्तोत्र–मन्त्र–तन्त्र–कवचादीना दिग्दर्शन विद्यते। अस्मिन् खण्डेऽतिथिसत्कारोऽनुकरणीय. श्लाघनीय-श्चास्ति—

अपूजिनोऽतिथिर्यस्य भवनाद्विनिवर्तते ।
पितृदेवाग्नय पश्चात् गुरवो यान्त्यपूजिता ॥ ८।३९

अपि च ब्रह्मवैवर्तस्य खण्डेऽस्मिन् पञ्चप्रकारका पितर· प्रोक्ता. सन्ति–

विद्यादाताऽन्नदाता च भयत्राता च जन्मद ।
कन्यादाता च वेदोक्ता नराणा पितर स्मृता ॥ ८।४४

एव पञ्चप्रकारा पुत्रा अपि अमिमता सन्ति (१) भृत्य. (२) शिष्यः (३) पोष्य (४) औरस. (५) शरणागतश्च। एषु चत्वारो धर्मपुत्रा सन्ति पञ्चम ओरसस्तु धनभागी पुत्रोऽस्ति—

भृत्य शिष्यश्च पोष्यश्च वीर्यज शरणागत. ।
धर्मतुत्राश्च चत्वारो वीर्यजो धनभागिति ॥ ८।४९

अत्र तृतीये खण्डे स्वधर्मरक्षायै अत्यन्त आदर्शमय उपदेशो दत्तोऽस्ति

नास्ति धर्मात् परो वन्धुर्नास्ति धर्मात् पर धनम् ।
धर्मात् प्रिय पर को वा स्वधर्मं रक्ष यत्नत ॥ ६०।२१

नहि सत्यात् यरो धर्मो नानृतात् पातकं महत् ।
नहि गगासमं तीर्थं न देव. केशवात् परम् ॥

चतुर्थे श्रीकृष्णजन्मखण्डे पवित्रे भारतवर्षे भगवतः श्रीकृष्णस्य जन्मकर्मभूभारहरणसाधुसरक्षणराधास्वरूपवर्णनादिकमत्यन्तं मनोहारि विद्यते। श्रीमद्भागवतदशमस्कन्धातिरिक्त श्रीकृष्णलीलाया इयद् दिव्यं वर्णनं नान्यत्रोपलभ्यते। अस्मिन् खण्डे गुरो. सेवा सर्वोत्तमाभिमताऽस्ति यतो गुरौ सर्वे देवा प्रसन्नतापूर्वकं निवसन्ति—

गुरुर्ब्रह्मा गुर्रुर्विष्णु गुरुरेव स्वय शिव ।
गुरौ हि सर्वदेवाश्च तिष्ठन्ति सतत मुदा ॥
( ब्र० वै० पु० ८३।१४ )

एव सत्यपि ब्रह्मवैवर्तस्याधिकाश प्रक्षिप्त. प्रतीयते । विशषतो गणेश-खण्डस्तु अव्यवस्थितो विद्यते । शिव-मत्स्य-नारदीयपुराणेषु ब्रह्मवैवर्तस्य यल्लक्षण कथा वा प्रदत्ताऽस्ति, तत्र परस्परमैक्यन्नास्ति वाराहस्य वृत्तान्त सावर्णिनारदसम्वादश्च नात्र पुराणे उपलभ्यते ।

स्कन्दपुराणस्य शिवरहस्यखण्डे ब्रह्मवैवर्तं सूर्यप्रतिपादक पुराण कथितमस्ति, किन्तु उपलब्धे ब्रह्मवैवर्ते राधासम्वलित: श्रीकृष्ण परात्पररतरं ब्रह्म स्वीकृतीमस्ति तस्यच स्वकीयो लोक गोलोक उक्तोऽस्ति। श्रीकृष्णापेक्षया श्रीराधाया महिमा सर्वातिशायी वर्तते। श्रीकृष्णे राधादेव्या अद्भुतस्य प्रेम्ण साम्य विश्वसाहित्ये कुत्रापि नास्ति ।

ब्रह्मवैवर्तस्य काशीरहस्यनामकमेकं खण्डमप्युपलभ्यते यत्र २६ अध्याया. २७०० श्लोकाश्च सन्ति । अत्र काशातत्त्वस्य निर्वचन महता कौशलेन सह कृतमस्ति। अस्यानुशीलनेन काशीसम्बन्धे कश्चित् सन्दहो नावशिष्यते । काशीरहस्यावगत्या सह ज्ञानस्य कर्मणो भक्तेश्च समन्वयात्मक स्वरूपमवगत भवति।

त्रिस्थलीसेतु-काशीदर्पणयो ये श्लोका ब्रह्मवैवर्तनाम्ना निर्दिष्टा सन्ति, ते सर्वे काशीरहस्ये समुपलभ्यन्ते । अतोऽस्य प्रामाणिताया नास्ति कश्चित् सन्देह· । अस्मिन्नशे नीलकण्ठसरस्वतीकृता सेतु वन्धनाम्नी टीकाऽप्यस्ति, या काश्या अचिन्त्य महिनान प्रकाशयितु सवथाऽस्ति समर्था। ब्रह्मवैवर्तस्य पुराणस्येदानी पाठद्वयमुपलभ्यते । एको दाक्षिणात्यपाठ. द्वितीयो गौडीयपाठ । कियन्तो विद्वासोऽस्य पुराणस्योद्गनस्थल वङ्गप्रदेश कथयन्ति, यतोऽस्मिन् वङ्गस्य रीति-विश्वासाचारव्यवहारा विशेषरूपेण वर्णिता सन्ति। अस्य ब्रह्मखण्डे वङ्गीयमान्यतानुसार सङ्करजातीना विशेषवर्णन वर्तते । अस्य प्रकृतिखण्डे ४३-४५ अध्यायेषु मनसा-मङ्गला-चण्डीप्रभृतीना वङ्गीयदेवीदेवतानामर्चनाया विधानमस्ति । अस्य भौगोलिक क्षेत्र काश्या पूर्ववर्ती भोजपुरप्रदेश: प्रतीयते ।

नारदीयपुराणानुसारमत्र १८००० श्लोका सन्ति, पर वङ्गवासी प्रेससंस्करणानुसार २२००० श्लोका· सन्ति। वैकटेश्वरप्रेससस्करणे २५००० श्लोका उपलभ्यन्ते । अत: प्रतीयते यदत्र ३-५ सहस्त्रश्लोका. पश्चात् समायोजिता: सन्ति । एसियाटिक सोसाइटी कलिकातासंग्रहालये देवनागरी लिप्या लिखित एको हस्तलेख: ३८३० सख्याकोऽस्ति, यस्य

पुष्पिकायामादि ब्रह्मवैवर्तं पुराण लिखितमस्ति, यदेकखण्डमेवास्ति। श्लोकसख्यापि तत्र न्यूनतरास्ति।

ब्रह्मवैवर्तस्य प्रकृतिखण्डे गणेशखण्डे च तान्त्रिकसामग्री आधिक्येनोपलभ्यते। तान्त्रिकानुष्ठानविधे सकलन नवम-दशम शताब्द्यो -जातमस्ति। विशेषतेयमवान्तरकालीनप्रतिसंस्कारेपूपलभ्यते। अस्य बहूनि वचनानि स्मृति-चन्द्रिका - हेमाद्रि - चतुर्वर्गचिन्तामणि- स्मृतितन्त्रादिनिबन्धग्रन्थेषु उद्धृतानि सन्ति। राधावल्लभीसम्प्रदायप्रभाविताया राधाया उपासनाया म्लेच्छाना निर्देशस्य चाधारेण कियन्तो विद्वासो ब्रह्मवैवर्त ९-१५ शताब्दीमध्ये निर्मित मन्यन्ते।

**श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा—**

पठितञ्च श्रुतं ध्यात पूजित चाभिवर्णितम्।
इत्येतद् ब्रह्मवैवर्त्तं पुराणा चात्यलौकिकम्॥
व्यासोक्त चादिसम्भूत पठन् शृण्वन् विमुच्यते।
विज्ञानज्ञानशमनाद् घोरात् ससारसागरात्॥
लिखित्वेदं च यो दद्यान्माघ्या धेनुसमाचितम्।
ब्रह्मलोकमवाप्नोति स मुक्तोऽज्ञानबन्धनात्॥
यश्चानुक्रमणी वाऽपि पठेद् वः शृणुयादपि।
सोऽपि कृष्णप्रसादेन लभते वाञ्छित फलम्॥

## ११—लिङ्गपुराणम्

मत्स्यपुराणानुर यत्राग्निमयलिङ्गे स्थितेन भगवता महेश्वरेण अग्निकल्पं लक्ष्यीकृत्य धर्मार्थकाममोक्षाणा प्राप्तिसाधनमुक्तमस्ति तदेवास्ति लिङ्गपुराण, यस्य श्लोकसख्या एकादश सहस्राणि सन्ति—

यत्राग्नि लिङ्गमध्यस्थ प्राह देवो महेश्वर।
धर्मार्थकाममोक्षार्थ माग्नेयमधिकृत्य च॥
कल्पान्त लिङ्गमित्युक्त पुराण ब्रह्मणा स्वयम्।
तदेकादशसाहस्र ... ........॥

(म० पु० ५३।३६, ३७)

नारदीयपुराणानुसार लिङ्गपुराणस्य परिचय एवमस्ति–अग्निमये लिङ्गे स्थितो भगवान् सदाशिव. अग्निकल्पस्याधारे धर्मादिसिद्धये

पाठकस्य श्रोतुश्च भुक्तिमुक्तिप्रदायकस्य अनेकाख्यानयुक्तस्य च यस्य पुराणस्य प्रतिपादनं कृतवान् तत् लिङ्गपुराण कथ्यते। यत्र शिवस्य महिम्नः सूचकानि एकादशसहस्राणि श्लोकाः सन्ति। तच्च पुराण व्यासेन भागद्वये विभक्तमस्ति-पूर्वभाग उत्तरभागश्च। इदं च पुराणं सर्वपुराणेषु सारभूत जगत्रये प्रसिद्धमस्ति—

श्रृणु पुत्र ! प्रवक्ष्यामि पुराण लिङ्गसज्ञितम्।
पठता श्रृण्वता चैव भुक्तिमुक्तिप्रदायकम्॥
यञ्च लिङ्गाभिधे तिष्ठन् वह्निलिंगे हरोऽभ्यधात्।
मह्यं धर्मादिसिद्ध्यर्थमग्निकल्पकथाश्रायम्॥
तदेव व्यासदेवेन भगद्वयसमाचितम्।
पुराणं लिङ्गमुदितं वह्वाख्यानविचिन्तितम्॥
तदेकादशसाहस्रं हरमाहात्म्यसूचकम्।
परं सर्वपुराणाना सारभूतं जगत्रये॥ (म० पु० १०२)

शिवपुराणे तूक्तमस्ति यत् लिङ्गस्य चरितवर्णनात् तस्य नाम लिङ्ग-पुराण जातमस्ति—

लिङ्गस्य चरितोक्तत्वात् पुराण लिङ्गमुच्यते।

स्वय लिङ्गपुराणे प्रोक्तमस्ति यत् ईशानकल्पस्य प्रसङ्गे महात्मना ब्रह्मणा यत् पुराण कथितमस्ति तल्लिङ्गपुराणमुच्यते—

ईशानकल्प वृत्तान्तमधिकृत्य महात्मना।
ब्रह्मणा कल्पितं पूर्वं पुराण लैङ्गमुच्यते॥

किन्तु मत्स्य-नारदीयपुराणानुसारमग्निकल्पस्य कथा लिङ्गपुराणे भवितुमर्हति तथा ईशानकल्पप्रसङ्गे अग्निपुराणस्य वर्णनस्ति। लिङ्ग-पुराणे शिवस्य विष्णोश्च प्रशसाया सत्याममि कस्य चिदन्यस्य देवस्य निन्दा नास्ति। अस्मिन् पुराणे भगवतः शङ्करस्योपासना लिङ्गरूपे कथितास्ति। लिङ्गपुराणे शिवलिङ्गस्य पूजाया. सुन्दर वर्णमस्ति। तथा शिवद्वारा सृष्टेराविर्भाव उक्तोऽस्ति। अत्र भगवतः शिवस्य २८ अवतार-सम्बन्धिना वृत्तानां तीर्थानां च विशेषवर्णनमस्ति। अस्योत्तरभागे नवमेऽ-ध्याये शैवदर्शनानुकूलैव पशु-पाश-पशुपतिशब्दानां विवेचनात्मिका व्याख्या कृताऽस्ति। अत्र शिवलिङ्गोपासनोत्पत्तिः सम्यग्विवेचिताऽस्ति। पुराणमिद शिवतत्त्वमीमांसायै महदुपादेयं प्रामाणिकञ्चास्ति। अत्र पूर्वार्द्धे १०८ उत्तरार्द्धे च ५५ अध्यायाः सन्ति।

अत्र व्रत-दान-श्राद्ध-आशौचादिधर्मशास्त्रीयविषयाणा पर्याप्त वर्णन विद्यते। शिवपरकत्वादस्मिन् पुराणे शैवव्रतानां शैवतीर्थादीना चाधिक वर्णनं स्वाभाविकमेवास्ति। ९२ अध्याये काश्या तत्सम्बद्धाना नानातीर्थाना विस्तृतं विवरण काश्या भौगोलिकविवरणज्ञानायालमस्ति। अस्मिन्नध्याये-काश्या उद्यानाना महच्चमत्कारि साहित्यिक च वर्णनं विविधेषु छन्द सु प्रदत्तमस्ति। कल्पतरुकारेण काशीसम्बन्धिना श्लोकानामधिशत: तीर्थखण्डे उद्धरण दत्तमस्ति। अपरार्कण शिवपूजाया तथा ग्रहणावसरे स्नानविषये षट् श्लोका उद्धृता सन्ति। दानसागरानुसारं षट्सहस्र-संख्याकमेक द्वितीय लिङ्गपुराणमासीद् यस्योपयोगो वल्लालसेनेन कृतोऽस्ति। पुराणमिद शैवाना-व्रतानामनुष्ठानस्य च ज्ञानाय महदुपकारि वर्तते। अस्योत्तरार्द्धे कियन्तो गद्यमया. अध्याया. सन्ति तथा तान्त्रिक-प्रभावेण प्रभाविता. सन्ति। उत्तरार्द्धस्य १३ अध्याये शिवस्याष्टमूर्तीना वैदिकं नाम निर्दिष्टमस्ति। यथा पृथिव्यात्मिकाया शिवमूर्तेर्नाम शर्व, जलीयमूर्तेर्नाम भव, अग्निमूर्तेर्नाम पशुपति, वायुमूर्तेरीशान, अकाशमूर्ते भीम, सूर्यमूर्ते रुद्र:, सोममूर्ते. महादेव., यजमानमूर्ते. उग्र,। प्रतिमूर्ति पत्नीपुत्रयोरपि नाम निर्दिष्टमस्ति। ९६ अध्यये शरभरूपधारिणो भगवत शिवस्य नरसिंहेन सह वार्तालाप ९८ अध्याये विष्णुकृतशिवसहस्र-नामास्ति, यत्र महत्त्वपूर्णं शिवनाम वैदिकनामसग्रहश्चास्ति। लिंगपुराण पाशुपतव्रतस्य स्वरूप महिमान च सम्यक् प्रख्यापति। पाशुपतशैव-सम्प्रदार्थ लिंगपुराणस्य विस्तारोऽस्ति। अस्य सम्प्रदायस्योदयो द्वितीय-तृतीयशताब्द्यो जात असीत्, परन्तु विशेषोऽभ्युदय सप्तमाष्टम-शताब्द्यो. सम्पन्न। अतो लिंगपुराणस्याविर्भावकालोऽपि स एव भवितुमर्हति।

अपि चात्र पुराणे अश्विनीतो नक्षत्राणामारम्भात्, मेषराशित सूर्यादि-ग्रहाणामुल्लेखाद् अवतारेषु वुद्धकल्क्योर्नाम निर्देशाच्चास्य निर्माणकाल: सप्तमशताब्दीत पूर्व सिध्यति। अल्वेरुणिना लिङ्गपुराणस्य निर्देशात्, तत्पूर्वतिना लक्ष्मीधरभट्टेन च स्वकीये कल्पतरौ लिङ्गपुराणस्योद्ध-रणाच्च तत्पूर्वमेव तन्निर्माणं सिध्यति। लिङ्गपुराणस्य नवमेऽध्याये योगान्तरायाणा वर्णनं योगसूत्रस्य व्यासभाष्यादक्षरशो मिलति। अतोऽस्य समयोऽष्टमनवमशताब्दीस्वीकारे न काऽपि विप्रतिपत्तिरस्ति।

**श्रवणादिफलमितिकर्तव्यताज्ञाननिर्देशो यथा—**

लिखित्वैतत्पुराणन्तु तिलधेनुसमाचितम् ।
फाल्गुन्या पूर्णिमाया यो दद्याद्भक्त्या द्विजानये ॥
य पठेच्छृणुयाद्वापि लैङ्ग पापापह नर ।
स भुक्तभोगो लोकेऽस्मिन्नन्ते शिवपुर व्रजेत् ॥
लिगानुक्रमणीमेता पठेद्य श्रृणुयात्तथा ।
तावुभौ शिवभक्तौ तु लोकद्वितयभोगिनौ ॥
जायेता गिरिजाभर्त्तु प्रसादान्नात्र सशय ।

## १२—वाराहपुराणम्

मत्स्यपुराणानुसारं यस्मिन् ग्रन्थे मानवकल्पस्य प्रसङ्गे विष्णुद्वारा पृथ्वीसमक्षे महावाराहस्य माहात्म्य वर्णितमस्ति, तदेवास्ति वाराहपुराण-नाम्ना प्रसिद्धम्, यस्य श्लोकसख्या चतुर्विंशतिसहस्राणि सन्ति—

महावराहस्य पुन र्माहात्म्यमधिकृत्य च ।
विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमुच्यते ॥
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तमा ।
चतुर्विंशत् सहस्राणि तत्पुराणमिहोच्यते ॥

( म० पु० ५३।३८-३९ )

नारदीयपुराणे तु वाराहपुराणस्यैवं लक्षण कृतमस्ति, यद् यस्मिन् पुराणे महर्षिणा व्यासेन मानवकल्पप्रसगे भगवतो विष्णो र्महिमा चतुर्विंशति-सहस्रश्लोकैर्निवद्धोऽस्ति। तेदवास्ति वाराहपुराणम्। तत्र भागद्वय विद्यते-पूर्वो भाग उत्तरभागश्च—

श्रृणु वत्स। प्रवक्ष्यामि वाराह वै पुराणकम् ।
भागद्वययुत शश्वद् विष्णुमाहात्म्यसूचकम् ॥
मानवस्य तु कल्पस्य प्रसङ्गं मत्कृतं पुरा ।
निववन्ध पुराणेऽस्मिश्चतुर्विंशसहस्रके ॥
व्यासो हि विदुषा श्रेष्ठ साक्षान्नाराणणो मुनि. ।

(ना० पु० १०३।१-३ )

नारदीयपुराणोक्तलक्षणेन सहोपलब्धवाराहपुराणलक्षणस्य साम्ये-ि मानवकल्पस्य प्रसगे महावराहमाहात्म्यस्योल्लेखो नास्ति। अत्र हूना व्रतानामुल्लेखोऽस्ति। उपलब्ध वाराहपुराण भविष्योत्तरपुराण-ाद् अनेकै पुराणे सङ्कलित प्रतीयते। यथा मथुरामाहात्म्ये—

शाम्ब प्रख्याततीर्थे तु तत्रैवान्तर्हितेन ।
शाम्बस्तु सह सूर्येण रथस्थेन दिवानिशम् ॥
रवि पप्रच्छ धर्मात्मा पुराण सूर्यभाषितम् ।
भविष्यपुराणमिति ख्यातं कृत्वा पुन र्नवम् ॥

कियतामालोचकाना कथनमस्ति यदत्र बुद्धद्वादशीप्रसग एवमागत: ाद् हिन्दूसमज बुद्धाऽवतारत्वेनाऽभिमत । वस्तुता व्यासस्य त्रिकाल-र्शित्वाद् भविष्यरूपेण बुद्धद्वादशीव्रतस्योल्लेखाऽनुचिता न प्रतिभाति। ाम्प्रति वाराहपुराणे १७००० श्लोका उपलभ्यन्त, किन्तु नारदीयमत्स्य-ुराणानुसारमत्र २४००० श्लोका भवितुमर्हन्ति। अत. पुराणमिदमपूर्ण-ुराणमस्ति। अस्यात्तरे भागे पुलस्त्यकुरुराजसम्वादे सविस्तर तीर्थाना ृथक् पृथक् महात्म्य वहुविध धर्माख्यान पौष्करपर्व प्रभृति प्राप्यते।

वाराहपुराणे भगवद्विष्णुविषयकाणा वहूना व्रतानामुल्लेखा विद्यते। ास्याशद्वय महत्त्वपूर्णं वर्तता एक १५२-१७३ अध्यायेषु मथुरामाहात्म्यं ात्र मथुराया समस्ताना तीर्थाना विस्तृत वर्णनमस्ति। इमे त्रयोद-ाध्याया मथुराया भूगालज्ञानायात्यन्तमुपकारिणा वर्तन्ते। द्वितीय ाचिकेतोपाख्यानम् ( १९३–२१२ अध्यायेषु ) यत्र यमनचिकेतसोः कथया ाहैव स्वर्गनरकया. विवेचनात्मक वर्णन विद्यते। कथेयं कठोपनिषद:-कथया सगताऽपि आध्यात्मिकताभावविवर्जिता विद्यते।

वाराहपुराण भागद्वये विभक्तमस्ति, यत्र २१८ अध्याया: २४००० लोकाश्च सन्ति, किन्तु नारदोक्तसूच्यनुसार श्लोकसख्या न सम्यक् ाघटते। श्लोकेषु न्यूनता वर्तते। प्रतीयते यद् वाराहपुराणस्य पूर्वभाग-ात्रमेव प्रकाशित वर्तते। इद निश्चेतुं न शक्यते यदस्य पुराणस्या-ाशिष्टो भागः पुराणान्तरेषु सम्वद्धोऽथवा सर्वथा लुप्तो जातोऽस्ति।

अत्र प्रकारद्वयेन पाठ. प्राप्यते–एको दाक्षिणात्यपाठो द्वितीयो गौडीय: ाठ.। द्वयोर्विषयैक्येऽपि गौडीयरामायण-दाक्षिणात्यरामायणवद् उभयत्र

अनेकं पाठान्तरमध्यायान्तरञ्चोपलभ्यते । तथाचैकस्यैव विषयस्य वर्णने वहुत्र भिन्ना भिन्ना श्लोका उपलभ्यन्ते । यद्दर्शनेन प्रतीयते यद् द्वावपि भिन्नकर्तृकौ भिन्नौ ग्रन्थौ स्त । उभयत्राध्यायसख्या-पाठभेदयोर्भेदेऽपि एकस्यैव विषयस्य वर्णनमस्ति ।

सुप्रसिद्धे हेमाद्रौ चतुर्वर्गचिन्तामणौ गेण्डाधिपस्य वल्लालसेनस्य दानसागरे च वाराहपुराणीयबुद्धद्वादश्या. श्लोकानाञ्च समुल्लेखादस्य प्राचीनत्वे नास्ति कश्चन सन्देह ।

अत्र व्रतदानश्राद्धाशौचादिधर्मशास्त्रीयविषयाणा पर्याप्त वर्णन विद्यते । वाराहे शाम्वद्वारा नवसूर्यमन्दिरस्थापनाया उल्लेखो विद्यते । यथा भविष्यपुराणे सूर्यस्य त्रयाणा विशिष्टमन्दिराणामुल्लेखो विद्यते तथैव वाराहेऽपि त्रिषु विशिष्टेषु स्थानेषु त्रयाणा सूर्यमन्दिराणा निर्देशोऽस्ति (१) यमुनादक्षिणे भागे कालप्याम् (२) कर्णपुरस्य समीपे (३) पश्चिममुल्ताने च । अस्य पुराणस्य कियत्सु अध्यायेषु केवल गद्यमेवास्ति । कियत्सु गद्य-पद्यञ्चोभय मिश्रितमस्ति तथा अधिका अध्याया. पद्यमया एव सन्ति ।

इदं वैष्णवपुरण विद्यते । अत्र वैष्णवमतस्य विशद प्रतिपादनमस्ति । रामानुजसम्प्रदाये स्वीकृतनारायणस्यादिदेवरूपे प्रतिष्ठाऽराधनादिप्रकार-प्रतिद्वादशिविष्णुपूजनप्रक्रिया - विभिन्नैर्धातुभिर्भगवत्प्रतिमानिर्माणविधि - ज्ञानकर्मसमुच्चय-पाञ्चरात्रादिविषयाणा सम्यग्विवेचना दृश्यते । अस्मात्-पुराणात् कल्पतरौ व्रतविष्यका १५० तथा श्राद्धविषयका. ४० श्लोकाः सगृहीता सन्ति । अतोऽस्य पुराणस्य रचनाकालो नवम-दशमशताब्द्यो. स्वीकरण समुचित प्रतिभाति ।

**एतस्य श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा--**

पठता श्रृण्वताञ्चैव भगवद्भक्तिवर्द्धनम् ।
काञ्चन गरुड कृत्वा तिलधेनुसमाचितम् ।।
लिखित्वैतच्च यो दद्याच्चैत्र्या विप्राय भक्तित ।
स लभेद् वैष्णव धाम देवर्षिगणवन्दित ।।
यो वानुक्रमणीमेता श्रृणोत्यपि पठत्यपि ।
सोऽपि भक्तिलभेद्विष्णौ ससारोच्छेदकारिणीम् ।।

## १३—स्कन्दपुराणम्

मत्स्यपुराणानुसार यस्मिन् पुराणे स्कन्देन तत्पुरुषकल्पप्रसङ्गे अनेक-चरितोपाख्यानाना माहेश्वरधर्माणा च प्रकाशः कृतोऽस्ति, तदेव मर्त्यलोके स्कन्दपुराणनाम्ना विख्यात जात, यत्र शतोत्तरमेकाशीतिसहस्रश्लोकाः विद्यन्ते--

यत्र माहेश्वरान् धर्मान् अधिकृत्य च षण्मुख ।
कल्पे तत्पुरुषे वृत्ते चरितैरुपवृंहितम् ॥
स्कान्द नाम पुराण तदेकाशीति निगद्यते ।
सहस्राणि शत चैकमिति मर्त्येषु पठ्यते ॥
( म० पु० ५३।४१ ४२ )

किन्तु नारदीयपुराणे लिखितमस्ति यद् यस्मिन् पुराणे भगवता कार्तिकेयेन तत्पुरुषकल्पे घटितसिद्धीना प्रदायका धर्मा प्रकाशिता सन्ति, तत् सर्वपापघ्न स्कन्दपुराण प्रोच्यते । अत्र सप्त खण्डा , श्लोकाश्चैकाशीति-सहस्राणि सन्ति । य एतत् पठति शृणोति वा स साक्षात् शिव इव साम-र्थ्यवान् भवति--

शृणु वक्ष्ये मरीचे त्व पुराण स्कन्दसज्ञितम् ।
यस्मिन् प्रतिपद साक्षान् महादेवो व्यवस्थित ॥
पुराणे शतकोटौ तु यच्चैव वर्णितं मया ।
लक्षितस्यार्थजातस्य सारो व्यासेन कीर्तित. ॥
स्कन्दाह्वयस्यात्र खण्डा सप्तैव परिकल्पिताः ।
एकाशीतिसहस्र तु स्कान्द सर्वाघकृन्तनम् ॥
य. शृणोति पठेद्वापि स तु साक्षात्छिव स्थित ।
यत्र माहेश्वरा धर्मा षण्मुखेन प्रकाशिता ॥
कल्पे तत्पुरुषे वृत्ता सर्वसिद्धिविधायका ।
( ना० पु० १०४ । १–५ )

शिवपुराणे तु स्कन्दपुराणस्य परिचयमेवं दत्तमस्ति, यस्मिन् पुराणे स्वय स्कन्दः श्रोताऽस्ति वक्ता च साक्षाद् महेश्वरोऽस्ति तदेकाशीति-सहस्रसख्याकं स्कन्दपुराण निगद्यते--

यत्र स्कन्द स्वय श्रोता वक्ता साक्षान्महेश्वर ।
तत्तु स्कान्द समाख्यातमेकाशीति सहस्रकम् ॥
( शि० पु० उ० स० ४४।१३३ )

**स्कन्दपुराणस्यावतरणम्**

स्कन्दपुराणस्य प्रभासखण्डे लिखितमस्ति यत् सर्वप्रथम कैलास-शिखरे भगवता शङ्करेण ब्रह्मादिदेवाना समक्षं भगवती पार्वती प्रति स्कन्दपुराणं कथित ततस्तया कार्तिकेय प्रति कथित तेन नन्दिनं प्रति प्रोक्तम्, नन्दिना चात्रिकुमाराय, तेन च व्यासाय, व्यासेन सूताय, तेन च ऋषिभ्य· पुराणमिद प्रोक्तमेव स्कन्दपुराणं लोके प्रसिद्धमजायत—

पुरा कैलासशिखरे ब्रह्मादीना च सन्निधौ ।
स्कन्द पुराण कथित पार्वत्यग्रे पिनाकिना ॥
पार्वत्या षण्मुखस्याग्रे तेन नन्दिगणाय वै ।
नन्दिनात्रिकुमाराय तेन व्यासाय धीमते ।
व्यासेन च समाख्यात भवद्भ्योऽह्र प्रकीर्तये ॥

पर रेवाखण्डे स्कन्दपुराणस्यावतरणिका एवमुक्ताऽस्ति-प्रथम स्कन्देन वायो सकासात् पुराणमिद श्रुत ततो वसिष्ठेन श्रुत तत पराशरमुनिना आकर्णित ततो जातुकर्णेन श्रुत ततो महर्षिभि श्रुतम्, तदन्तर परम्परयासंख्याकै ब्राह्मणै· श्रुतम्—

वायो सकाशात् स्कन्देन श्रुतमेतत् पुरातनम् ।
वसिष्ठ श्रुतवान् तस्मात् पराशर तत परम् ॥
तस्माच्च जातुकर्णेन तस्माच्चैव महर्षिभि ।
एव परम्परा प्राप्त शतसख्यै द्विजोत्तमै ॥

स्कन्दपुराण सप्तसु खण्डेषु विभक्तमस्ति ( १ ) माहेश्वरखण्ड ( २ ) वैष्णवखण्ड ( ३ ) ब्रह्मखण्ड. ( ४ ) काशीखण्ड· ( ५ ) अवन्तीखण्ड ( रेवाखण्ड ) (६) तापीखण्ड (नागरखण्ड ) (७) प्रभासखण्डश्च । तत्र क्रमशः १७४, १५३, ७७, १००, ३८७, १७९, ४१४ सकलनया १६७१ अध्याया ८१००० श्लोकाश्च विद्यन्ते । प्रतिखण्ड पञ्चशताधिकद्वादश सहस्राणि श्लोकाः सन्ति—

स्कान्द तु सप्तधा भिन्न वेदव्यासेन धीमता ।
एकाशीतिसहस्राणि शत चैक च सख्यया ॥

तस्यादिमो विभागस्तु स्कन्दमाहात्म्यसयुत. ।
माहेश्वरो समाख्यातो द्वितीयो वैष्णवस्य च ॥
तृतीयो ब्रह्मण प्रोक्त. सृष्टिसक्षेपमूचक ।
काशीमाहात्म्यसयुक्तश्चतुर्थः परिपठ्यते ॥
रेवाया पञ्चमो भाग उज्जयिन्या प्रकीर्तित ।
षष्ठ' कल्पार्चन विश्वं तापीमाहात्म्यसूचक. ॥
सप्तमोऽथ विभागोऽयं स्मृत प्राभासिको द्विजाः ।
सर्वे द्वादश साहस्र विभागा. साधिकाः स्मृता. ॥

( १ ) तत्राद्ये स्कन्दपुराणस्य माहेश्वरखण्डे द्वाववान्तरौ खण्डौ स्तः ( क ) केदारखण्डः ( ख ) कुमारिकाखण्डश्च । यत्र शिवपार्वत्योरनेकविधलीलावर्णन मनोमुग्धकारि विद्यते ।

( २ ) द्वितीयस्य वैष्णवखण्डस्योत्कलखण्डे पूर्या. जगन्नाथमन्दिर-पूजाविधि-प्रतिष्ठा-तत्सम्वधिनामाख्यानाना सग्रह तथा नारदोपदेशेन इन्द्रद्युम्नद्वारा जगन्नाथस्थानान्वेषणस्य विस्तृतं वर्णनमस्ति । जगन्नाथ-पुर्या. प्राचीनेतिहासज्ञानाय खण्डमिदमत्यन्तमुपयोगि वर्तते ।

( ३ ) तृतीयेऽपि ब्रह्मखण्डेऽवान्तरखण्डद्वयमस्ति-ब्रह्मखण्डो ब्रह्मोत्तर-खण्डश्च । तत्र प्रथमे धर्मारण्यनामकस्थानमहात्म्यस्य विशद वर्णनमस्ति, तथा द्वितीये उज्जैन्या वर्तमानस्य महाकालस्य प्रतिष्ठाया पूजायाश्च विशेषतया वर्णन विद्यते ।

( ४ ) काशीखण्डे कश्या लोकोत्तरमहिम्नो वर्णनेन सहात्रस्थिताना समस्ताना देवाना लिङ्गनाञ्चाविर्भावस्य माहात्म्यस्य च विशिष्टं वर्णन विद्यते । काश्या प्राचीनस्य स्वरूपस्य भूगोलस्य च ज्ञानाय खण्डमिद-मत्यन्तमुपयोगि महत्त्वपूर्णञ्चास्ति ।

( ५ ) रेवाखण्डे नर्मदानद्या उत्पत्ते तथा तत्तटे स्थिताना समस्ताना तीर्थाना वर्णनम् उज्जयिन्या विद्यमानाना विभिन्नाना शिवलिगाना-मुत्पत्ते. माहात्म्यस्य च मनोरम वर्णन विद्यते । महाकालस्य वर्णनं विशदरूपेण कृतमस्ति । प्राचीनाया अवन्त्या धार्मिकस्थितेः दिग्दर्शनाय खण्डमिद महदुपयोगि सिध्यति ।

( ६ ) तापीखण्डे नर्मदाया सहायकतापीनदीतटे वर्तमानानामनेकेषा तीर्थाना विवरणमस्ति । नारदीयपुराणानुसारमस्य खण्डस्य नाम नागर-

खण्डमस्ति, यत्र त्रय. परिच्छेदा· सन्ति (१) विश्वकर्मोपाख्यानम् (२) विश्व-कर्मवशोपाख्मानम् ( ३ ) हाटकेश्वरमाहात्म्य च। अस्मिनतृतीये खण्डे गुर्जरीयनागरब्रह्मणानमुत्पत्ते· विशेषवर्णनं विद्यते। प्राचीनभारतस्य सामाजिकदशाविज्ञानाय खण्डदिममत्यन्तं सहायकमस्ति।

( ७ ) प्रभासखण्डे प्रभासक्षेत्रस्य विशद वर्णन वर्तते। द्वारिकापरिसर-भूगोलज्ञानाय खण्डमिदमत्यन्तमुपादेय महत्त्वाधायकञ्च विद्यते। एव-मस्मिन् स्कन्दपुराणे तीर्थवर्णनव्याजेन प्राचीनस्य भारतवर्षस्य भौगोलिक-स्थितेः महत्त्वपूर्ण दिग्दर्शन विद्यते। अत्रानेका.कथा भिन्न-भिन्नरूपेणा-नेकशोऽङ्किताः सन्ति।

अस्मिन् पुराणे स्कन्देन (स्वामिना कार्तिकेयेन) शैवतत्त्वाना निरूपणं कृतमस्ति। अतोऽस्य नामस्कन्दपुराणमिति जातमस्ति। इद हि सर्वेभ्यः पुराणेभ्यो वृहत्काय पुराणमस्ति। श्रीमद्भागवतात् पञ्चगुण पद्मपुराणात् प्राय द्विगुण विद्यते। लक्षश्लोकात्मकान्महाभारताच्च किञ्चिदेव पञ्च-माश न्यून वर्तते।

स्कन्दपुराणस्य शङ्करसहिताया हालास्यमाहात्म्ये लिखितमस्ति यत् स्कन्दपुराण षट्सु संहितासु पञ्चाशत्खण्डैश्च विभक्तमस्ति। तद्यथा—

स्कान्दमद्यापि वक्ष्यामि पुराण श्रुतिसारजम्।
षड्विध सहिताभेदै पञ्चाशत् खण्डमण्डितम्॥
आद्या सनत्कुसारोक्ता द्वितीया सूतसहिता।
तृतीया शाकरी प्रोक्ता चतर्थी वैष्णवी तथा॥
पञ्चमी सहिता ब्राह्मी षष्ठी सा सौरसहिता।

सूतसहितायामासा षण्णा सहिताना श्लोकसख्याऽपि स्पष्टमुक्ताऽस्ति—

ग्रन्थेन चैव षट्त्रिंशत्सहस्रेणोपलक्षिता।
आद्या तु सहिता विप्रा द्वितीया षट्सहस्रिका॥
तृतीया ग्रन्थतस्त्रिशत् सहस्रेणोपलक्षिता।
चतुर्थी सहिता पञ्चसहस्रेणाभिनिर्मिता॥
ततोऽन्या त्रिसहस्रेण ग्रन्थेनैव विनिर्मिता।
अन्या सहस्रत. सृष्टा ग्रन्थतः पण्डितोत्तमाः॥

| | | |
|---|---|---|
| (१) तत्र सनत्कुमारसहितायां श्लोकसख्या | | ३६००० |
| (२) सूतसहितायां | ,, | ६००० |
| (३) शङ्करसहितायां | ,, | ३०००० |
| (४) वैष्णवसंहितायां | ,, | ५००० |
| (५) ब्रह्मसंहितायां | ,, | ३००० |
| (६) सौरसहितायां | ,, | १००० |
| | | ८१००० |

आसा सहिताना विषये विस्तृतो निर्देशो नारदीयपुराण प्रदत्तोऽस्ति। आसु सहितासु सूतसहिता शिवोपासनानिपये एकोऽनुपम खण्डोऽस्ति। सहितेय वैदिकतान्त्रिकोभयप्रकारिकाया शिवपूजाया विशद वर्णनं करोति। अस्या सहिताया अनया विलक्षणतयेव त्रिजनगरसाम्राज्यस्य प्रधानमन्त्रिणा माधवाचार्येण सूतसहिताया तात्पर्यदीपिकाख्या महता प्रामाणीकी व्याख्या लिखिता, या आनन्दाश्रपूनात भागद्वये प्रकाशितास्ति। अस्या सहिताया चत्वारि खण्डानि सन्ति। प्रथमे भागे त्रीणि खण्डानि सन्ति, द्वितीये च भागे एकमेव खण्डमस्ति। प्रथमे शिवमाहात्म्यखण्डे शिवमहिम्नो विशेषरूपेण प्रतिपादनमस्ति। द्वितीये ज्ञानयोगखण्डे आचारधर्मविवेचनानन्तर हठयोग-योगप्रक्रियायाः साङ्गोपाङ्ग विवेचन दृश्यते। तृतीय मुक्ति खण्डे मुक्तेरुपायाना वर्णनमस्ति। चतुर्थ वैभवखण्डमस्ति यत्, सर्वेभ्य. खण्डेभ्यो महत्तम विद्यते। तत्रापि भागद्वयमस्ति- पूर्वभाग उत्तरभागश्च। तत्र पूर्वभागे अद्वैतवेदान्तसिद्धान्ताना भक्त्या सह सामञ्जस्य विधाय महदाध्यात्मिक विवेचन कृतमस्ति। दार्शनिकदृष्ट्या खण्डमिदमत्यन्तमुपादेय ग्राह्य च विद्यते। द्वितीये भागे गीताद्वयमस्ति-ब्रह्मगीता, सूतगीता च। अनयो. आत्मस्वरूपनिरूपण तत्साक्षात्कारोपायश्च निर्दिष्टोऽस्ति। सहितायामस्या शिवप्रसादेनैव समेषा कर्मणा सिद्धे निर्देशोऽस्ति—

शिवप्रसादेन विना न भुक्तय शिवप्रसादेन विना न मुक्तयः।
शिवप्रसादेन विना न देवता शिवप्रसादेन हि सर्वसिद्धय.॥

शङ्करसहिता अनेकेषु खण्डेषु विभक्ताऽस्ति। तत्रा द्याया शिवरहस्य सहिताया सप्त काण्डानि सन्ति। (१) समानकाण्डम् (२) आसुरकाण्डम् (३) माहेन्द्रकाण्डम् (४) युद्धकाण्डम् (५) देवकाण्डम् (६) दक्षकाण्डम् (७) उपदेशकाण्ड च। सौरसहिताया शिवपूजासम्बधिनामनेकेषा

विषयाणा वर्णनमस्ति। सनकुमारसहिता च विशत्यध्यायात्मिका शिवमहत्त्वप्रतिपादिकास्ति अन्याः सहिता साम्प्रतं नोपलभ्यन्ते। एव द्विधा खडात्मक संहितात्मकं च स्कंदपुराणं वर्णितमस्ति, परमिदानी सहितात्मक स्कन्दपुराण पूर्णं नोपलभ्यते, केवलं सप्तखण्डात्मकमेव स्कन्दपुराण सम्प्रति सर्वत्र समुपलभ्यते, प्रकाशितं च विद्यते। वस्तुत. खण्डात्मकं महापुराणमस्ति, सहितात्मक चोपपुराणेषु गण्यते।

स्कन्दपुराणस्य प्रथमखण्डे शिवशर्मनामकस्य ब्राह्मणस्य निर्वाण-प्रसङ्गे भारविकवे· किरातार्जुनीयस्य महाकाव्यस्य छटा दरीदृश्यते। काशीखण्डे च बाणभट्टशैलीवत् श्लेषा-परिसख्यालङ्कारयो· दिग्दर्शन ९-२० श्लोकद्वारा महन्मनोमुग्धकारि वर्तते—

विभ्रमो यत्र नारीणा विद्वत्सु न कर्हिचित्।
नद्य कुटिलगामिन्यो न यत्र विषये प्रजा॥
तमोयुक्ता क्षपा यत्र बहुलेषु न मानवा।
रजोयुक्ता स्त्रियो यत्र न धर्मबहुला नरा॥
बाणेषु गुणविश्लोपो बन्धोक्ति पुस्तके दृढा।
स्नेहत्याग सदैवास्ति यत्र पाशुपते जने॥
यत्र क्षपणका एव दृश्यन्ते मलधारिण।
प्रायो मधुव्रता एव यत्र चञ्चलवृत्तय॥
(काशीखण्डे २४।९,१०,१९,२०)

काश्या वैशिष्ट्य व्यञ्जयता व्यासेनोक्तमस्ति यद्-अयोध्या-अवन्ती-मथुरा-द्वारिका-काञ्ची-(हरिद्वारा) मायापुरीषु मृता तासा षण्णा पुरीणा प्रभावात् पापिनोऽपि पुरुषा· स्वर्गे गत्वा पुण्यभोगान्तर काश्या जन्म गृहीत्वा मृत्योरनन्तर सतत मुक्ता भवन्ति। अर्थात्ता षट् पुर्यः न सन्ति साक्षान्मुक्तिदायिका, किन्तु तत्र मरणानन्तर काश्या जन्म लब्ध्वैव शाश्वती मुक्ति प्राप्तु शक्यते, नान्यत्र। अतोऽस्ति काशी साक्षान्मुक्तिदात्री, अन्या पुर्यस्तु परम्परया मुक्तिदायिन्य सन्ति। तस्मात्ता काशिप्राप्तिकराः, काशी तु साक्षान्मुक्तिदायिनी। अतः काश्या मरणान्मुक्तिरित्यपि सगच्छते–

अयोध्यायामथावन्त्या मथुरायामथापि वा।
द्वारवत्याञ्च काञ्च्या वा मायापुर्या मृता नृप॥
अपि पातकिनो ये च कालेन निधनं गताः।
ते हि स्वर्गादिहागत्य काश्या मोक्षमवाप्नुयु॥
(काशीखण्ड २४।६३, ६४)

एतानि यानि प्रोक्तानि काशीप्राप्तिकराणि च।
प्राप्य काशी भवेन्मुक्तो जन्तु र्नान्यत्र कुत्रचित् ॥
( का० ख० २५।४२ )

श्रुति-स्मृतिविहीना ये शौचाचारविवर्जिता:
येषा क्वापि गति र्नास्ति तेषा वाराणसी गति ॥
( का० ख० ३२।७९ )

विपन्नाना च जन्तूना यत्र विश्वेश्वर स्वयम् ।
कर्णे जाप प्रकुरुते कर्मनिर्मूलनक्षमम् ॥
( का० ख० २१।९८ )

काश्या सुखेन कैवल्य यथा लभ्येत जन्तुभि ।
योगयुक्त्याद्युपायैश्च न तथान्यत्र कुत्रचित् ॥
( का० ख० ४१।१७१ )

काशी काशीति काशीति जपतो यस्य सस्थिति ।
अन्यत्रापि सतस्तस्य पुरो मुक्ति प्रकशते ॥
क्षेममूर्तिरिय काशी क्षेममूर्तिर्भवान् भव ।
क्षेममूर्तिस्त्रिपथगा नान्यत् क्षेमत्रय क्वचित् ॥
( का० ख० ६४।३८, ३९ )

काश्या प्राणान् समुत्सृज्य स्मरन् विश्वेश्वर शिवम् ।
न जातु जायते जन्तु र्जननीजठरे पुन ॥
( का० ख० ४१।७६ )

काशी सिद्धस्थली तथा भगवतो. शिवाशिवयो अविमुक्त क्षेत्रमस्ति, यत्र श्रीगगा, श्रीविश्वनाथ , जगदम्वा अन्नपूर्णा च निरन्तर जागरुका विराजन्ते, एषा त्रयाणा सदा सान्निध्येऽत्र पारमार्थिकी सिद्धि मुक्तिश्च प्राप्यते इत्यत्र किमाश्चर्य सम्भवति—

गङ्गा विश्वेश्वर काशी जागर्ति त्रितय यत ।
तत्र नैश्रेयसी लक्ष्मीर्लभ्यते चित्रमत्र किम् ॥
( का० ख० ३५।१० )

भगवन्त सदाशिव प्रति काश्या महिमान व्यञ्जयन्त्या भगवत्या: पर्वत्या उक्तौ घकारानुप्रासालङ्कार स्कन्दपुराणं काव्यसौन्दर्येणालङ्करोति—

धराधरेन्द्रस्य धरातिसुन्दरा न मा तथास्यापि धिनोति धूर्जटे ।
धरागतापीह न या धुन्धरा पुरी धुरीणा तव काशिका यथा ॥
( का० ख० ४४।३१ )

एव स्कन्दपुराणे भौगोलिकक्षेत्राणा विशद वर्णनं प्रस्तुतमस्ति, येनानुमन्धातृणा महत्साहायमवाप्तु शक्यते । काशीखण्डे दिशा नामनिर्देश-पूर्वक काशीस्थशिवलिङ्गना स्थितिः कूप-वापी-सरस्तडागाना विवरणं भूगोलज्ञाने महत् सहायक सिद्धयति । धार्मिकभौगोलिकदृष्ट्या अवन्तीखण्डीयनर्मदानद्या. तीरस्थतीर्थाना विवरणोपस्थापन भूगोलज्ञाने महत् साहाय्य दातु शक्नोति । सर्वमिदमतिमहत्त्वाधायक विद्यते ।

मिताक्षरा-कल्पतरुप्रभृतिपु प्राचीनेषु निवन्धेषु स्कन्दपुराणस्य बहूनि वचनानि उद्धृतानि सन्ति । काणेमहोदयस्य कथनानुसार कल्पतरौ स्कन्दपुराणस्य व्रतविषयका. १५ श्लोका तीर्थविषयका ९२ श्लोका· दानविषयका. ४४ नियतकालविषयका ६३ राजधर्मविपयका १८ श्लोका उद्धता सन्ति । तथा दानविषयका ४८ श्लोकाः सगृहोताः सन्ति । पुराणमिदमियद्विशालकायमस्ति यदस्मिन् प्रक्षिप्तानामशाना योजनाय प्रर्याप्तोऽवसरो विद्यते । अतोऽस्य समयो यथार्थरूपेण निश्चेतुं न शक्यते । अथापि हरप्रसादशास्त्रिणा नेपालीयराजकीयपुस्तकालये सप्तमशताद्या लिखित एक स्कन्दपुराणस्य हस्तलेखो दृष्टिगोचरी कृतो यदधारेऽस्य पुराणस्य रचनाकाल शप्तमशताब्दीतः पूर्वं स्वीकार. समुचित प्रतिभाति ।

डा० विल्सनप्रभृतय पाश्चात्या विद्वास स्कन्दपुराणमेकादश शताब्दीरचना मन्यन्ते । तेषामते जगन्नाथमन्दिरस्याधुनिकत्वादस्य प्राचीने पुराणे वर्णन न सम्भवति, किन्तु एतेषामेष तर्काभासो विचारनिकषाया न युक्तियुक्तो भवितुमर्हति । ऋग्वेदस्य यद्दारुप्लेवते, इति मन्त्रेऽपि जगन्नाथमन्दिरस्य वर्णनात् सर्वसिद्धसिद्धान्तोऽस्ति यत् देवमूर्तय क्षेत्र माहात्म्यञ्च प्राचीनकालीनमेवास्ति मन्दिरे जीर्णेशोर्णेसति नवीन निर्मीयते । इदानीमेव स्वतन्त्रताप्राप्त्यनन्तर भारतसर्वकारेण जगत्प्रसिद्धस्य सोमनाथमन्दिरस्य मुहमदगोरीद्वाराभग्नीकृतमूर्तेश्चाभावात् भग्नं मन्दिर पुनर्निर्माय मूर्तिस्थापनद्वारा जीर्णोद्धार वल्लभभाईपटेल-सत्प्रयत्नेन जातोऽस्ति । किं जीर्णोद्धारात् सोमनाथो नवीनोऽस्ति । नहि, सोमनाथस्तु प्राचीन एवास्ति नष्टाया मूर्तेः भ्रष्टस्य च मन्दिरस्य

पुनर्निमाण कृत्वा यथा जीर्णोद्धारमात्र जातम् । तथैव जगन्नाथमन्दिरस्य पुनर्जीर्णोद्धात् तद् नाधुनिको भवितुमर्हति । जीर्णोद्धारमहत्त्वं यथा--

कालेन भग्नमायन्नं जोर्णोद्धार करोति य. ।
इह तस्य फलस्यान्त प्रलयेऽपि न जायये ।।
( का० ख० २१।११६ )

अन्यच्च ९३० ईशनोये लिखिता काशीखण्डस्यैका प्रति· विश्वकोश-कार्यालये सुरक्षिता विद्यते । म०म हरप्रसादशास्त्रिणा च नेपालस्यराज-कीयपुस्तकालये सप्तमशताब्द्या लिखित स्कन्दपुराणस्यैक पुस्तकमुपलब्ध यद् वर्तमानस्कन्दपुराणत्त पूर्णं मिलति । अतो डा० विल्सनमहोदया-दीनां मत सर्वथा अप्रामाणिकममान्यञ्च विद्यते ।

स्कन्दपुराणं हि अनेकाश्चर्यजनकोपाख्यानै परिपूर्ण पुराण विद्यते। शिवोपासकाना कृते परममाननीय वर्णाश्रमव्यवस्थापरिपालकानाञ्च सर्वथादरणीय समेषा श्लाघनीयञ्चास्ति । अत्र वहूना माहात्म्यानामनेकेषा तीर्थाना सद्भावाच्चेद पुराण भौगोलिकाना विदुषा कृते अत्यन्तमादरणी-यमुपादेयञ्चास्ति । अत्र भारतवर्षस्यासख्यतीर्थ-नद-नदी-पर्वत-सरिता वर्णानेन सह प्राचीनभारतस्य महदुत्तम भौगोलिक चित्रण विद्यते तथा तत्सम्बन्धे वहुविधा अद्भुता कथा प्रदत्ताः सन्ति, याभि र्भारतीयप्राचीन भूवृत्तान्तस्य पूर्ण. परिचयोऽवाप्यते । अत. पुराणमिद भूगोलम-ध्येतृणां निदुपामत्यन्तमादरभाजनमुपादयेञ्चास्ति ।

अत्र कियत्य कथा भिन्नभिन्नरूपेण वहुशः समागताः सन्ति, तत् खण्डात्मके ग्रन्थे कस्या अपि कथाया वहुवारमागनमनुचित, न प्रति-भाति । इय हि व्यासदेवस्य विशिष्टा शैली प्रतीयते ।

**श्रीसत्यनारायणव्रतकथा**

भारतवर्षस्य विभिन्नेषु प्रान्तेषु श्रीसत्यनारायणव्रतकथाया महत् प्रचलनमस्ति भारतस्य कोणे कोणे प्राय· प्रत्येकावसरे महत्या श्रद्धया भक्तिपूर्वकमिय कथा कथ्यते, श्रूयते, सत्क्रियते ची कियन्त. स्वाभीष्टसिद्धये कथेय वरदानरूपेणाद्रियन्ते । एव धार्मिके जगति अस्या कथाया समस्ते भारते महान् प्रचार प्रसार. समादरश्च विद्यते । लघुरुपाय एवास्या: कथाया वैशिष्ट्य विद्यते । यस्मिन् कस्मिन्नप्यहनि अल्पायासेन अल्पव्यय-साध्येय कथा श्रोतु शक्यते ।

श्रीसत्यनारायणव्रतकथाया: प्रत्यध्यायमन्ते इत्थं पुष्पिका प्राप्यते-इति श्री स्कन्दपुराणे रेवाखण्डे सत्यनारायणव्रतकथायाममुकोऽध्याय ।

अत. कथेय स्कन्दपुराणस्य रेवाखण्डीया मन्यते, परन्तु अस्या कथाया सम्बन्धे अधुनिकानां समालोचकानामयमाक्षेपोऽस्ति यदिय कथा न स्कन्दपुरणोयास्ति यतोहि वेंकटेश्वरप्रेस, बम्बईत तथा नवलकिशोर प्रेस, लखनऊतो मुद्रिते स्कन्दपुराणे कथेय नोपलभ्यते। सहैव द्वितीय आक्षेपोऽयमस्ति यत्स्कन्दपुराण विशेषरूपेण शैवपुराणमस्ति। अत स्कन्दपुरणोय-रेवाखण्ड कथावस्तुनो विष्णुव्रतकथाभि. सह कश्चन सम्बन्धो न सम्भवति। तृतीयश्चाक्षेमोऽस्ति यत् श्रीसत्यनारायण व्रतकथा भविष्यपुराणे प्रतिसर्ग-पर्वणि षट्सु ( २४-२९ ) अध्यायेषु अप्युपलभ्यते। प्रतीयते यत् कथाया अस्या. पृथक्पुस्तकरूपदानसमये भ्रमवशात् पुष्पिकायमितिभविष्यपुराण-प्रतिसर्गपर्वणि अलिखित्वा इति श्रीस्कन्दपुराणे रेवाखण्डे आदि लिखितम्। अत इयं सत्यनारायण व्रतकथा न स्कन्दपुराणोया भवितुमर्हति।

अत्रोच्यते-इयत्या दीर्घकालीनपरम्परायामक्षुण्णरूपेण प्रचलिताया. सत्यनारायणव्रतकथाया विषये उक्त अक्षेप आपाततो रमणीय. प्रतीयते। यतोहि आसा कल्पनाया न कश्चित् प्रामाणिको मौलिक. शास्त्रीयो वा आधार. स्थातु सम्भवति।

(१) यद्यपि वेंकटेश्वरप्रेसबम्बईतस्तथा नवलकिशोरप्रेस लखनऊत. प्रकाशितस्कन्दपुराणस्य रेवाखण्डे कथेयमनुपलभ्यते, किन्तु बंगवासीप्रेस कालिकातातस्तथा गुरुमण्डलग्रन्थमालातो मुद्रितस्य स्कन्दपुराणस्य रेवा-खण्डे कथेय चतुर्षु २२२-२२६, अध्यायेषु नून समुपलभ्यते। प्रचलित-पुस्तकेषु केवलमध्यायेषु अन्तरमस्ति। स्कन्दपुराणीयरेवाखण्डस्य २२५ अध्यायो महानस्ति। अतोऽध्यायद्वये विभक्तस॰। येन प्रचलितेऽषु पुस्तकेषु पञ्चाध्याया. सञ्जाताः। एवमन्येषामध्यायाना विभागं कृत्वा कस्मिंश्चित् पुस्तके सप्ताध्याया अप्युपलभ्यन्ते। अतः कथेयं स्कन्दपुरा-णीयैवास्तीत्यत्र न काचिदस्ति विप्रतिपत्ति। अपि च यवनकालस्य क्रान्तिसमयेऽपि वहवो भागा लुप्ता अत इयमपि कथाक्वचन नोपलभ्यते।

(२) द्वितीय आक्षेपोऽपि सर्वथा निराधार एवास्ति। यतो रेवाखण्डे यत्र नर्मदादक्षिणे वर्तमानानां शिवलिङ्गानां मन्दिराणाञ्च समुल्लेखोऽस्ति तत्रैवोत्तरतटवर्तिना विष्णुमन्दिराणामपि वर्णनमस्ति। रेवाखण्डस्य त्रिपुषु १९३-१९५ अध्यायेषु विष्णो र्महिम्नो लक्ष्मीनारायणयोर्विवाहस्य च

विशेणवर्णनं विद्यते। एव रेवाखण्डे विष्णोर्मान्यतायाः उपलब्धौ सत्या रेवाखण्डस्य कथावस्तुनो विष्णुव्रतकथाभि सह न कश्चिदस्ति सम्बन्ध इति कथन सर्वथा असङ्गतमप्रामणिकमुपहासास्पद च प्रतीयते।

(३) भविष्यपुराणस्य प्रतिसर्गपर्वणि अपि सत्यनारायणव्रतकथाऽवश्य-मुपलभ्यते। स्कन्दपुराणीयरेवाखण्डस्य कथया तुलनाया क्रियमाणाया प्रतीयते यद् रेवाखण्डापेक्षया प्रतिसर्गपर्वणः कथा विस्तृताऽस्ति। कियता नाम्ना परिवर्तनेन सह कथा यथातथैवास्ते, किन्तु रेवाखण्डीयसाधुराम-वणिज. कथाया सत्यस्योपेक्षाया यो मार्मिको दु खदो दुष्परिणाम. प्रदर्शितोऽस्ति। स कियान् स्वाभाविक. क्रमबद्ध श्रद्धोत्पादकश्चास्ति। तस्य मूलकथामनने न काचिदस्ति विचिकित्सा।

न केवलं भविष्यपुराणस्य प्रतिसर्गपर्वण्येव अपितु प्रचलितश्रीसत्य-नारायणव्रतकथाया प्रथमोऽध्यायः पद्मपुराणस्य क्रियायोगसारखण्डस्य प्रथमाध्यायेऽप्यानुपूर्वीरूपेणोपलभ्यते, तर्हि कि सा कथा पद्मपुराणीया अपि स्वीक्रियेत ? वस्तुतः कियत्सु पुराणेषु एकस्या एव कथाया. कुत्रचित् लघुरूपेण क्वचिच्च विस्तृतरूपेण सन्निवेशो जातोऽस्ति। अय त्रिकाल-दर्शिनः ऋतम्भरप्रज्ञस्य कृतकरामलकवत्समस्तपदार्थस्य भगवतो व्यासस्याद्भुतप्रतिभाया परिणाम एव।

स्कन्दपुराणस्य रेवाखण्डीयचतुरध्यायकथाया एव भविष्यपुराणे प्रतिसर्गपर्वणि षट्सु अध्यायेषु उपबृहण जातमस्ति। तत्र च चन्द्र-चूडादीना राज्ञा कथा विशेषरूपेण वर्णिताऽस्ति।

रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका इति अमरकोश-प्रामाण्यात् नर्मदारेवाया एवास्ति नामान्तरम्। सत्यनारायणव्रतकथाया भौगोलिक क्षेत्र सर्वत्र नर्मदायाः नद्याः तटमेवाभिहितमस्ति, यत् स्पष्टतया स्वकीयस्य मूलस्य रेवाखण्डस्यैव अविस्मरणीय सकेत करोति।

**एतस्य श्रवणदानादिफलनिर्देशो यथा—**

लिखित्वैतत्तु यो दद्याद्धेमशूलसमाचितम्।
माघ्या सत्कृत्य विप्राय स शैवे मोदते पदे॥

## १४—वामनपुराणम्

प्राय. प्रतिपुराणमष्टादशमहापुराणानामुल्लेखो विद्यते। तत्र वामनपुराण गणनाक्रमेण चतुर्दशं महापुराणमभिमतमस्ति यस्य श्लोकसंख्या दशसहस्र वर्तते। तथाहि शौनक प्रति सूतवचनम्—

ततस्तु वामन नाम चतुर्दशतमं स्मृतम्।
सख्यया दशसाहस्र प्रोक्त कुलपते पुरा॥
(स्क०पु०, रे० ख० १।४१)

स्वय वामनेनापि फलश्रुतिसहित एष एव संख्याक्रमोऽभिहितो यस्य श्रवणमात्रेण महान्त्यपि पापानि प्रणश्यन्ति।

चतुर्दशं वामनमाहुरग्र्यं श्रुते च यस्याघचयाश्च नाशम्।
प्रयान्ति नास्त्यत्र च सशयो मे महान्ति पापान्यपि नारदाशु॥
(वाम० पु० ६९।११)

अखिललोकनियन्तुर्भगवतो विष्णोर्वामनावतारस्य सविस्तरं रुचिरचरित्रप्रतिपादनादस्य पुराणस्य नाम वामनपुराणम् इति जातम्। नारदीयपुराणे वामनपुराणस्य लक्षणनिरूपणप्रसङ्गे प्रोक्तमस्ति यद् यस्मिन् पुराणे लोकपितामहेन ब्रह्मणा त्रिविक्रमस्य (भगवतो वामनस्य) चारु चरित्रमभिलक्ष्य कूर्मकल्पानुसार धर्मार्थकामविषयकस्य कथानकस्य निर्देश. कृतोऽस्ति नद् दशसहस्रश्लोकसख्याकं श्रोतुर्वक्तुश्च कल्याणकरं भागद्वयात्मकं वामनपुराणमुच्यते।

शृणु वत्स! प्रवक्ष्यामि पुराणं वामनाभिधम्।
त्रिविक्रमचरित्राढ्यं दशसाहस्रसख्यकम्॥
कूर्मकल्पसमाख्यान वर्गत्रयकथानकम्।
भागद्वयसमायुक्तं श्रोतृ-वक्तृसुखावहम्॥
(नारदीयपुराणम् १।१०५।१,२)

परन्तु मत्स्यपुराणे स्कन्दपुराणस्य प्रभासखण्डे च वामनपुराणस्य स्वरूपमेवमभिहितमस्ति यद् यस्मिन् पुराणे चतुराननेन ब्रह्मणा कूर्मकल्पानुसारं भगवतो वामनस्य महात्म्यमवलब्य त्रिवर्गस्य विषया वर्णिताः सन्ति, दशसहस्रश्लोकात्मक तद् वामनपुराणं प्रोच्यते—

त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुख. ।
त्रिवर्गमभ्यधात् तच्च वामन परिकीर्तितम् ।।
पुराण दशसाहस्र कूर्मकल्पानुग शिवम् ।
( म० पु० ५३।४४-४५, स्क० पु० ७।२।६३, ६४ )

एवं वामनपुराणे द्वौ भागौ स्त पूर्वभाग, उत्तरभागश्च। नारदीयपुराणानुसारमुत्तरभागस्य वृहद्वामनमपि नामान्तरमस्ति। तत्र चतस्र: सन्ति सहिता.—( १ ) माहेश्वरी सहिता, ( २ ) भाववतीसंहिता, ( ३ ) सौरीसहिता, ( ४ ) गाणेश्वरीसंहिता च। माहेश्वरीसहिताया भगवत. कृष्णस्य तद्भक्तानाञ्च कीर्तनमस्ति। भागवतीसहिताया। भगवत्या जगदम्बाया अवतारकथा विद्यते। सौरीसंहिताया सर्वपापापनोदकस्य भगवतो भास्करस्य महिमा वर्णितोऽस्ति। गाणेश्वरीसहिताया च विघ्नव्यूहविनाशकस्य विनायकस्य विचित्र चरित्र चर्चितमस्ति। चतसृष्वपि आसु संहितासु प्रत्येकं सहस्र सहस्र श्लोका सन्ति, येषा पूर्णा संख्या चतु: सहस्र भवति—

शृणु तस्योत्तरं भागं वृहद्वामनसञ्ज्ञकम् ।
माहेश्वरी भागवती सौरी गाणेश्वरी तथा ।
चतस्र: सहिताश्चात्र पृथक् साहस्रसंख्यया ।।

( नारदीय पु० १।१०५।१३, १४ )

चतु सहस्रश्लोकात्मकश्चसृसहितासनाथो वृहद्वामनसज्ञको वामनपुराणस्योत्तरो भाग सम्प्रतं नोपलभ्यते, किन्तु केवलं लघुभागवतामृते, वीरमित्रोदयादिनिबन्धग्रन्थेषु वृन्दावनस्थाना गोस्वामिना कृष्णभक्तिविषयकग्रन्थेषु च वृहद्वामनस्य कतिपये श्लोका दृष्टिगोचरीभवन्ति। रूपगोस्वामिन उज्ज्वलनीलमणौ मुनीना गोपीभावप्रसङ्गे, जीवगोस्वामिनश्च भागवतसन्दर्भे कृष्णलोकवर्णनसमङ्गे वा वृहद्वामनस्य निर्देशो विद्यते। परं केवलमिदानीं वामनपुराणस्य पूर्वो भाग एवोपलभ्यते, यत्र वेङ्कटेश्वरसंस्करणानुसार प्राय. षट्सहस्रश्लोका. पञ्चनवतिश्चाध्याया. सन्ति। तथा च नारदीयानुक्रमणिकानुसार वामनपुराणस्य पूर्वभागीयविषयास्तु ९५ अध्यायेषु विभक्ता वेङ्कटेश्वरसस्करणे यथार्थतो मिलन्ति, किन्तु तदुत्तरभागस्य ४,००० श्लोकानामस्तित्व न क्वचन मुद्रितेषु पुस्तकेषु, नापि हस्तलिखितेषु वर्तते, अपि च वामनपुराणस्याध्यायनिर्णय-

सम्बन्धे वङ्गकाश्मीरदक्षिणोत्तरभारतीयेषु विभिन्नेषु हस्तलेखेषु महती विभिन्नता दृश्यते । कुत्रचित् ८४, कुत्रचन ८९, क्वचित् ८५, क्वचन च ६७ अध्याया उपलभ्यन्ते । तथाहि देवनागरीहस्तलेखे ८४ अध्याया· सन्ति । तेलगूहस्तलेखे ८९ अध्याया विद्यन्ते । शारदालिपिहस्तलेखे ८५ अध्याया वर्तन्ते । आचारहस्तलेखे शृगेरीमठहस्तलेखे च ६७ अध्याया अङ्किताः सन्ति ।

एवं कलिकातातो महेशचन्द्रपालसम्पादिते पञ्चाननतर्करत्नसम्पादिते च वङ्गाक्षरसकरणे जगद्धितेच्छुप्रेसपूनातो वेङ्कटेश्वरप्रेसबम्बईतश्च मुद्रिते देवनागरीसंस्करणे वा वामनपुराणस्य श्लोकसंख्याया विभिन्नता दृश्यते। अतो वामनपुराणस्य वास्तविकं स्वरूपनिर्द्धारण नासम्भव वक्तु शक्यते, परन्तु दुरूहमवश्यमस्ति ।

## पुराणलक्षणसंघटनम्

नारदीयपुराणनुसारं वामनपुराणस्य पूर्वभागीयविषयसूच्या येषां येषा विषयाणा येन येन क्रमेणोल्लेखो विद्यते, तेषा समेषा विषयाणा तेनैव क्रमेणोपलब्धिरद्यत्वे उपलब्धवामनपुराणे भवति । यद्यपि मरुतामुत्पत्तिप्रसङ्गे ससाना मनूना मन्वन्तराणाञ्च निरूपण दृश्यते, शुक्राचार्यस्य कन्याया अरजायाश्चोपाख्याने कियतामिक्ष्वाकुवशोद्भवानां राज्ञा प्रसङ्ग उपलभ्यते, तथापि वर्तमानवामनपुराणे पुराणपञ्चलक्षण न सम्यक् सघटते । अत पुराणमिदमपूर्णपुराणेषु गण्यते ।

## वामनस्य महापुराणत्वसिद्धिः

वामनपुराणं महापुराणमुत उपपुराणमिति सन्दिहानाः केचन कथयन्ति यद् गरुडपुराणे महापुराणगणनाया वामनपुराणस्यानुल्लेखादुपपुराणगणनाया च तन्नामनिर्देशादेतन्महापुराण भवितु नार्हति, अपि तूपपुराणकोटावेवास्य प्रवेश. समुचितः । अत एव डॉ० हाजरामहोदयेन स्वकीये पुस्तके वर्तमानवामनपुराणमुपपुराणं साधयितु भागीरथ· प्रयासो विहितोऽस्ति ।

परमन्ये विपश्चितो भूयसा व्यपदेशा भवन्तीति न्यायमाश्रित्व शेषेषु पुराणेषु महापुराणगणनाया वामनपुराणस्य स्पष्टं नामनिर्देशादिद महा-

पुराणमेवास्तीति ब्रुवते। अत एव अरवयान्त्रिणा अल्बेरुणिना स्वग्रन्थे यत् पुराणानां सूचीद्वय प्रस्तुतम्, तत्रोभयत्रापि वामनपुराणस्य महापुराणान्तर्गत नाम निर्दिष्टमस्ति। तस्मादन्वर्थनाम्न स्वल्पाकारस्यापि वामनपुराणस्य महापुराणत्वे नास्ति काऽपि संशीति ।

## वामनपुराणावतरणपरम्परा

वामनपुराणस्यावतरणपरम्पराया. प्रदर्शने नारदीयपुराणे प्रोक्तमस्ति यत् सर्वप्रथम वामनपुराण पुलस्त्येन मुनिना देवर्षये नारदाय समुपदिष्टम्। स च महर्षि व्यास प्रति प्रोक्तवान्। तेन स्वशिष्याय लोमहर्षणाय सूताय उपदिष्टम्। स च नैमिषारण्ये शौनकादीन् मुनीन् प्रति प्रोवाच। इत्येवं परम्परया वामनपुराणं लोके ख्यातिमुपगतम्—

इत्येतद् वामनं नाम पुराण सुविचित्रकम्।
पुलस्त्येन समाख्यातं नारदाय महात्मने ॥
ततो नारदत प्राप्त व्यासेन सुमहात्मना।
व्यासात्तु लब्धवान् वत्स! तच्छिष्यो लोमहर्षण ॥
स चाख्यास्यति विप्रेभ्यो नौमिषीयेभ्य एव च।
एव परम्पराप्राप्त पुराणं वामन शुभम् ॥
(ना० पु० १।१०५।१७,१८)

एव नारदीयपुराणानुसार वामनपुराणस्यास्ति वक्ता पुलस्त्यो महामुनि, प्रश्नकर्ता श्रोता च देवर्षिर्नारदो वर्तते।

## वामनस्य वैष्णवधर्मप्रतिपादकता

वामनपुराणस्योपक्रमोपसंहारपर्यालोचनया प्रतीयते यदिद पुराण वैष्णवधर्मेणास्ति सम्बद्धम्। अस्यारम्भेऽवसाने च वैष्णवधर्मस्य विष्णुभक्ताना विष्णुमन्दिरस्य तन्निर्मातॄणा च महतो प्रशंसा कृताऽस्ति, विभिन्नै पुष्पै. पत्रैश्च विष्णोः पूजाया विशद वर्णन विद्यते। अपि च वैष्णवधर्मस्यातिप्रसिद्धं मङ्गलाचरण वामनपुराणस्यारम्भेऽक्षिलक्ष्यीक्रियते—

नारायण नमस्कृत्य नर चैव नरोत्तमम्।
देवी सरस्वती व्यासं ततो जयमुदीरयेत् ॥

अपि च मत्स्यपुराणे वामनपुराणस्य दानेन विष्णुलोकप्राप्तेरुल्लेखादस्य पुराणस्य निर्बाध वैष्णवधर्मप्रतिपादकता सिध्यति—

य शरद्विषुवे दद्याद् वैष्णव यात्यसौ पदम् ।

( म० पु० ५३।४५ )

## वामने स्तोत्रसख्या

वामने विवधानि पञ्चविंशति स्तोत्राणि सन्ति। तत्र द्वादश स्तोत्राणि विष्णुसम्बन्धीनि सन्ति, यानि भगवतो विष्णोर्विभिन्न वैशिष्टय बोधयन्ति। अष्टौ स्तोत्राणि सन्ति, आशुतोषस्य भगवत. शिवस्य स्वरूप-व्यञ्जकानि। चतसृणा देवी-पार्वती-सरस्वती-कात्यायनीना चत्वारि स्तोत्राणि सन्ति यानि तासामुत्कृष्ट प्रभाव प्रकटयन्ति। एक स्तात्र च सुदर्शयस्य वैभव सूचयति।

## वामनपुराणस्य वैशिष्टचम्

वामनपुराणस्य सर्वतो विशिष्ट वैशिष्टयमस्ति यदिद पुराण न केनापि सम्प्रदायविशेषेण सम्वद्धमस्ति। प्रत्युत अत्र भगवतो विष्णो, शिवस्य देव्याश्च समान सम्मानं प्रदर्शितमस्ति। नात्र साम्प्रदायिकभावनाया ईषदपि गन्धो दृश्यते, न वा क्वचन तान्त्रिकादिपूजाविधेरुल्लेख. अक्षिगोचरो भवति। अत एवेद पुराण महत्त्वपूर्णेषु महापुराणेष्वन्यतमत्वेन ख्यातिमुपगतमास्ते।

## वामनस्य राजसपुराणत्वम्

वैष्णवपुराणत्वेन प्रतीयमानमपि वामनपुराण पद्मपुराणस्योत्तर-खण्डे भविष्यपुराणस्य प्रतिसर्गपर्वणि च राजसपुराणतया प्रोक्तमति—

ब्रह्माण्ड ब्रह्मवैवर्त मार्कण्डेय तथैव च।
भविष्य वामन ब्राह्म राजसानि न्विोध मे॥

( पद्मपु०, उ० ख० २३६।२० )

मत्स्य. कूर्मो नृसिहश्च वामन शिव एव च।
वायुरेतत्पुराणानि व्यासेन रचितानि वै॥
तामसा षट् स्मृता वीर! कर्मकाण्डमया भुवि।

( भ० पु०, प्र० प० २८।११ )

किञ्च, पद्मपुराणे सात्त्विकानि पुराणानि मोक्षप्रदानि, प्रोक्तानि, राजसानि स्वर्गसुखसाधकानि कथितानि। अतो राजसस्यास्य वामन-पुराणस्य स्वर्गप्रदत्व स्पष्ट सिध्यति—

सात्त्विका मोक्षदा प्रोक्ता राजसा स्वर्गदा शुभा।
(पद्मपु०, उ० ख० २३६।२१)

## हरेरवयवत्वकल्पना

पद्मपुराणस्य स्वर्गखण्डे तत्तत्पुराणानि भगवतो विष्णोर्विभिन्नाङ्गत्वे-नोत्प्रेक्षितानि सन्ति। तत्र वामनपुराण हि हरेस्त्वक्त्वेन कल्पितमस्ति। तस्येद तात्पर्यमवसीयते यद् यथा समस्त शरीर त्वचा आवृत विद्यते, तथैव वामनपुराणमपि व्यापकतया भगवतो विष्णोर्महत्त्वमभिव्यञ्जयति।

## वामनपुराणविषय.

वामनपुराणे देवर्षिनारदस्य प्रश्नानन्तर महर्षिपुलस्त्यद्वारा वामनोपक्रम, शरद्वर्णनम्, दक्षयज्ञे सतीशरीरत्याग, हिमालयान्मेनाया पार्वतीप्रादुर्भाव, तस्याः पत्यु शिवस्य प्राप्तये तपश्चर्या, वटुवेषेण शिवेन सह वार्तालापः, तया सह शिवस्य विवाहः गणेशोत्पत्ति, कार्तिकेयस्य रुचिर चरित्र-चित्रणम्, दैत्यराजस्य प्रह्लादस्य नैमिषतीर्थयात्रा, बदरिकाश्रमे नरनारा-यणाभ्या युद्धम्, कुरुक्षेत्रस्य तदन्तर्वर्तिना तीर्थाना माहात्म्यवर्णनम्, सरोमहत्त्वप्रदर्शनम्, दानस्य महिमा, व्रतानामनुष्ठानविधि, भगवत शिवस्य विभिन्नाङ्गानामलङ्काररूपेण सर्पाणा नामग्रहमुल्लेख, सुकेशि-प्रसङ्गे जम्बूद्वीपान्तर्वर्तिना वर्षाणा वर्णनम्, भुवनकोशे भारतवर्षीयवन-पर्वत-नद-नदी-जनपदादीनामुल्लेख, कात्यायनीप्रादुर्भाव, तद्द्वारा महिषासुरादीना वध, अन्धकस्योत्पत्ति, शुक्राचार्यद्वारा सञ्जीवनाविद्या-प्रयोग, मलयपर्वते दानवैः सहेन्द्रस्य युद्धम्, देवासुरादीना विविधवाहन-वर्णनम्, वामनावतारस्य विशद वर्णनञ्चेत्येते महत्त्वपूर्णाः पौराणिका विषया विशेषतया वर्णिता सन्ति। अपि च निबन्धग्रन्थेषु वामनपुराण-नाम्ना समुद्घृता बहवः श्लोका वर्तमानवामनपुराणे नापलभ्यन्ते। वामनपुराणत. करकचतुर्थीकथा गङ्गामाहात्म्यगङ्गामानसिकस्नान-वाराह माहात्म्य-वेंकटगिरिमाहात्म्यप्रभृतयोऽनेके लघुकलेवरा ग्रन्था निसृता. सन्ति।

## वामनावतारकथासारः

पुराणेषु विशेषतः श्रीमद्भागवते वामनपुराणे च राज्ञो बले प्रसङ्गे वामनावतारस्य विशद वर्णनमुपलभ्यते। स्वर्ग विजित्य दैत्यराजो बलि· स्वयमिन्द्रो भूत्वा देवान् ततो बहिश्चकार। ततो दु.खिताना देवानां विनम्रया प्रार्थनया तेषा कामनापूर्तये भगवान् विष्णुः कश्यपाददितेर्गर्भाद् वामनरूपेणाविर्भूय बलेर्यज्ञशालामुपस्थाय पादत्रयभूमिमयाचत। गुरुणा शुक्राचार्येण भूयो भूयो वार्यमाणोऽप्यात्मान धन्यतम मन्यमानो बलि करे कुशोदकमादाय सहर्ष सकल्प्य वामनस्य याच्ञा पूरितवान्। तदनन्तर वामनेनावामनीभूयैकेन पदा पृथ्वी द्वितीयेनान्तरिक्ष चाक्रम्य तृतीय चरणं स्वय समर्पिते बले. शिरसि निधाय स्वकीय त्रिविक्रम नाम चरितार्थीकृतम्, बलि पाताले प्रेषितः, पृथ्वो चेन्द्राय प्रदत्ता, देवाश्चाभयाः कृता.।

## वामनावतारस्य मूलं स्रोतः

यथा प्रत्येकं शास्त्राणा नैजं वैशिष्टय स्वीयाश्च विशेषविषया भवन्ति येषा मुख्यतया प्रतिपादन तेषु तेषु शास्त्रेषु क्रियते, तथैव पुराणानामपि स्वीयौ विशेषविषयौ स्त.—तत्रैक सृष्टिप्रक्रियाविवेचनम्, द्वितीयश्चाख्यान कथनम्। यथा सृष्टिविषयकसिद्धान्ताना ज्ञानाय विभिन्नदार्शनिकसिद्धान्ताना ज्ञानमावश्यकमस्ति येषा निरूपणं तत्तद्दर्शनग्रन्थेषु विशेषरूतेण कृतमास्ते, तथैव पौराणिकानामाख्यानाना यथार्थरहस्यज्ञाननिमित्तं तेषामाख्यानाना मूलभूतस्य वेदवाङ्मयस्यानुशीलनमस्त्यावश्यकम्, यत्र तेषा तेषामाख्यानाना बीज निहितमस्ति। अतो वैदिकानामाख्यानानामाधारेण पौराणिकानामाख्यानानामर्थकरणं नितान्तमावश्यक वर्तते। तदनुसार वामनावतारकथाया कि बीजमिति जिज्ञासायामुच्यते—वामनावतारस्य कथाया मूल स्रोतो वैदिकवाङ्मये प्रामाणिकतया उपलभ्यते। ऋग्वेदे हि विष्णुसूक्तस्य विभिन्नेषु मन्त्रेषु ( १।२२।१७,२८ ) वामनावतारस्य सङ्केतो विद्यते। शतपथब्राह्मणे च ( १।२।५-७ ) वामनस्य प्रसङ्गो वर्तते। एवञ्च ऋग्वेदस्योरगाय त्रिविक्रम भगवन्त विष्णु शतपथस्य वामानाख्यानञ्चैकीकृत्य पुराणेषु वामनावतारस्य पूर्ण. प्रसङ्गः प्रस्तुत । तत्रान्तरमिदमेवास्ति यद् यत्र शतपथब्राह्मणे असुरेभ्यो भूमेर्ग्रहणमुक्तमस्ति, तत्र पुराणेषु बलेर्बलम् पृथिव्या हरण च प्रदर्शित-

मस्ति। अपि च शतपथस्य कथानक यत्र देवैरसुराणा भूमौ यज्ञस्य विस्तारं विधाय सा आत्मसात् कृता, तत्र पुराणेषु त्रिभि. क्रमैः पृथ्वी-स्वर्ग-बलिशरीराक्रमणानन्तर वामनेन समस्ता भूमिममुरेभ्यो गृहीत्वा सा देवेभ्यः समर्पिता। इय शतपथीय पौराणिक चोभयमाख्यानं भगवतो विष्णोर्महिमानं व्यनक्ति।

## बलेर्यज्ञस्थलम्

दैत्यराजस्य बले. परमः पवित्रोऽश्वमेधयज्ञः इलायामस्या क्व सम्पन्न इति जिज्ञासाशान्तये वामनपुराणस्य मतमस्ति यद् बलेरश्वमेधोऽध्वरोऽधिकुरुक्षेत्रेऽजायत। तथाहि भरद्वाजं प्रति वामनवचनम्—

ब्रह्मन् व्रजामि देह्याज्ञा कुरुक्षेत्रं महोदयम्।
तत्र दैत्यपते पुण्यो हयमेध प्रवर्तते॥
(वामनपुराणम् ६२।५२)

अत एव वामने कुरुक्षेत्रस्य तदन्तर्वर्तिना तीर्थानाञ्च विशेषरूपेण वर्णनं महत्त्व च प्रदर्शित वर्तते। अग्निपुराणानुसार बलियज्ञो राजद्वारे (गङ्गाद्वारे) जात.। तथाहि महर्षेर्वसिष्ठस्याभ्यर्थने अग्नेः प्रतिवचनम्।

स्तुतोऽसौ वामनो भूत्वा ह्यदित्या स क्रतु ययौ।
बले श्रीयजमानस्य राजद्वारेऽगृणात् श्रुतिम्॥
(अ० पु० ४।७)

पद्मपुराणानुसार हि बलेर्मखस्थल पुष्करं वर्तते। तद्यथा पुलस्त्य प्रति भीष्मस्य निवेदनम्—

क्षेत्रे पैतामहे चास्मिन् पुष्करे यज्ञपर्वते।
पदानि कृतवान् ब्रह्मन् विस्तरान्मम कीर्तये॥
(प० पु०, सृ० ख० ३०।८)

श्रीमद्भागवतानुसार तु बलेर्यागो नर्मदाया उत्तरे तटे भृगुकच्छे (भडौच) सम्पन्नः, यत्र भृगुवशीया ब्राह्मणा ऋत्विजो भूत्वा यज्ञस्य कार्यजातं सम्पादितवन्त.—

त नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसज्ञके।
प्रवर्तयन्तो भृगवः क्रतूत्तम व्यचक्षतारदुदित यथा रविम्॥
(श्री० भा० ८।१८ २१)

## अर्थकरणे सावधानता

पुराणेष्णनेकान्येतादृशान्यस्पष्टार्थानि वचनान्युपलभ्यन्ते येषा न सहसा यथार्थोऽर्थोऽवगन्तुं शक्यते। अतस्तेषा वास्तविकव्याख्यायै तत्प्रामाणिकटीकानामवलोकन नितन्तमावश्यक भवति। यथा—

चतुर्भिश्च चतुर्भिश्च द्वाभ्या पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्या तस्मै होत्रात्मने नम ॥
(वा० पु० ५।१)

श्लोकोऽयं वामनपुराणस्य सरोमाहत्म्यप्रकरणे कश्यपद्वारा कृताया विष्णुस्तुतौ वायुपुराणे महाभारतस्य शान्तिपर्वणि भीष्मस्तवराज चाङ्कितोऽस्ति। परमस्य वास्तविक रहस्य न टीकानुशीलनमन्तरा मनोविषयीभवति। अतो महाभारते नीलकण्ठेनास्य व्याख्या एव कृतास्ति, यया तद्रहस्य सम्यक् स्पष्टीभवति। तथाहि—आश्रावय इति चतुरक्षम्। अस्तु वौषट् इति चतुरक्षरम्। यज इति द्व्यक्षरम्। ये यजामहे इति पञ्चाक्षरम्। द्व्यक्षरो वषट्कार इति (गणनया) सप्तदशभिरक्षरैयो हूयते, तस्मै होत्रात्मने विष्णवे नम ।

## वामनपुराणसमयः

द्वापरे समनुप्राप्ते तृतीये युगपर्यये।
जातः पराशराद् योगी वासव्या कलया हरे.॥
(श्रीम० भा० १।४।१४)

व्यासेन कृत्वातिशुभं पुराण शुकाय पुत्राय महात्मने यत्।
वैराग्ययुक्ताय च पाठित वै विज्ञाय चैवारणिसम्भवाय॥
(देवीभा० १।३।३६)

यद्यपि प्राचीनपद्धतिपक्षपातिनो विशिष्टा विद्वास कलि-द्वापरसन्धिसमये पुराणानां व्यासकृतित्वमङ्गीकुर्वन्ति, तथाप्यर्वाचीनाः केचन विचारका देश-काल-परिस्थिति-भाषा-भाव-वर्णन-शैलीनामाधारे तेषा विभिन्नकालकर्तृकृतित्वं मन्यन्ते। तदनुसारं वामनपुराणमपि नातिचिरातनं पुराण भवितुमर्हति। अत्र तेषामस्ति तर्को यद् वामनपुराणीयपार्वती

वटुरूपधारिशिवयोः सवादस्य कुमारसम्भवस्थेन तयो सवादेन न केवल-मर्थस्यैवास्ति साम्यम् अपि त्वक्षराणामपि साम्य वर्तते। क्वचन छन्दोऽपि समानमेव प्रयुक्तमस्ति अत. कुमारसभवप्रभावाद् वामनपुराणस्य रचनाकालः कालिदासोत्तर पष्ठ-नवमशताब्दीमध्ये एव भवितुमर्हतीति सुधिभिर्विभावनीयम्।

एतच्छ्रवणफलमितिकर्तव्यतानिर्देशो यथा

ये पठन्ति च शृण्वन्ति तेऽपि यान्ति परा गतिम्।
लिखित्वैतत्पुराणान्तु य शरद्विपुवेऽर्पयेत्॥
विप्राय वेदविदुषे घृतधेनुसमाचितम्।
स समुद्धृत्य नरकान्नयेत्स्वर्ग पितॄन् स्वकान्॥
देहान्ते भुक्तभोगोऽसौ याति विष्णो परम्पदम्।

## १५—कूर्मपुराणम्

सस्कृतवाङ्मये पुराणानामेक विशेषमहत्त्वपूर्ण स्थानमस्ति। आस्तिकजगति श्रुति-स्मृत्योरनन्तर पुराणानामेव प्रामण्य स्वीक्रियते। यतो हि एषु वेदार्थोपवृहणेन सह कर्मकाण्ड-धर्मशास्त्रोपनिषदा सिद्धान्ताना सरलया भाषयाकथानकोपकथानकद्वारा स्पष्टीकरणं कृतमस्ति। येन साधारणबुद्धयोऽपि जना वैदिकान् सिद्धान्तान् ज्ञात्वा शुभकर्मणामनुष्ठानद्वारा सद्गति प्राप्तु शक्नुवन्ति।

पुराणगणनाक्रमे कूर्मपुराण पञ्चदश पुराण मन्यते, किन्तु देवी भागवते इद सप्तदश पुराण प्रोक्तमस्ति कूर्मपुराण हि चतसृषु सहितासु विभक्तमस्ति (१) ब्राह्मी संहिता (२) भागवती सहिता (३) सौरी सहिता (४) वैष्णवी सहिता च। यासु धर्मार्थाकाममोक्षविषयिका चर्चा कृताऽस्ति––

इदन्तु पञ्चदशक पुराणं कौर्ममुत्तमम्।
चतुर्धा सस्थितं पुण्यं साहिताना प्रभेदत॥
ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्तिता।
चतस्र. सहिताः पुण्या धर्मकामार्थमोक्षदा॥

(कू० पु० पूर्वार्द्धे १।२१ २२)

आसु प्रथमाया ब्राह्मी संहितायां भगद्वयं वर्तते—पूर्वार्द्धमुत्तरार्द्धञ्च। द्वितीया भागवती संहिता पञ्चसु पादेषु विभक्ता वर्तते। अत एवेयं पञ्चपदी अपि कथ्यते। चतुर्थी वैष्णवी संहिता चतुर्षु पादेषु विभक्ता-विद्यते। अत इय चतुष्पाद्यपि प्रोच्यते। ब्राह्मी संहितायां ६००० भागवती संहितायां ४००० सौरीसंहितायां २००० वैष्णवी संहितायां च ५००० श्लोका विद्यन्ते येषामाध्यनेन धर्मार्थकाममोक्षाणां पुरुपार्थचतुष्टयाना प्राप्तये उपायानिर्दिष्टा सन्ति। एवमिदं महापुराणं १७००० सप्तदशसहस्र-श्लोकेषु परिपूर्णमति।

कूर्मपुराणस्य प्रतिपाद्यविषयाणा निरूपण वृहन्नारदीयपुराणे श्लोकवद्ध जातमस्ति। तदनुसार यस्मिन् पुराणे कूर्मरूपधारिणा भगवता विष्णुना लक्ष्मीकल्पीयविषयानुसारमिन्द्रद्युम्नस्य राज्ञ. प्रसङ्गे धमार्थकाम-मोक्षाणां माहात्म्यमृषीन् प्रति दयया पृथक्-पृथक् प्रोक्तमस्ति, तदस्ति-कूर्मपुराणम्, यत्र १७०० श्लोकास्तथाचतस्र: संहिता. सन्ति—

श्रृणु वत्स! मरीचेऽद्य पुराण कूर्मसंज्ञितम्।
लक्ष्मीकल्पानुचरित यत्र कूर्मवपुर्हरि॥
धर्मार्थकाममोक्षाणां माहात्म्य च पृथक् पृथक्।
इन्द्रद्युम्नप्रसङ्गेन प्राहर्षिभ्यो दयाधिकम्॥
तत् सप्तदशसाहस्रं सचतु संहित शुभम्।
(ना० पु० १०६।१–२$\frac{1}{2}$)

मत्स्यपुराणानुसारं यस्मिन् पुराणे कूर्मरूपिया जनार्दनेन रसातले पुरुषार्थचतुष्टयस्य माहात्म्यमिन्द्रद्युम्नप्रसङ्गे इन्द्रस्य समक्षे ऋषीन् प्रति वार्णित, यच् च लक्ष्मीकल्पस्य प्रसङ्गेन वर्णित विद्यते तदस्ति कूर्मपुराणं यस्य श्लोकसंख्या १८००० अस्ति—

यत्र धर्मार्थकामाना मोक्षस्य च रसातले।
माहात्म्य कथयामास कूर्मरूपी जनार्दन.॥
इन्द्रद्युम्नप्रसङ्गेन ऋषिभ्य शक्रसन्निधौ।
अष्टादश सहस्राणि लक्ष्मीकल्पानुषङ्गिकम्॥
(म० पु० ५३।४६ ४७)

एवं कूर्मपुराणे नारदीयपुराणानुसारं १७००० तथा मत्स्यपुराणा-नुसारं १८००० श्लोका भवितु मर्हन्ति, किन्तु कूर्मपुराणस्य चतसृषु

सहितासु केवलमेकैव ब्रह्मीसहिता साम्प्रतमुपलभ्यते। अवशिष्टा तिस्रो भागवती वैष्णवी-सौरीसहिता नेदानी दृष्टिगोचरी भवन्ति। उपलभ्यमानायां ब्राह्मीसहिनाया भागद्वय वर्तते पूर्वार्द्धमुत्तरार्द्धञ्च तत्र पूर्वार्द्धं ५३ तथोत्तरार्द्धं ४६ उभयो संकलनया ९९ अध्याया ६००० श्लोकाश्च-सन्ति, येषु धर्मार्थकाममोक्षाणा माहात्म्य वर्णितमस्ति।

भगवता विष्णुना समुद्रमन्थनसमये कूर्मरूप धृत्वा इन्द्रद्युम्ननामकस्य विष्णुभक्तस्य राज्ञ कथानकप्रसङ्गे मुनिजनान् प्रति अस्य पुराणस्य प्रवचनाद् इद पुराण कूर्मपुराणनाम्ना प्रख्यातम्। अत्र सर्वैर्द्विजातिभि. श्रद्धा विधेया—

इद पुराण परम कौर्म कूर्मस्वरूपिणा।
उक्तं वै देवदेवेन श्रद्धातव्य द्विजातिभि ॥
(कू० पु० पू० १।१२१)

एतत् पुराण सकल भापितं कूर्मरूपिणा।
साक्षाद्देवाधिदेवेन विष्णुना विश्वयोनिना ॥
(कू० पु० उत्तरार्द्धे ४६।१२२)

कूर्मपुराणे भगवान् सदाशिव प्रधानदेवतारूपेण वर्णितोऽस्ति, स हि देवाधिदेवोऽभिमतोऽस्ति, तथा स एव जगतः सृष्टि-स्थिति-सहारान् कुरुते, स एव पूर्वं ब्रह्माणमुत्पाद्य तस्मै वेदान् प्रददाति। अस्यैवास्ति अपरा मूर्ति भगवान् विष्णुरपि, तदुक्तवान् स्वय भगवान् विष्णु ब्रह्माणं प्रति—

सृजत्ययेष जगत् कृत्स्न पाति संहरते तथा।
कालो भूत्वा महादेव केवलो निष्कल शिव ॥
ब्रह्माण विदधे पूर्व भगवन्त सनातन।
वेदाश्च प्रददौ तुभ्य सोऽयमायाति शङ्कर ॥
अस्यैवचापरा मूर्तिः विश्वयोनिं सनातनीम्।
वासुदेवाभिधान मामवेहि प्रपितामह ! ॥

भगवतो महेशस्य कृपया भगवता श्रीकृष्णेन कैलाशपर्वते उपमन्योराश्रमे घोर तपस्तत्प्वा वरदानस्वरूपेण जाम्वतीगर्भात् साम्वनामकः सुत. समासादित.। पुराणेऽस्मिन् ब्रह्म-विष्णु-महेपु नान्तर स्वीकृतमस्ति।

यतोहीमे जगदुत्पत्ति-स्थिति-लयहेतवे एकस्यैव ब्रह्मण तिस्रो मूर्तय सन्ति। यद् यद् रूप भक्ता भजन्ते, तेन तेन रूपेण शिव एव फल ददाति—

त्रिधा भिन्नोऽस्म्यह ब्रह्मन् ! ब्रह्मविष्णुहराख्यया ।
सर्गरक्षालयगुणै निष्कलः परमेश्वर. ॥
ब्रह्मविष्णुशिवा ब्रह्मन् सर्गस्थित्यन्तहेतव ।
विभज्यात्मानमेकोऽपि स्वेच्छया शङ्कर स्थित. ॥
( कू० पु० पूर्वार्द्धे १०।७८-८० )

यं य भेद समाश्रित्य यजन्ति परमेश्वरम् ।
तत्तद्रूप समास्थाप प्रददाति फल शिवः ॥
( कू० पु० उत्तरार्द्धे ४६।३६ )

अस्मिन् पुराणे भगवान् विष्णु शिवरूपेण तथा लक्ष्मी गौर्याः प्रकृतिरूपेणाङ्कितास्ति । अत्र शक्तिसहस्रनाम्नो महिम्ना सह शक्तिपूजाया विशिष्टं वलं प्रदत्तमस्ति । अस्य पूर्वभागे पुराणानामुपक्रम. लक्ष्मीन्द्रद्युम्न-सवाद - ऋपिविष्णुसवाद - वर्णाश्रमाचार सहिता - सृष्टिप्रकरणानन्तर पार्वत्या तपस्याया. तथा तस्या सहस्रनाम्नो महत्त्वपूर्ण वर्णन विद्यते । तथा भृगुवशसमाख्यान स्वायम्भुववर्णन, दक्षयज्ञविध्वस , व्यासपाण्ड-वसवाद , युगधर्मनिरूपण, काशीप्रयागयो महात्म्य च महता विस्तरेण प्रदत्तमस्ति ।

अस्योत्तरभागे गीताद्वयमस्ति–ईश्वरगीता–व्यासगीता च । तत्रेश्वर-गीताया श्रीमद्भगवद्गीतावदेव ध्यानयोगद्वारा भगवत शिवस्य साक्षा-त्काराय वर्णनपूर्वकमाध्यत्मिकस्य ज्ञानस्य मार्मिक विवेचनमस्ति । अत्र शैवदर्शनविषयकतत्त्वाना विवेचन तथा पाशुपतयोगस्य महत्त्वपूर्ण विवरणमुपस्थापितमस्ति । सविशद सदाचारस्य प्रतिपादनानन्तर भोजनस्य प्रकाराणा वर्णनं विद्यते । कूर्मपुराणस्य ईश्वरगीताया व्यास-गीतायाश्च कियन्त. श्लोका स्वामिशङ्कराचार्येण विष्णुमहस्रनामभाष्ये सनत्सुजातीयभाष्ये च प्रमाणरूपेणोद्धृता सन्ति । ईश्वरगीताया विज्ञान-भिक्षुणापि भाष्य कृतमस्ति । व्यासगीताया सासारिककर्मणा धर्मपूर्वक पालनस्य विवधं विधानं तथा चतुर्णामाश्रमाणा कर्तव्यस्य सविस्तर दिग्दर्शनमस्ति । एवं कूर्मपुराण कल्याणाना समुचितमार्गप्रदर्शकं पुराण-

मस्ति। अस्मिन् पुराणे वेद सर्वोपरि प्रमाण स्वीकृतमस्ति। यश्च ततोऽन्यत्र रमते तेन सह सम्भाषणादिकं च न कर्तव्यम्--

नच वेदादृते किञ्चिच्छास्त्र धर्मविधायकम्।
योऽन्यत्र रमते सोऽसौ न सम्भाष्यो द्विजातिभि ॥

( कू० पु० पूर्वार्द्धे १२।२६० )

अत पुराणमिदम्—इतिहासपुराणाभ्यां वेदं समुपवृंहयेत्। इत्यनुमार वास्तविकरूपेण वेदोपवृंहणकारक पुराणमस्ति। सम्प्रति उपलब्धे कूर्म पुराणे कियन्त तान्त्रिका विषया अपि आगता सन्ति, यान् दृष्ट्वा केचन वर्तमाना आलोचका एतत्पुराणमाधुनिक मन्यन्ते, किन्तु तेषामिद मत न सर्वथा समीचीन वर्तते, यत शङ्कराचार्यस्य समये ६४ तन्त्राणि वर्तमानान्यासन्, यस्योल्लेखस्तेन आत्मन आनन्दलहर्या कृतोऽस्ति—चतु षष्ट्याः तन्त्रैः सकलमभिधाय भुवनम्, तथा ईशाया द्वितीयशताब्द्या विद्यमानेन विदुषा नागार्जुनेन स्वकीये कक्षापुटीनामके ग्रन्थे पञ्चविंशते तन्त्राणामुल्लेख कृतोऽस्ति—

शाम्भवे यामले शाक्ते मौले कौलीयडामरे।
स्वच्छन्दे नाकुले शैवे राजतन्त्रेऽ मृतेश्वरे ॥
. .. .. . ... . . .. ... . . ...
इत्येतदागमोक्तञ्च वक्त्रात् वक्त्रेण यच्छ्रुतम्।
तत् सर्व समुद्धृत्य दध्नो घृतमिवादरात् ॥

( लक्षापुटी ६।१० )

**कूर्मपुराणस्यावतरणप्रक्रिया एवमुक्तास्ति--**

श्रुत्वा नारायणाद्देवान्नारदो भगवान् ऋषि।
गौतमाय ददौ पूर्वं तस्माच्चैव पराशर ॥
परशरोऽपि भगवान् गङ्गाद्वारे मुनीश्वरान्।
मुनिभ्य कथयामास धर्मकामार्थमोक्षदम् ॥
ब्रह्मणा कथित पूर्व सनकाय च धीमते।
सनत्कुमाराय च तथा सर्वपापप्रणाशनम् ॥
सनकाद् भगवान् साक्षाद् देवलो योगवित्तम।
अवाप्तवान् पञ्चशिखो देवलादिदमुत्तमम् ॥

सनत्कुमाराद् भगवान् मुनि सत्यवती सुत ।
एतत् पुराणं परम व्यास· सर्वार्थसञ्चयम् ।।
तस्माद् व्यासादह श्रुत्वा भवता पापनाशनम् ।
उच्चिवान् वै भवद्भिश्च दातव्य धार्मिके जने ।।
( कुर्म पु० उत्तरार्द्धे ४६।१३०-१४५ )

कूर्मपुराणानुसारं पुण्यक्षेत्राभिगमन सर्वेषा पापानां निवारक भवति तथा सर्वेषा तीर्थानामुत्तम तीर्थं काशीपुरी एवाभिमताऽस्ति । यो हि स्वधर्मं परित्यज्य तीर्थ सेवते, तस्य किमपि फल न जायते । अत स्वधर्म-पालनपूर्वकमेव तीर्थं निषेवितव्यम्—

पुण्यक्षेत्राभिगमन सर्वपापविशोधनम् ।
सर्वेषामपि चैतेषा तीर्थाना परमा पुरी ।।
नाम्ना वाराणसी दिव्या कोटिकोट्ययुताधिका ।
य· स्वधर्मान् परित्यज्य तीर्थसेवा करोति हि ।।
न तस्य फलते तीर्थमिह लोके परत्र च ।।
( कुर्म पु० उत्तरार्द्धे ४४।१७ २० )

अस्य पुराणस्य पाठ-दान-महिम्नां वर्णनमुत्तरार्द्धस्य ४६ अध्याये १२३-१२८ श्लोकै· सम्यक् कृतमस्ति । एतत्पाठको दाता च सवपापविनि-र्मुक्तो ब्रह्मलोके गत्वा तत्रत्यान् विपुलान् दिव्यान् भोगान् भुक्त्वा ततो भ्रष्ट पूर्वसस्कारमाहात्म्याद् विप्राणा कुले जन्म गृहीत्वा ब्रह्मविद्याम-वाप्य मुक्तो भवति ।

पुराणमिदं देवोद्याने देवायतने वा मूत्रपुरीषोत्सर्गस्य नितरा निषेध करोति । तच्छुद्ध्यर्थ चान्द्रायणव्रतानुष्ठानस्य मूत्रेन्द्रियकर्तनस्य चादेशो दत्तोऽस्ति—

देवोद्यानेषु य कुर्याद् मूत्रोच्चार सकृद्द्विज· ।
छिन्द्याच्छिश्न विशुध्यर्थञ्चरेच्चान्द्रायण व्रतम् ।।
देवतायने मूत्र कृत्वा मोहाद् द्विजोत्तम ।
शिश्नस्योत्कर्तन कृत्वा स्नात्वा देव समर्चयेत् ।।
( कू० पु० उत्तरार्द्धे ३४।८८ ८९ )

कूर्मपुराण विशेपरूपेण पाशुपतमतस्य निरूपण करोति, किन्तु डा० आ० सी० हाजरा महोदयकथनमस्ति यदिद पुराण पाञ्चरात्रमतस्य प्रतिपादकमस्ति। ईश्वरसम्बन्धेऽस्य पुराणस्य मान्यताऽस्ति यत् स एक एवास्ति तदतिरिक्तो न कोऽप्यऽस्ति, स आत्मान रूपद्वये विभक्तवानस्ति (१) एको नारायण (२) द्वितीयो ब्रह्मा च—

नावाभ्या विद्यते ह्यन्यो लोकाना परमेश्वरः।
एका मूर्तिर्द्विधा भिन्ना नारायण पितामहौ॥
(कू० पु० पूर्वार्द्धे ९।४०)

अपि च रूपत्रये एकः शिव एव स्वेच्छयाऽऽत्मान त्रिधा विभज्य तिष्ठति—

ब्रह्मविष्णुशिवा ब्रह्मन् सर्गस्थित्यन्तहेतवः।
विभज्यात्मानमेकोऽपि स्वेच्छया शङ्कर स्थित॥

किञ्चेद पुराणं विष्णु-शिवयोरपि भेद न मनुते—

योऽहं तल्लिङ्गमित्याहु र्वेदवादविदो जना।
ततोऽहमात्मानमीशान पूजयाम्यात्मनैव तत्॥
तस्यैव परमा मूर्तिस्तन्मयोह न सशय।
नावयोर्विद्यते भेदो वेदेष्वेतन्न सशयः॥
(कू० पु० पूर्वार्द्धे २६।१९ २०)

कूर्मपुराणे महेश्वरस्य शक्तिः चतुर्विधाऽभिमतास्ति (१) शान्तिः (२) विद्या (३) प्रतिष्ठा (४) निवृत्ति.। इमा एव तन्त्रशास्त्रे कला नाम्ना प्रख्याता सन्ति। आभिरेव परमेश्वर चतुर्व्यूहः कथ्यते—

शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ता स्मृता।
चतुर्व्यूहस्ततो देव. प्रोच्यते परमेश्वरः॥
(कू० पु० पूर्वार्द्धे १२।१८)

एव नारायणोऽपि चतुर्व्यूहात्मकः प्रोक्तोऽस्ति। (१) प्रथमा मूर्ति. ज्ञानरूपाऽस्ति यस्या नाम वासुदेवोऽस्ति (२) द्वितीया मूर्तिः तामसी

वर्तते, यस्या नाम कालोऽस्ति (३) तृतीया मूर्ति सत्त्वाधिकास्तिऽयस्या नाम प्रद्युम्नोऽस्ति (४) चतुर्थी मूर्ति· रजोमयी विद्यते, यस्या नाम ब्रह्मास्ति—

एका भगवतो मूर्तिर्ज्ञानरूपा शिवामला ।
वासुदेवाभिधाना सा गुणातीता सुनिश्चला ॥
द्वितीया कालसज्ञाख्या तामसी शिवसंज्ञिता ।
सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च सज्ञिता ॥
चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेति सज्ञिता ।
(कू० पु० उत्तरार्द्धे ५१।३९-४२)

निबन्धग्रन्थेषु कूर्मपुराणस्योद्धरणमधिकं नोपलभ्यते कल्पतरौ श्राद्धविषयकौ द्वौ श्लोकौ अपरार्के त्रय· श्लोका उपवासविषयकाः स्मृतिचन्द्रिकायां शतं श्लोका उक्ताः सन्ति। येषु ९४ आह्निकाविषयकाः विद्यन्ते।

पाशुपतमतप्राध्यान्य विलोक्य कूर्मपुराणस्य रचनाकालमाधुनिका विद्वांस षष्ठसप्तमशताब्द्यौ मन्वन्ते, यदा चोत्तरभारते पाशुपतमतस्य विशेषरूपेण राजपुतानाया मथुरामण्डले च प्रचलनमासीत् ।

## कूर्मपुराणस्य श्रवणादिफलमितिकर्तव्यानिर्देशो यथा—

एतत् कूर्मपुराणन्तु चतुर्वर्गफलप्रदम् ।
पठता शृण्वता नृणा सर्वोत्कृष्टगतिप्रदम् ॥
लिखित्वैतत्तु यो भक्त्या हेमकूर्मसमन्वितम् ।
ब्राह्मणायायने दद्यात् स याति परमा गतिम् ॥



## १६—मत्स्यपुराणम्

नारदीयपुराणानुसार यस्मिन् पुराणे वेदविदा भगवता व्यासेन नरसिंहवर्णनमारभ्य सप्ताना कल्पाना वृत्तान्त सक्षेपेण निगदितमस्ति तदेव मत्स्यपुराणनाम्ना प्रसिद्धम्, यस्य श्लोकसख्या चतुर्दशसहस्राणि सन्ति—

अथ मात्स्य पुराण ते प्रवक्ष्ये द्विजसत्तम ।
यत्रोक्त सप्तकल्पाना वृत्त सक्षिप्य भूतले ॥
व्यासेन वेदविदुषा नरसिंहोपवर्णनम् ।
उपक्रम्य तदुद्दिष्ट चतुर्दश सहस्रकम् ॥

( ना० पु० १०७।१,२ )

किन्तु स्वय मत्स्यपुराणे लिखितमस्ति-यस्मिन् पुराणे कल्पादौ भगवता जनार्दनेन मत्स्यरूपेण मनवे श्रुतीना प्रवृत्यर्थ नरसिंहवर्णनप्रसङ्गे सप्ताना कल्पाना विषयवर्णन कृत विद्यते तदेवास्ति चतुर्दशसहस्रात्मक मत्स्यपुराणम्—

श्रुतीना यत्र कल्पादौ प्रवृत्यर्थ जनार्दन ।
मत्स्यरूपेण मनवे नरसिंहस्य वर्णनम् ॥
अधिकृत्याब्रवीत् सप्तकल्पवृत्त मुनीश्वरा ।
तन् मात्स्यमिति जानीध्व सहस्राणि चतुर्दश ॥

( म० पु० ५३ )

एव रेवामहात्म्य-श्रीमद्भागवत-ब्रह्मवैवर्तादिपुराणानुसारमपि अत्र १४००० श्लोका सन्ति, २९० अध्यायाश्च विद्यन्ते ।

मत्स्यपुराणे श्राद्धकल्पस्य सुन्दर विवेचनं जातमस्ति तथा तत्तद्व्रताना विशेषतो वर्णन दृश्यते । दशसु १०२-१११ अध्यायेषु तीर्थराजस्य प्रयागस्य भौगोलिक वर्णन तथा महत्त्वप्रतिपादनमतिमनोहर जातमस्ति । भगवता सदाशिवेन सह त्रिपुरासुरस्याश्चर्यजनक विस्तृत युद्धमजायत । तत्र विस्तारेण सह तारकासुरवधस्य कथा प्रदत्ताऽस्ति तथा विश्वविख्याताया वाराणस्या माहात्म्य विशेषरूपेण वर्णितमस्ति । भगवान् शिवो भगवती पार्वती प्रति काश्या वैशिष्ट्य वर्णयति—

वाराणसी तु भुवनत्रयसारभूता
रम्या सदा मम पुरी गिरिराजपुत्रि ।
अत्रागता विविधदुष्कृतकारिणोऽपि
पापक्षयाद्विरजस प्रतिभान्ति मर्त्या ॥

( म० पु०७९।७८ )

मत्स्यपुराणे ५३ अध्याये या पुराणाना विषयानुक्रमणिका दत्ताऽस्ति, तया सक्षेपत समेषा पुराणाना क्रमिकविकासस्य परिचयेजायते । तत्र पुराणाना लक्षणस्य सख्यायाश्च निर्देशोऽपि अत्यतमुपयोगी उपादेयश्च विद्यते । १९५-२०२ अध्यायेषु ऋषिवशाना विशिष्ट वर्णन, राजधर्मस्य महत्त्वप्रतिपादन विभिन्नदेवताप्रतिमानिर्माणविधानं तन्मानप्रदर्शन च तस्य विशेषताया मुख्य कारणमस्ति । भारतीय प्रतिमाविधान वैज्ञानिकपद्धतावलम्वित वर्तते । तत्तद्देवतामूर्तीना रचना तालमानानुसार भवति तथा तत्प्रतिष्ठापीठनिर्माणमपि कयाचित् विशिष्ठशैल्या जायते । एतत्सर्व २५७—२७० अध्यायेषु प्रामाणिकरूपेण निर्दिष्टमस्ति ।

अस्मिन् पुराणे मनु-मत्स्यसवादप्रसगे प्रलयविषयक सवाद , मानसीसृष्ट्यन्तर मैथुनीसृष्टेरारम्भ , ब्रह्मण सरस्वत्याश्च चरित्रचित्रणम्, पृथुचरित्रम्, सोमसूर्यवशवर्णनम्, ययातिचरित्रम्, कूपोद्यानसरोवराणा प्रतिष्ठा, व्रतविधान, दानफलप्रतिपादन, प्रयागमाहात्म्य, वन-नद-नदी-पर्वतादीना वर्णनम्, शाकद्वीपादीनामुल्लेख., युगविवरणम् तारकोपाख्यान, देवासुरसंग्रामवर्णन, नर्मदामाहात्म्य, सावित्र्युपाख्यान, राजधर्मनिरूपणम्, शकुनसामुद्रिकज्ञान, गृहनिर्माण, प्रतिमाविधानमित्यादीना विषयाणा सम्यग् विवेचनमस्ति ।

मत्स्यपुराणस्य वर्ण्यविषये श्राद्ध-दान-मूर्तिपूजा - देवासुरसग्रामादीना विशेषवर्णनमस्ति । मूर्तिपूजा-श्राद्ध-दानाना विधिषु ब्राह्मणधर्मस्य महत्ता स्पष्टतया प्रतीयते । वास्तुप्रभृतिवैज्ञानिकप्रकरणेष्वपि ब्राह्मणानां महत्ता गीताऽस्ति । अत्र वर्णितेषु वहुषु युद्धेषु अधिकाशतो भगवान् शिव एव विजयते । त्रिपुरवासिनो दानवराजस्य मयस्य वाणै विद्धौ भगवान् विष्णुः विधिश्च पलायित्वा भगवतः शिवस्य शरण जग्मतुः । ब्रह्मणापि तस्या स्थितौ न किमपि ज्ञायते । न केवल वरुणकुवेराश्विनीकुमारादय एव, अपितु मृत्योरधिदेवता यमराजोऽपि विमुखो जातः ।

एवंमहति संकटमये समये भगवान् शिव एव जगद्रक्षको दृश्यते। शिवस्य स्तुतिभिः कियन्तोऽध्यायाः पूर्णाः सन्ति। काश्याः प्रयागस्य च माहात्म्यवर्णनेन साकं नर्मदातटवर्तिनां लघूनामपि तीर्थानां चर्चा प्रचुरमात्रायां वर्तते। वैष्णवमतस्य प्रचारः प्रसारश्चात्र प्रदेशे सर्वदा न्यूनमात्रायामासीत्। मथुराया वृन्दावनस्य चर्चाऽत्र कुत्रापि न विद्यते। भगवतः श्रीकृष्णस्य कियत्यः प्रसिद्धाः कथाः केवलं तद्वंशवर्णनप्रसङ्गे एव समागताः सन्ति, किन्तु श्रीकृष्णपत्नीनां जन्मान्तरीया कथा वैष्णवधर्मं प्रति अनास्था व्यञ्जयन्ति।

मूर्तिनिर्माणप्रकरणे शिवस्य विभिन्नानां मूर्तीनां वहुप्रकारैः यावद्विशदं निर्माणं निर्दिष्टमस्ति, न तावद्विष्णुमूर्तीनाम्। रामायणकथाऽत्राति संक्षिप्तरूपेणोक्ताऽस्ति। समाजस्य सूत्रपरिचालनं ब्राह्मणानां हस्ते प्रतीयते। राजनीतिमारभ्य धर्मनीतिपर्यन्तं सर्वत्र तेषामवाध संरक्षणं विद्यते। राज्ञोऽधिकारच्युतान् कर्तुं श्राद्धकर्तृभ्यः स्वर्गापवर्गायो दानस्य च शक्तिः तैः परम्परातः प्राप्ताऽऽसीत्। तात्कालिकानां ब्राह्मणानामनुशासनं शान्तिव्यवस्थाकरणमन्तरा नान्यत् किमपि कार्यकरमासीत्।

अत्राभिचारिकप्रयोगप्रक्षेपो नाथपन्थिनां तान्त्रिकयुगस्य प्रभावः प्रतीयते। अस्य युद्धवर्णने गृहीतशैलीभिः युद्धकलानां विविधरूपाणां चित्रमुपस्थाप्यते। युद्धार्थं सुसज्जितासु देवासुराणां सेनासु रथाश्वगजपदातिव्योमगामिरथानां कल्पना यथार्थरूपेण जाताऽस्ति। येषामद्भुतानां वाणपाशादीनामस्त्राणां कल्पनाऽत्र कृतास्ति, तानि न एटमवमतो न्यूनमहत्त्वशालीनि सन्ति। सीमाप्रान्तीयदस्यूनां वृत्तेर्व्यवहारस्यच यच्चित्रमत्राङ्कितमस्ति, तेन सिध्यति यत् तत्समये अस्माकं राज्यस्य राजनैतिकी सीमा सुदूरवर्तिनो विस्तृतस्य महतः साम्राजस्यासीत्। यत्र गङ्गा-यमुना-सिन्ध-नर्मदा-अङ्ग-वङ्ग-कलिङ्ग-गुर्जराणामपि सीमा अन्तर्भूता आसीत्। अत्र यादृग् आदर्शस्य राज्ञः तद्योग्यभवनस्य कोशस्य मन्त्रिपरिषदश्च वर्णनमस्ति, तत् एकस्य महतः साम्राज्यस्याधिकरिणः सम्राजः अनुरूपमेवास्ति। दण्ड-कर-रूपेण मुद्रा एव गृह्यन्तेस्म। अस्यादर्शो नृपतिः प्रायः सर्वसमत्यैव व्यवहरतिस्म। स नैकाकी नृपतिरासीत्, किन्तु स्वामी सचिवः सुहृद्वर्गः, कोषः, राष्ट्रं, वलम्, दुर्गम्, प्रजानायकश्चेतोमानि सप्त राज्यस्याङ्गानि सन्ति। राज्यरक्षायां दुर्गस्यानुपमं महत्त्वमासीत्। मयद्वारा रचितस्य त्रिपुरदुर्गस्य कल्पना एकस्यात्यन्तं सुदृढस्य दुर्गमस्य

दुर्गस्य यथार्थतातः प्रसूताऽस्ति । त्रिपुरस्य दुर्गमता यावती प्रशंसनीयाऽस्ति तावदेव तदभ्यन्तरीय दृश्य मनोरम चित्ताकर्षकं चास्ति । युद्धे न केवल धनुर्विद्याया एव कौशल प्रदृश्यते स्म, अपितु असि-गदा परिघ-मुसल-वज्र-पाशदण्डादीनामपिप्रयोगै सह मल्लयुद्धस्य रथचक्रप्रयोगस्यापि चर्चा विद्यते। राज्यनियमनिर्माणाय न केवल राज्ञोऽधिकार असीत्, किन्तु राजा शिष्ठाना समित्या एव चलतिस्म । एवमत्र वर्णिततथ्यानामुपजीव्यमेक परम सुखमय समृद्ध शान्तशील निर्वैरञ्च साम्राज्यमासीत्, यत्र ब्राह्मणधर्मस्य बाहुल्यमवर्तत । ते यदिच्छन्तिस्म समाजस्तदनुगामी आसीत्, तथा ते प्रत्युपायै र्जीवन शान्त सुखमय समुन्नतिशील विधायात्ममर्यादाचिरस्थायिकरणे जागरुका आसन् । निम्नश्रेणीस्थितिमत प्रति तेषु तावत्पर्यन्तमेव सहानुभूति स्नेहभावना चासीत्, यावत्पर्यन्त तेभ्य कापि आशङ्का न सम्भवितुमर्हति । एव भूताया हिन्दुसभ्यताचर्चया मस्यपुराणस्य पर्यवसानमस्ति ।

यथा राज्ञो बलेरुपरि अनुग्रहार्थ भगवता विष्णुना वामनरूप धृतमासीत् तथैव राज्ञ सत्यव्रतस्य मनो रक्षानिमित्त तेन प्रलयसमये मत्स्यरूपमपि धृतम् । एवमतीतप्रलयावसरे योगाभ्यासिन सत्यव्रतस्य मनोरनुरोधेन मत्स्यरूपधारिणा भगवता विष्णुना यत् पुराणमभिहित तदेवास्ति मत्स्यपुराणम् । एव मत्स्यावतारद्वारा कथनेनास्य पुराणस्य नाम मत्स्यपुराण प्रसिद्धम्—

आभूतसम्प्लवे तस्मिन्नतीते योगशायिना ।
पृष्टेन मनुना प्रोक्त पुराण मत्स्यरूपिणा ॥

( म० पु० २।२० )

मत्स्यपुराणीय शङ्खचूडस्याख्यानपठनेन वर्तमानशासनपरिस्थिते. कलहप्रियप्रजायाश्च दर्शनीय दृश्य सहसा सम्मुखे समुपैति । मत्स्पुराणानुसार यो मनुष्य ससारे जन्म गृहीत्वा पुरुषार्थ न करोति, तस्य जन्म व्यर्थ विद्यते, यतो पुरुषार्थेनैव लक्ष्मीरवाप्यते । तारकासुरस्यात्मनो मन्त्रिण प्रति पुरुषार्थहेतुकानीमानि वचनानि सर्वैरनुशीलनयोग्यानि सन्ति—

लब्ध्वा जन्म न यः कश्चिद् घटयेत् पौरुष नर ।
जन्म तस्य वृथाभूतमजन्मा तु विशेष्यते ॥

मातापितृभ्या न करोति कामान् ।
बन्धूनशोकान् न करोति यो वा ।।
कीर्ति हि वानार्जयते हिमानाम् ।
पुमान् स जातोऽपि मृत मतो मे ।।
( मत्स्यपुराणे १७।३६-३७ )

मत्स्यपुराणानुसार पितुराज्ञाकारी पुत्र एव तदनुग्रहभाजन भवति, तद्विपरीताचारी तु, न पुत्र समाम्नायते—

प्रतिकूल पितुर्यश्च न स पुत्र मता मत ।
मातापित्रोर्वचनकृत् हित पथ्यश्च य सुतः ।।
स पुत्र. पुत्रवद् यस्तु वर्तते पितृमातृषु । २४।२१

पितृनुद्दिश्य श्राद्धसमये पुत्रादिभिर्विधिपूर्वक श्रद्धया समर्पितमन्नादिक तत्तत्पितृणा नानायोनिषु तृप्तिकारक जायते—

देवो यदि पिता जात शुभकर्मानुसारत ।
तस्यान्नममृत भूत्वा दिव्यत्वेऽप्यनुगच्छति ।।
दैत्यत्वे भोगरूपेण पशुत्वे च तृण भवेत् ।
श्राद्धान्न वायुरूपेण सर्पत्वेऽप्यनुगच्छति ।।
पान भवति यक्षत्वे गृध्रत्वेऽपि तथामिषम् ।
मनुष्यत्वेऽन्नपानानि नानाभोगरस भवेत् ।। ( १९।६१९ )

यदाहारा भवन्त्येते तासु तास्विह योनिषु ।
तस्मिस्तास्मिस्तदाहारे श्राद्ध दत्त तु प्रीणयेत् ।। १४१।७४

कालनिरूपणप्रसगे लिखितमस्ति यत् ब्रह्मण. शतवर्षाणि भगवतः शिवस्यैक दिन भवति तथा शिवस्य शतवर्षाणि श्रीविष्णोरेक निमेषं भवति । यदा स जागर्ति तदा ससारस्य सृष्टिर्भवति, यदा च स शेते तदा विश्वस्य प्रलयो जायते—

ब्रह्म सम्वत्सरशतादेकाहं शैवमुच्यते ।
शिववर्षशतादेकं निमेष वैष्णव विदु ।।
यदा स विष्णुर्जागर्ति तदेद चेष्टते जगत् ।
यदा स्वपीति शान्तात्मा तदा सर्व निमिलति ।।
( मत्स्यपुराणे २८९।२१-२२ )

मत्स्यपुराणस्य १५१ अध्याये प्रासाद-भवनादीनां निर्माणप्रसङ्गेऽ-ष्टादशाना वास्तुशास्त्रोपदेशकाना नामानि निर्दिष्टानि वर्तन्ते । तथाहि (१) भृगुः ( २ ) अत्रि. ( ३ ) वसिष्ठ ( ४ ) विश्वकर्मा ( ५ ) मय. ( ६ ) नारदः ( ७ ) नग्नजित् ( ८ ) विशालाक्ष ( ९ ) पुरन्दरः ( १० ) ब्रह्मा ( ११ ) कुमारा ( १२ ) नन्दिग ( १३ ) शौनक. ( १४ ) गर्ग ( १५ ) वासुदेव ( १६ ) अनिरुद्ध ( १७ ) शुक्र ( १८ ) बृहस्पतिश्च

भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा ।
नारदो नग्नजिच्चैव विशालाक्ष पुरन्दर ॥
ब्रह्मा कुमारो नन्दीश शौनको गर्ग एव च ।
वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती ॥
अष्टादशैते विख्याता वास्तुशास्त्रोपदेशका ।

( १५१।२-५ )

पतिव्रताना नारीणा कृतेऽस्य पुराणस्य महदौदार्यमस्ति । एतन्मते तासा वचन व्यर्थं न भवति । अतस्ता कल्याणकामिभिरवश्य समादरणीया । तदुक्त पतिव्रतामाहात्म्यप्रसङ्गेन सावित्र्युपाख्याने—

तासा तु वाक्य भवतीह मिथ्या ।
न जातु लोकेषु चराचरेषु ॥
तस्मात् सदा ता परिपूजनीयाः ।
कामान् समग्रानभिकामयानै. ॥

( २१३।२८ )

प्राचीनताया वर्ण्यविषयस्य च व्यापकत्वादृष्ट्या मत्स्यपुराणस्य पुराणेषु एक विशिष्ट स्थान विद्यते । अस्य देशकालसम्बन्धे विपश्चिता विभिन्ना कल्पना सन्ति । प्रसिद्ध पाश्चात्यो विद्वान् विचारक पार्जिटरो मत्स्यपुराणे कलिराजवशवर्णनम्, अन्ध्रनरेशयज्ञश्रीराज्यकालपर्यन्त दृष्ट्वा अस्योदयस्थलमान्ध्रप्रदेशं मन्यन्ते । अन्ये विद्वांसो मत्स्यपुराणस्य रचनास्थलं नर्मदाप्रदेशं स्वीकुर्वन्ति, यतोहि मत्स्यपुराणे प्रलयसमयेऽ-नष्टभूतानां वस्तुनामेका सूची प्रदत्ताऽस्ति, यया प्रलयकाले पुण्यतमाया नर्मदानद्या अनष्टभूताया सकेतोऽस्ति—

एका स्थास्यति देवेषु दग्धेष्वपि परन्तप ।
सोमसूर्याविह ब्रह्मा चतुर्लोकसमन्वित ॥
नर्मदा च नदी पुण्या मार्कण्डेयो महानृषि. ।
भवो वेदा पुराणाभि विविधाभि सर्वतो वृतम् ॥
(म० पु० २।१२-१३)

अत प्रलयकालेऽपि अनष्टाया नर्मदाया सकेतेन ग्रन्थकारस्य तत्र विशेष. पक्षपात प्रतीयते । मत्स्यपुराणे नर्मदाया माहात्म्य दशसु १८६-१९५ अध्यायेषु वर्णितमस्ति । यत्र नर्मदातटवर्तिना लघूनामपि स्थानानामुल्लेखोऽस्ति । अत्र नर्मदा-कावेरीनद्या. सगम गङ्गा-यमुना-सङ्गममिवात्यन्त पुण्यजनको मोक्षप्रदायकश्चोक्तामस्ति—

गङ्गायमुनयोर्मध्ये यत् पुण्य प्राप्नुयान्नर ।
कवेरीसङ्गमे स्नात्वा तत् फल तस्य जायते ॥
(१८८।१७)

एवमनेकतीर्थादीना वर्णन लेखकस्य नर्मदाप्रदेशात् घनिष्ठ सम्बन्धं परिचय वा द्योतयति । अतो मत्स्यपुराणस्य रचनाक्षेत्र नर्मदाप्रदेश इति मनन नितान्तमुपयुक्त प्रतिभाति ।

मत्स्यपुराणसम्बन्धिन. अनेके श्लोका मनुस्मृतौ याज्ञवल्क्य स्मृतौ च समुपलभ्यन्ते ।

अत्र विष्णुशिवयोरुभयो वर्णन समानरूपेण कृत विद्यते तथैनयोरवताराणामपि वर्णन समानकोटिक वर्तते । अत्र सस्कृतसाहित्यस्यानेकेषा ग्रन्थाना ग्रन्थकाराणा च निर्देश उपलभ्यते । कविकुलकलाधरस्य कविवरस्य कालिदासस्य विक्रमोर्वशीयनाटके, मत्स्यपुराणीये २४ अध्यायस्य उर्वश्युपाख्याने चात्यन्त साम्यमस्ति । उभयो घटनाचक्रस्य तुल्यतया निश्चातुमिदमशक्य भवति, यत् क कस्यास्ति अधमर्ण । कालिदासो मत्स्यपुराणस्याधमर्णो वर्तते आहोस्वित् मत्स्यपुराणमेव कालिदासस्यास्ति अधमर्ण ।

यदि कालिदास गुप्तकालीन कविवर स्वीक्रियेत तर्हि विक्रमोर्वशीयनाटकस्य कथावस्तुनो मत्स्यपुराणादेव सग्रहस्वीकारे नास्ति कापि विप्रतिपत्ति. । अत. कालिदास एव मत्स्यपुराणस्याधमर्ण इति निश्च-

प्रचम्। मत्स्यपुराणं हि प्राचीनतम प्रक्षेपविहीन स्वस्वरूपे सुरक्षितं च पुराणमस्ति। अतोऽस्याविर्भावकालो द्वितीय-चतुर्थशताब्दीमध्ये एव स्वीकारे न काप्यस्ति वाधा।

एतन्महत्वपठनादिफलनिर्देशो यथा

पुण्य पवित्रमायुष्यमिदानी शृणुत द्विजा.।
मात्स्यं पुराणमखिलं यज्जगाद गदाधर ॥
एनत् पवित्रमायुष्यमेतत् कीर्तिविवर्धनम्।
एतत् पवित्र कल्याण महापापहर शुभम् ॥

अस्मात् पुराणादपि पादमेक पठेत्तु य सोऽपि विमुक्तपाप।
नारायणाख्य पदमेति नूनमनङ्गवद् दिव्यसुखानि भुङ्क्ते ॥

## १७—गरुडपुराणम्

मत्स्यपुराणानुसार भगवता विष्णुना गरुडकल्पस्योद्भवप्रसङ्गे आरम्भतो विश्वाण्डमधिकृत्योक्त यत्तद् गरुडपुराण कथ्यते, यस्य श्लोक-सख्याऽष्टादशसहस्रपरिमिता वर्तते—

यदा च गारुडे कल्पे विश्वाण्डाद् गरुडोद्भवम्।
अधिकृत्याब्रवीद्विष्णु गारुड तदिहोच्यते ।।
तदष्टादशक चैव सहस्राणीह पठ्यते।

( म० पु० ५३।५२½ )

नारदीयपुराणे तूक्तमस्ति यत् पक्षिराजगरुडद्वारा प्रश्ने कृते सति भगवता विष्णुना गरुडकल्पकथामभिलक्ष्य गरुडाय यस्य पुराणस्य वर्णन कृत तद् गरुडपुराणनाम्ना प्रसिद्धमस्ति। यस्य श्लोकसख्या १९००० विद्यते—

मरीचे। शृणु वच्म्यद्य पुराण गारुडं शुभम्।
गरुडायाब्रवीद् दिव्य भगवान् गरुडासन. ॥
एकोनत्रि-ा साहस्र तार्क्ष्यकल्पकथान्वितम्।

( ना० पु० १०८।१½ )

एवं मत्स्यपुराणानुसारं गरुडपुराणे १८००० तथा नारदीयपुराणा-नुसार १९००० श्लोका भवितुमर्हन्ति। एषेव संख्या ब्रह्मवैवर्ते रेवामाहा-

त्स्ये चोक्ताऽस्ति। मत्स्यनारदीयपुराणोक्त लक्षण गरुडपुराणे सम्यक् सघटते पर विवादोऽस्ति केवल श्लोकसख्यायाम्। सम्प्रति गरुडपुराणे ७००० श्लोकाना न्यूनता जाताऽस्ति, पर कथायामन्तर न वर्तते। भविष्यराजवशाख्यानपठनेन प्रतीयते यत्।

पुराणमिद जनमेजयसमये सकलित विद्यते। भविष्यराजवशवर्णनप्रसङ्गे शूद्रकपर्यन्त नामोल्लेखो विद्यते. परं विष्णुपुराणे मत्स्यपुराणवद् आन्ध्रगुप्तादीना राज्ञामुल्लेखो नास्ति। अतो विद्वद्भिर्गरुडपुराण मत्स्यपुराणापेक्षया प्राचीन मन्यते। राज्ञ शूद्रकस्य समये बौद्धा हिन्दवश्च सम्मिलिता आसन्। तस्मिन् समये बौद्धाना प्रभावो बुद्धस्य चापासना प्रचलिताऽऽसीत्। अतो गरुडपुराणेऽपि बुद्ध एकविशोऽवतार· स्वीकृत·। गरुडपुराणे बुद्धस्य पितु तद्वशजाना चोल्लेखो वर्तते यथा—

शुद्धोदनो राहुलश्च सेनजित् शूद्रकस्तथा।

अत्रानेकेषामाधुनिकाना विषयाणा प्रसङ्ग दृष्ट्वा डा० विलसनमहोदयेन गरुडपुराणमाधुनिक मन्यते, परन्तु अत्र येषा येषा विषयाणा वर्णन विद्यते तेषा परिचयो गरुडपुराणातिरिक्तेषु अनेकेष्वपि पुराणेषु प्राप्यते। गरुडपुराणस्य गयामाहात्म्य नूनमाधुनिक मन्यते, यतो हि सोऽश भारते बौद्धधर्मस्य ह्राससमये सम्भवतोऽष्टमशताब्द्या सयोजितोऽनुमीयते।

पुराणेऽस्मिन् भगवता विष्णुना गरुडाय विश्वसर्गस्थितिरुपदिष्टास्त्यतोऽस्य नाम गरुडपुराणमिति जातम्। अत्र खण्डद्वय विद्यते एकः पूर्वखण्डो द्वितीय उत्तरखण्डश्च। तत्र पूर्वखण्डे २२९ उत्तरखण्डे च ३५ अध्याया सन्ति। एष उत्तरखण्ड प्रेतकल्पोऽपि कथ्यते—

अथास्यैवोत्तर खण्ड प्रेतकल्प पुरोदित। (उ० ख० १।१)

उत्तरखण्डे वर्णित· प्रेतकल्पो हिन्दुसमाजेऽतिलोकप्रियोऽस्ति। अत्र मरणानन्तर जीवस्य का का गतिर्भवति तथा स कस्या कस्या योनौ कथं गच्छति, तत्र च कि कि भोगमवाप्नोतीत्यादीना विस्तारपूर्वकं वर्णन विद्यते। विशेषत. श्राद्धसमये प्रेतकल्पस्य परायणोऽत्यन्त पुण्यजनक सुगतिप्रदश्च मन्यते दशाहाभ्यन्तरेऽस्याशस्य श्रवण श्राद्धकर्मण एकमावश्यकमङ्गं मन्यते। यतो हि अत्र प्रेतयोने. विशेषवर्णनं विद्यते। अत्र गर्भावस्था-

यमनगरमार्ग - प्रेतवासस्थान - प्रेतस्वरूप - प्रेतयोनितोमुक्ति - यमलोक-विस्तार-यमयातनावर्णन-सपिण्डीकरण-श्राद्धविधि-वृषोत्सर्गविधानप्रभृतीना श्राद्धविषयककर्मणा विभिन्नेषु अध्यायेषु मार्मिकं विवेचन विद्यते। अस्योत्तरखण्डस्यानुवादो हिन्द्या जर्मनभाषायामपि जातमति।

गरुडपुराणस्य पूर्वखण्डे विविधाना विद्याना विस्तृत वर्णन विद्यते। ६९-८० अध्यायेषु मुक्ता-वैडूर्य-पुष्पराज-विद्रुम-स्फटिक-पद्मराग-मरकत-इन्द्रनीलादीना बहुमूल्यरत्नाना परीक्षाया विधानं प्रतिपादितमस्ति। तथा १०८-११५ अध्यायपर्यन्त विस्तरणे नीतेर्विवेचन वर्तते। १४६-१९० अध्यायेषु आयुर्वेदिकचिकित्साया वर्णन निदानविवेचन च महता कौशलेन कृतमस्ति। तथा वृद्धेः विशद्धये विविधानामौषधीनां सेवनव्यवस्था निर्दिष्टाऽस्ति। विभिन्नाना रोगाणा दूरीकरणाय उपयोगिन औषधय उपदिष्टा सन्ति। पशुचिकित्साया समीचीना व्यवस्था अष्टाङ्गहृदयवदेवोपदिष्टाः सन्ति। २११-२१६ पर्यन्त षट्सु अध्यायेषु छन्द शास्त्रस्य विवेचनात्मक वर्णनानन्तर २३०-२४३ अध्यायेषु साख्ययोगसम्वधिना दार्शनिकसिद्धान्ताना निरूपणेन सह गीताया फलस्य कीतन वर्तते। एव गरुडपुराण यदि अग्निपुराणवत् समस्ताना विद्याना पौराणिक कोश कथ्येत तर्हि नानुचित किमपि स्यात्। गरुडपुराणेऽष्टाधिकशततमादध्यायात् पञ्चदशाधिकशततमाध्यायपर्यन्तम् (१०८-११५) अष्टसु अध्यायेषु नीतिसारवर्णनप्रसङ्गे पूर्वस्मिन् खण्डे बहूनामुपदेशप्रदाना सूक्तीनामुल्लेखो विद्यते तद्यथा—

परदार परार्थञ्च परिहास, परस्त्रिया।
परवेश्मनि वासञ्च न कुर्वीत कदाचन॥ १०८।१३

यस्य भार्य गुणज्ञा च भर्तारमनुगामिनी।
अल्पेऽल्पेन सन्तुष्टा सा प्रिया न प्रिया प्रिया॥ १०८।२४

कारणेन विना भृत्ये यस्तु कुप्यति मानव।
स गृह्णाति विषोन्माद कृष्णसर्पविसर्जितम्॥ १११।७

अर्थेन कि कृपणहस्तगतेन पुसा
ज्ञानेन कि वहु शठाकुलसङ्कुलेन।
रूपेण कि गुणपराक्रमवर्जितेन,
मित्रेण कि व्यसनकालपराङ्मुखेन॥ १०९।६

वृक्ष क्षीणफल त्यजन्ति विहगा शुष्क सर सारसा
निर्द्रव्य पुरुप त्यजन्ति गणिका भ्रष्ट नृप मन्त्रिण ।
पुष्प पर्युषित त्यजन्ति मधुपा दग्ध वनान्त मृगा
सर्व कार्यवशाज्जनो हि रमते कस्यास्ति को वल्लभ ॥ १०९।९

स्वधर्मकर्माजितजीविताना शास्त्रेषु दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणा गृहेऽपि मोक्ष पुरुषोत्तमानाम् ॥
१०९।४३

शत्रोरपत्यानि प्रियम्वदानि नोपेक्षितव्यानि बुधैर्मनुष्यै ।
तान्येव कालेण विपत्कराणि विपस्य पात्राणि हि दारुणानि ॥
११०।२०

यथा चतुर्भि कनक परीक्ष्यते निवर्षणच्छेदन ताप-ताडनै ।
तथा चतुर्भिर्भृतक परीक्षयेद् व्रतेन दानेन कुलेन कर्मणा ॥ ११२।३

वनेऽपि दोषा प्रभवन्ति रागिणा गृहेऽपि पञ्चेन्द्रियनिग्रहस्तप ।
अकुत्सिते कर्मणि य प्रवर्तते निवृत्तरागस्य गृह तपोवनम् ॥ ११३।९

सर्व परवश दु ख सर्वमात्मवश सुखम् ।
एतद्विद्यात्समासेन लक्षण सुखदु खयो ॥ ११३।६०

विप्रयो विप्रवह्न्योश्च दम्पत्यो स्वामिनोस्तथा ।
अन्तरेण न गन्तव्य हयस्य वृषभस्य च ॥ ११४।४५

वनेऽपि सिंहा मृगमासभक्ष्या बुभूक्षिता नैव तृण चरन्ति ।
धनैर्विहीनाः सुकुलेषु जाता न नीचकर्माणि समारभन्ति ॥ ११५।१४

तन्मगल यत्र मन प्रसन्न तज्जीवन यन्न परस्य सेवा ।
तदर्जित यत्स्वजनेन भुड्क्त तद् गर्जित यत् समरे रिपूणाम् ॥ ११५।५४

कस्य दोप कुलेनास्ति व्याधिना को न पीडित. ।
केन न व्यसन प्राप्त श्रिय कस्य निरन्तरा ॥ १०९।१७

नद्यश्च नार्यश्च समस्वभावा स्वतन्त्रभावे गमनादिक च ।
तोयैश्चदोपैश्च निपातयन्ति नद्यो हि कूलानि कुलानि नार्य ॥ १०९।३८

न सर्ववित् कश्चिचरिहास्ति लोके नात्यन्तमूर्खो भुवि चापि कश्चित् ।
ज्ञानेन नीचोत्तममध्यमेन यो य विजानाति स तेन विद्वान् ॥ ११०।३०

त्यजन्ति मित्राणि धनैर्विहीन पुत्राश्च दाराश्च सुहृज्जनाश्च ।
ते चार्थवन्त पुनराश्रयन्ते अर्थो हि लोके पुरुषस्य बन्धुः ॥ १११।१८

दाता वलि र्याचनको मुरारि र्दान मही विप्रमुखस्य मध्ये ।
दत्वा फल वन्धनमेव लब्ध नमोऽस्तु ते दैव ! यथेष्टकारिणे ॥ ११३।१५

स पण्डितो यो ह्यनुरञ्जयेद्वै मिष्टेन वाल विनयेन शिष्टम् ।
अर्थेन नारी तपसा हि देवान् सर्वाश्च लोकाश्च सुसग्रहेण ॥ ११४।१८

वणिक् प्रमादी भृतकश्च मानी भिक्षु र्विलासी ह्यधनश्च कामी ।
वराङ्गना चाप्रियवादिनी च न ते च कर्माणि समारभन्ति ॥ ११५।१६

राजा न तृप्तो धनसञ्चयेन न सागरस्तृप्तिमगाज्जलेन ।
न पण्डितस्तृत्यति भापितेन तृप्त न चक्षु र्नृपदर्शनेन ॥ १०९।४२

व्याघ्रीव तिष्ठति जरा अपि तर्जयन्ती
रोगाश्च शत्रव इव प्रभवन्ति गात्रे ।
आयु परिश्रवति भिन्नघटादिवाम्भो
लोका नचात्महितमाचारतीह कश्चित् ॥ १११।१०

कोऽर्थं प्राप्य न गर्वितो भुवि नर कस्यापदो नागता
स्त्रीभि कस्य न खण्डित भुवि मन को नाम राज्ञा प्रिय ।
क कालस्य न गोचरान्तर्गन कोऽर्थी गतो गौरव
को वा दुर्जनवागुरा निपतित क्षेमेण यातः पुमान् ॥ १०९।१८

तर्कोऽप्रतिष्ठ श्रुतयो विभिन्ना नासौ मुनिर्यस्य मत विभिन्नम् ।
धर्मस्य तत्त्व निहित गुहाया महाजनो येन गत- स पन्था ॥ १०९।५१

वाग्यन्त्रहीनस्य नरस्य विद्या शास्त्र यथा का पुरुपस्य हस्ते ।
न तुष्टिमुत्पादयते शरीरे अन्धस्य दारा इव दर्शनीया ॥ ११०।२

डा० आर० सी० हाजरामहोदयेन अस्य पुराणस्योद्भमस्थान मिथिलाप्रेदश. स्वीक्रियते तथा अस्य रचनाकालः नवमशताव्दी मन्यते ।

अस्य श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा––

कीर्तित पापशमन पठता शृण्वता नृणाम् ।
लिखित्वैत् पुराणन्तु विप्रवे य प्रयच्छति ॥
सौवर्ण हसयुग्माढच विप्राय स दिव व्रजेत् ।

## १८––ब्रह्माण्डपुराणम्

मत्स्यपुराणानुसारं ब्रह्माण्डमवलम्व्य यत् पुराण रचितमस्ति तथा यत्र ब्रह्मकर्तृक भविष्यकल्पस्य वृत्तान्त सविस्तरमङ्कितमस्ति । तदस्ति ब्रह्माण्डपुराण, यत्र १२२०० श्लोका भवितुमर्हन्ति—

ब्रह्म ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत् पुनः ।
तच्च द्वादशसहस्र ब्रह्माण्ड द्विशताधिकम् ॥
भविष्याणा च कल्पाना श्रूयते यत्र विस्तर ।
तद् ब्रह्माण्डपुराण च ब्रह्मणा यदुदाहृतम् ॥

किन्तु नारदीय पुराणे ब्रह्माण्डपुराणस्यैव परिचय प्रदत्तोऽस्ति यद् यस्मिन् पुराणे भविष्यकल्पस्य कथामभिलक्ष्य समस्तस्य ब्रह्माण्डस्य निरूपण कृतमस्ति तद् ब्रह्माण्डमुच्यते । अत्र १२००० श्लोका तथा चत्वार पादा सन्ति (१) प्रक्रियाद (२) अनुषङ्गपादः (३) उपोद्घात-पाद (४) उपसहार पादश्च ।

तत्रापि प्रथमद्वितीयौ पादौ पूर्वभाग, तृतीयः पादो मध्यमो भाग, चतुर्थपादश्चोत्तरो भागोऽपि प्रोच्यते । एवमत्रापि वायुपुराणवदेव चत्वारः पादा सन्ति तथा तथैव तेषा नामान्यपि विद्यन्ते—

शृणु वत्स प्रवक्ष्यामि ब्रह्माण्डाख्यं पुरातनम् ।
यच्च द्वादशसाहस्र भाविकल्पकथायुतम् ॥
प्रकृत्याख्योऽनुषङ्गाख्य उपोद्घातस्तृतीयक ।
चतुर्थ उपसंहार पादाश्चत्वार एव हि ॥
पूर्वपादद्वय पूर्वो भागोऽत्र समुदाहृत ।
तृतीयो मध्यमो भगश्चतुर्थस्तूत्तरो मत ॥

(ना० पु० १०९।१-३)

एपु चतुर्पु पादेषु तृतीय पाद. सर्वतो महानस्ति। यस्यारम्भे ९-२० अध्यायेपु ८७९ श्लोकै श्राद्धसम्बन्धिना विपयाणा साङ्गोपाङ्ग विवेचनमस्ति। तत २१-४७ अध्यायेषु १५५० श्लोकै परशुरामकथा महता विस्तारेण वर्णिताऽस्ति। तदनु ४८-५४ अध्यायेषु राज. सगरस्य वशररम्परा तथा भगीरथद्वारा भूतले गङ्गामयनस्य कथा कथिताऽस्ति। तदनन्तर १९ अध्याये सोम-सूर्योद्भवाना राज्ञा विवरणमस्ति।

एवमेतद्रेवावण्ड-मत्स्यपुराणानुसार ब्रह्माण्डपुराण शतद्वयाधिकद्वादशसहस्रात्मक (१२२००) श्रीमद्भागवत-ब्रह्मवैवर्त-नारदीयपुराणानुसारञ्च द्वादशसहस्रसख्याक (१२००) विद्यते, तथा अत्र १६१ अध्यायाः सन्ति। यथा ब्रह्मपुराण पुराणेपु आदिम पुराण प्रोच्यते तथैव अन्तिम पुराण ब्रह्माण्डमित्यभिधीयते। मध्ये च ब्रह्मवैवर्त वर्तते। अत एवोक्तम्–

आदावन्ते च मध्ये च हरि सर्वत्र गीयते।

शिवपुराणानुसार ब्रह्माण्डस्य भौगोलिकवर्णनकारणादस्य पुराणस्य नाम ब्रह्माण्डमित्युच्यते। एतञ्चपुराणमतिपुण्यजनकमस्ति––

ब्रह्माण्डचरितोक्तत्वाद् ब्रह्माण्ड परिकीर्तितम्।
ब्रह्माण्ड चाति पुण्योऽय पुराणानामनुक्रम॥

(शि० पु० उ० म० ४४।१४३)

ब्रह्माण्डपुराणस्य १६-१८ अध्यायेपु भविष्यकल्पस्य वृत्तान्त विस्तारपूर्वक वर्णितमस्ति। एवप्रकारकं विस्तृत कल्पविवरण नान्यपुराणेषूपलभ्यते। ३३-३८ अध्यायेषु ब्रह्मण्डस्य विभिन्नाना स्थानाना यथा भौगोलिक विवरण प्रदत्तमस्ति, न तथान्येषु केष्वपि पुराणेपु विद्यते। अतो वर्तमानस्य ब्रह्माण्डस्य पुराणस्यास्तित्वे मौलिकत्वे महापुराणत्वे प्राचीनत्वे च न कोऽपि सन्देहावसरोऽस्ति। पुराणमिद शब्दाना निर्वचने महतीमभिरुचि धत्ते। यथा स्कन्दपुराणे वहूनि माहात्म्यानि सन्ति तथैवात्रापि अनेकानि माहात्म्यानि विद्यन्ते।

ब्रह्माण्डपुराणे विश्वस्य साङ्गोपाङ्ग विवरण विद्यते। अस्य प्रथमेखण्डे विश्वस्य विस्तृतं रोचक च भौगोलिक विवरणं विद्यते। ६६-७२ अध्यायेषु जम्बूद्वीपस्य परिचयप्रसगे वनपर्वतनदनदीना वहुव्यापक वर्णन वर्तते। अत्र विभिन्नाना वर्षाणा द्वीपानाञ्च विवरण दर्शनीयमस्ति। नक्षत्र-

मण्डलस्य युगाना च दिग्दर्शन विशिष्ठ विद्यते। अस्य तृतीये पादे विश्वविख्यातस्य क्षत्रियवशस्य वर्णनमैतिहासिकदृष्ट्यात्यन्तमुपादेयमस्ति। नारदीयपुराणस्य सूच्यनुसारमध्यात्मरामायण ब्रह्माण्डपुराणस्यैवाशोऽस्ति, किन्तूपलब्धब्रह्माण्डपुराणेऽध्यात्मरामायण नोपलभ्यते, यत्र रामचरितमध्यात्मज्ञानाधारेण वर्णितमस्ति। तदनुसार रामो ब्रह्म सीता च तस्य प्रकृतिरस्ति, यदि राम पर ब्रह्मास्ति तर्हि माता तस्यानिवर्चनीया माया विद्यते। अनयो. लीलाया विकास एवेद समस्त विश्वमस्ति। ब्रह्ममायाभ्या भूभारभञ्जनाय देवेरभ्यर्थिताभ्या भूलोकेऽवतीर्य स्वलीलाया विस्तार. प्रदर्शितोऽस्ति।

श्रूयते ब्रह्माण्डपुराण पञ्चमशताब्द्या भारताद् यवद्वीपे उपगतमद्यत्वेऽपि जावाया प्राचीनकविभाषायामस्यानुवाद उपलभ्यते। प्रचलितेन ब्रह्माण्डपुराणेन सह भविष्यराजवशवर्णनप्रसङ्ग त्यक्त्वा बालिद्वीपीयब्रह्माण्डपुराणस्य पूर्णसङ्गति. विद्यते तथेद पुराण पुराणपञ्चलक्षणेन साक समीचीनतया सगतमस्ति। अतोऽस्य पूर्णपुराणत्वे नास्ति कश्चन सन्देह.।

डा० विलसन-द्विजेन्दलालमित्र-भाण्डारकरप्रभृतिभिर्विद्वद्भि. ब्रह्माण्डपुराणस्यास्तित्वे सन्देह कुर्वन्ति, किन्तु नारदीयपुराणोक्तोपाख्याने ब्रह्माण्डपुराणस्य पूर्णैकता विद्यते। अतस्तेषा सन्देहो व्यर्थोऽप्रामाणिकोऽसङ्गतश्च।

अत्रेदमनुमीयते यत् डा० विल्सनप्रभृतयो ब्रह्माण्डपुराण वायुपुराण मत्वा तथोक्त, यतोहि एसियाटिक सोसाइटी कलिकातात: प्रकाशिते ब्रह्माण्डपुराणे भ्रमाद् वायुप्रोक्तसहितायामिति लिखितमस्ति। वस्तुतो नारदीयपुराणानुसार वायुना पुराणमिद व्यासायोपदिष्टमतोऽस्य वायुप्रोक्तपुराणसहिताऽपि नामान्तरमस्ति—

व्यासो लब्ध्वा ततश्चैता प्रभञ्जनमुखोद्गताम्।
प्रमाणीकृत्य लोकेऽस्मिन् प्रावर्तवदनुत्तमाम्॥

विश्वकोशकारेण लिखितमस्ति यद् ब्रह्माण्डपुराणाद् रामायणी कथा निसृताऽस्ति, याऽध्यात्मरामायणनाम्ना प्रसिद्धा। यद्यपि रामायणी कथा पुराणान्तरेष्वप्युपलभ्यते परमाध्यात्मरामायणेऽधिकविस्तारेणाङ्किताऽस्ति, नारदीयपुराणसूच्या रामायणस्य चर्चा नास्ति। अतोऽनुमीयते यत् परसुरामकथानन्तरमेव रामायणी कथा स्याद् या रामायणरूपेण पृथक्

कृताऽस्ति। अस्यैवांशो ललितोव्याख्यानमपि पृथगुपलभ्यते। अथापि श्लोकसंख्याऽस्य ललितोपाख्यानाध्यात्मरामायणयाभ्यां न पूर्णा भवति। एतदंशद्वयातिरिक्तान्यपि ब्रह्माण्डपुराणाद्-गणेशकवच-तुलसीकवच-सिद्ध-लक्ष्मीस्तोत्र-सीतास्तोत्र-ललितासहस्रनाम-सरस्वतीस्तोत्रादीनि निर्गतानि सन्ति बहूनि कवचानि स्तोत्राणि च।

तत्तत्पुराणेषु काश्चित् कथा विस्तृताः काश्चिच्च संक्षिप्ता यथा वायु-पुराणे पद्मपुराणे च यद् गयामाहात्म्यं विस्तृतमस्ति तदेव अग्निपुराणे संक्षिप्तमस्ति। वायुपुराणस्य ५६ श्लोकानां साराशोऽग्निपुराणे केवलं २३ श्लोकैरेवाङ्कितोऽस्ति। मत्स्य-कच्छप-वाराह - वामन-नृसिंहावताराणां कथाऽपि वायुपुराणापेक्षयात्र संक्षिप्तैवास्ति। रामायणस्य सप्तकाण्डकथा अग्निपुराणस्य सप्त परिच्छेदेषु गरुडपुराणे च एकस्मिन्नेव परिच्छेदे, श्रीमद्भागवते च नवमस्कन्धस्याध्यायद्वये एव दत्ताऽस्ति। यदि महा-भारतीया कथा अग्निपुराणे त्रिषु परिच्छेदेषु अस्ति तर्हि गरुडपुराणे एकस्मिन्नेव परिच्छेदे सा गतार्थाऽस्ति। सम्पूर्णहरिवंशश्च ५५ श्लोकेषु एवास्ति। आयुर्वेदस्य विषयो गरुडपुराणे ५७ श्लोकेषु निर्दिष्टस्तर्हि अग्निपुराणे २०० श्लोकेषु एवास्ति। अग्निपुराणे गरुडपुराणे चाभयत्र कार्तिकेयादारभ्य कात्यायनपर्यन्तं व्याकरणस्य चर्चा समागताऽस्ति, परं पाणिनेश्चर्चा नास्ति। अग्निपुराणे शिक्षासम्बन्धिनी वार्ताऽस्ति परं गरुड-पुराणेऽस्याश्चर्चाऽपि नास्ति, न वा नारदीयपुराणेऽस्या उल्लेखोऽस्ति। एवमेवमग्निपुराणे नाट्यशास्त्रसम्बन्धिनां ग्रन्थानां चर्चा तथाऽऽनन्दवर्द्धना-चार्यद्वारा ध्वनेराविष्कारविकारस्य सुन्दरं वर्णनं विद्यते, परन्तु गरुड-पुराणेऽस्य चर्चाऽपि नास्ति।

मिताक्षरा-अपरार्क-कल्पतरु-स्मृतिचन्द्रिका-निर्णयसिन्धु -हेमाद्रिप्रभृतिषु निबन्धग्रन्थेषु ब्रह्माण्डपुराणस्य श्लोकाः पर्याप्तमात्रया समुद्धृताः सन्ति। अत्र सह्यपर्वतस्योत्तरे भागे प्रवहनशीलाया गोदावरीनद्याः प्रदेशाः भारतवर्षेऽतिरमणीया मनोरमाश्चाङ्किताः सन्ति। यदाधारेण विद्वद्भि ब्रह्माण्डपुराणस्य निर्माणस्थलं सह्याद्रि-गोदावरीप्रदेशा एवाभिमताः सन्ति। परसुरामः पूर्वं महेन्द्रपर्वते तपस्यां करोतिस्म, परं पश्चात् समस्तायाः पृथिव्या दानानन्तरं तेन आत्मनोऽर्थे समुद्राद् भूमिर्याचिता या अरबसमुद्र-सह्याद्रिमध्ये वर्तमानाऽसीद्, यत्रेदानीं कोंकणप्रदेशोऽस्ति। एवं परसुरामेण विशेषसम्बन्धाद् ब्रह्माण्डपुराणस्य निर्माणस्थलं सह्याद्रि-

गोदावरीमध्ये भवितुमर्हतीत्यत्र न काप्यापत्ति सम्भवति विचारकाणाम् । आधुनिकाना मतमस्ति नून विचारयाग्यम् ।

डा० किर्फेलमहोदयेन वायुपुराण-ब्रह्माण्डपुराणयोरन्तरङ्गपरीक्षया उभयत्र साम्यशीलानामध्यायाना विशेपरूपेण विश्लेषणं विधायानयोर्निर्माणकाल चतुर्थी शताब्दी स्वीकृता । ब्रह्माण्डे परसुरामचरित महता मनोरञ्जकरूपेण निवद्धमस्ति, यन्महाभारते निर्दिष्टस्य तच्चरित्रस्योपवृहणमुच्यते, तथा ब्रह्माण्डे कियता राजनीतिसम्बन्धितपारिभाषिकशब्दाना विशेष. प्रयोगोऽस्ति, यत्र महाराजाधिराजपद महतो महत्त्वस्यास्ति । इयमुपमा ब्रह्माण्डे पुराणे पर्वतराजाय हिमालयाय प्रदत्ताऽस्ति-दृष्ट्वा जनैरसाव्यो यो महाराजाधिराजवत् ( ३।२२।२८ ) पदस्यास्य प्रयोगो गुप्तनरेशाना समये क्रियते स्म । अत्र कान्यकुब्जनृपतेरपि निर्देशोऽस्ति । यो गुप्तनरेशानामुत्तरकालीनाना मौखरीनरशाना सूचकोऽस्ति । तथाऽस्मिन् पुराणे कालिदासस्य काव्याना तथा तस्य वैदर्मीरीते पूर्णप्रभावो लक्ष्यते । एभि कारणैर्निष्कर्षो नि सरति यद् ब्रह्माण्डपुराणस्य निर्माणकाल: गुप्तकालावन्तर षष्ठ्या शताद्या जात. । तथास्य प्रतिसस्कार. ६००-९०० मध्ये एव जाताऽस्ति ।

## अस्य श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा—

य इदं कीर्तयेद्वत्स । शृणोति च समाहित. ।
स विधूयेह पापानि याति लोकमनामयम् ॥
लिखित्वैतत् पुराणन्तु स्वर्णसिंहासनस्थितम् ।
पात्रेणाच्छादित यस्तु ब्राह्मणाय प्रयछति ॥
स याति ब्रह्मणो लोक नात्र कार्या विचारणा ।

**अष्टादशपुराणश्रवणफलनिर्देश.**

मरचेऽष्टादशैतानि मया प्रोक्तानि यानि ते ।
पुराणानि तु सक्षेपाच्छ्रोतव्यानि च विस्तरात् ॥
अष्टादश पुराणानि य शृणोति नरोत्तम ।
कथयेद्वा विधानेन नेह भूय स जायते ॥
सूत्रमेतत्पुराणाना यन्मयोक्त तवाधुना ।
तन्नित्य शीलनीय हि पुराण फलमिच्छता ॥

न दाम्भिकाय पापाय देवगुर्वनुसूयवे ।
देय कदापि साधूना द्वेषिणे न शठाय च ॥
शान्तायारागिचित्ताय शुश्रुषाभिरताय च ।
निर्मत्सराय शुचये देय सद्वैष्णवाय च ॥

## शैव-वैष्णवादिभेद:

स्कन्दपुराणे अष्टादशाना पुराणाना मध्ये दश पुराणानि शैवपुराणानि कथ्यन्ते, तेषु भगवत शिवस्य गौरव गायते। चत्वारि वैष्णवपुराणानि प्रोच्यन्ते, तेषु श्रीविष्णोर्महिमा वर्ण्यते। द्वयो· ब्रह्मणो महत्त्व प्रकाश्यते। एकस्मिन् अग्ने· महत्त्व प्रदर्श्यते, एकत्र च सूर्यस्य सर्वसवितृत्वं प्रकाश्यते। तथाहि—

तत्र शैवानि शैव च भविष्यं च द्विजोत्तमा ।
मार्कण्डेय तथा लैङ्ग वाराह स्कन्दमेव च ॥
मात्स्यमन्यत्तथा कौर्म वामन च मुनीश्वरा ।
ब्रह्माण्ड च दशेमानि त्रीणि लक्षाणि सख्यया ॥
ग्रन्थाना महिमा सर्वे शिवस्यैव प्रकाश्यते ।
असाधारणया मूर्त्या नाम्ना साधारणे न च ॥
वदन्ति शिवमेतानि शिवस्तेषु प्रकाश्यते ।
विष्णोर्हि वैष्णव तच्च तथा भागवत शुभम् ॥
नारदीय पुराण च गारुड वैष्णव विदु· ।
चत्वारि वैष्णवानीश विष्णो· साम्यपराणि वै ॥
ब्रह्मादिभ्योऽधिक विष्णु प्रवदन्ति जगत्पतिम् ।
ब्राह्म पाद्म ब्रह्मणी द्वे अग्नेराग्नेयमेककम् ॥
सवितुर्ब्रह्मवैवर्तम् एवमष्टादश स्मृतम् ।
ब्रह्मविष्णुमहेशाना साम्य ब्राह्मे पुराणके ॥
अन्येषामधिक देव ब्रह्माण जगता पतिम् ।
प्रवदन्ति दिनाधीश ब्रह्मविष्णुशिवात्मकम् ॥

शैवपुराणानि दश— (१) शिवपुराणम् (२) भविष्यपुराणम् (३) मार्कण्डेय-पुराणम् (४) लिङ्गपुराणम् (५) वाराहपुणाम् (६) स्कन्दपुराणम् (७) मत्स्यपुराणम् (८) कूर्मपुराणम् (९) वामनपुराणम् (१०) ब्रह्माण्ड पुराणम् ।

| | | |
|---|---|---|
| वैष्णवपुराणानि चत्वारि— | (१) विष्णुपुराणम् (२) भागवतपुराणम् (३) नारदीय पुराणम् (४) गरुडपुराम् | |
| ब्राह्मपुराणे द्वे — | (१) ब्रह्मपुराणम् (२) पद्मपुराणम् | |
| आग्नेयपुराणम्--एकम् | (१) अग्निपुराणम् | |
| सावित्रपुराण— च एकमेव। | (१) ब्रह्मवैवर्तपुराणम् | |

## पुराणानां क्रमशः श्लोकसंख्या

ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च।
श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम्॥
दशाष्टौ श्री भागवतं नारदं पञ्चविंशति।
मार्कण्डं नव वह्निं च दशपञ्च चतुःशतम्॥
चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च।
दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु॥
चतुर्विंशति वाराहम् एका कशीतिसहस्रकम्।
स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम्॥
कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दशम्।
एकोनविंशत् सौपर्णं ब्रह्माण्डं द्वादशैव तु॥
एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः।

(श्री मद्भागवते १२।१३।४-८)

एवं वायुपुराणस्य चतुरधिकशततमेऽध्याये तृतीयश्लोकतो दशमश्लोकपर्यन्तमष्टभिः (३–१०) श्लोकैरष्टादशानां महापुराणानां श्लोकसंख्या निर्दिष्टाऽस्ति। तथा ब्रह्मवैवर्तस्य श्रीकृष्णजन्मखण्डे एकत्रिंशदधिकशततमेऽध्यायेऽष्टादशमहापुराणानाम् एकादशत एकविंशतिश्लोकपर्यन्तम् (११–२१) एकादशभिः श्लोकैः श्लोकसंख्यामभिधाय सङ्कलनया समेषां पुराणानां श्लोकसंख्या चतुर्लक्षपरिमिता प्रोक्ताऽस्ति—

एवं पुराणसंख्यानं चतुर्लक्षमुदाहृतम्। १३१।२१

# मत्स्यनारदीयपुराणानुसारमष्टादशपुराणानाम्

## क्रमः, नामानि, श्लोकसंख्या, अध्यायाश्च

| क्रम | पुराणनाम | ना० पु० श्लो०सं० | म० पु० श्लो०सं० | अ० |
|---|---|---|---|---|
| १ | ब्रह्मपुराणम् | १०००० | १३००० | २४५ |
| २ | पद्मपुराणम् | ५५००० | ५५००० | ६४१ |
| ३ | विष्णुपुराणम् | २३००० | २३००० | १२६ |
| ४ | शिवपुराणम् | २४००० | २४००० | ४६४ |
| ५ | श्रीमद्भागवतम् | १८००० | १८००० | ३६५ |
| ६ | नारदीयपुराणम् | २५००० | २५००० | २०७ |
| ७ | मार्कण्डेयपुराणम् | ९००० | ९००० | १३४ |
| ८ | अग्निपुराणम् | १५००० | १६००० | २८३ |
| ९ | भविष्यपुराणम् | १४००० | १४५०० | ३०५ |
| १० | ब्रह्मवैवर्तपुराणम् | १८००० | १८००० | २६६ |
| ११ | लिङ्गपुराणम् | ११००० | ११००० | १६३ |
| १२ | वाराहपुराणम् | २४००० | २४००० | २१८ |
| १३ | स्कन्दपुराणम् | ८१००० | ८११०० | १६७१ |
| १४ | वामनपुराणम् | १०००० | १०००० | ९५ |
| १५ | कूर्मपुराणम् | १७००० | १८००० | ९९ |
| १६ | मत्स्यपुराणम् | १५००० | १४००० | २९० |
| १७ | गरुडपुराणम् | १९००० | १८००० | ३१८ |
| १८ | ब्रह्माण्डपुराणम् | १२००० | १२२०० | १६१ |

अष्टादशपुराणना नाम संख्या तथा क्रम ।
अध्यायाश्च विनिर्दिष्टा चक्रेऽस्मिन् विदुषा मुदे ॥

देवीभागवते त्वष्टादशाना पुराणाना क्रम श्लोकसख्या च—

चतुर्दशसहस्र च मात्स्यमाद्य प्रकीर्तितम् ।
तथा ग्रहसहस्र तु मार्कण्डेय महाद्भुतम् ॥
चतुर्दशसहस्राणि तथा पञ्चशतानि च ।
भविष्य परिसख्यात मुनिभिस्तत्त्वदर्शिभिः ॥
अष्टादशसहस्र वै पुण्य भागवत किल ।
तथा चायुतसख्याक पुराण ब्राह्मसज्ञकम् ॥
द्वादशैव सहस्राणि ब्रह्माण्ड च शताधिकम् ।
तथाष्टादशसाहस्र ब्रह्मवैवर्तमेव च ॥
अयुत वामनाख्य च वायव्य षट्शतानि च ।
चतुर्विंशतिसख्यात सहस्राणि तु शौनक ! ॥
त्रयोविंशतिसाहस्र वैष्णव परमाद्भुतम् ।
चतुर्विंशतिसाहस्र वाराह परमाद्भुतम् ॥
षोडशैव सहस्राणि पुराण चाग्निसज्ञकम् ।
पञ्चविंशतिसाहस्र नारद परम मतम् ॥
पञ्च पञ्चाशत्साहस्र पद्माख्य विपुल मतम् ।
एकादशसहस्राणि लिंगाख्य चातिविस्तृतम् ॥
एकोनविंशसाहस्र गारुड हरिभाषितम् ।
सप्तदशसहस्र च पुराणं कूर्मभाषितम् ॥
एकाशीतिसहस्राणि स्कन्दाख्य परमाद्भुतम् ।
पुराणाख्या च सख्योक्ता विस्तरेण मयाऽनघा ! ॥

( दे० भा० १।३।३-१२ )

एवमष्टादशभेदैर्विभक्तेषु पुराणेषु योगबलेन त्रिकालदर्शिना महर्षिणा वेदव्यासेन आदर्शमानवचरित्रचित्रण, सर्वधर्मरहस्यकीर्तन, वर्णाश्रमव्यवस्थाप्रतिपादन, सर्वदर्शनरहस्यसमर्थन, कर्तव्यपथप्रदर्शन, असत्पथनिवृत्तिमार्गसूचन, ज्ञानस्य भक्ते· कर्मणश्च निरूपण, अवतारस्य विवेचन च महता कौशलेन कृतमस्ति । कि बहुना पुराणेषु सर्वोपयोगिनो ज्ञातव्या विषया यथास्थान निवेशिता सन्ति । अत एव पुराणानि भारतीयसस्कृतेः हृदयमेवेति कथने नास्ति कश्चिदपि अतिशयोक्तिलेश । अतो हिन्दुजाते. प्राणवत्प्रयस्य सर्वाभ्यर्हितस्य, वेदवदादरणीयस्य, मानवजीवनलक्ष्यभूतभगवत्प्राप्त्युपायप्रदर्शकस्य सर्वै धार्मिकशिरोमणिभि. मानवर्माणाभः

सर्वथा समादृतस्य सम्प्रदायाविरोधेन सर्वदर्शनसिद्धान्तसर्वोपासनारहस्य-समर्थनशीलस्यालौकिकभावगुम्फितस्य भगवत आज्ञस्वरूपस्य पुराण-समूहस्याध्ययनानुशीलनादिकमवश्य कर्तव्यमेव हिन्दुभि । अत एवोक्त महाभारतस्यानुशासनपर्वणि—

पुराण मानवो धर्म साङ्गोपाङ्गश्चिकित्सक ।
आज्ञासिद्धानि सर्वाणि न हन्तव्यानि हेतुभि ॥

## उपपुराणादीना पर्यालोचनम्

अष्टादशमहापुराणवद् अष्टादशसख्याकानि उपपुराणानि औपपुराणानि च विद्यन्ते, येषा निर्माण महापुराणानामाधारेण जातमस्ति। प्राचीनकालिकै विभिन्नैर्मुनिभि अष्टादशाना महापुराणाना छायामाश्रित्यैव उपपुराणानामौपपुराणानाञ्च रचना कृताऽस्ति । विस्तारभिया उपपुराणेषु औपपुराणेषु च क्वचन महापुराणाना कथा सूक्ष्मीकृता, कुत्रचित् परित्यक्ता, कुत्रचिच्च चमत्कारानयनाय विलक्षणाना कथाना समावेश. कृतोऽस्ति, क्वचन चाभिनवतानिवेशाय कथासु किञ्चित् परिवर्तनमपि कृतं वर्तते । एव वैशिष्ट्ये जातेऽपि उपपुराणानि महापुराणवेदवादरणीयानि स्पृहणीयानि मान्यानि श्रद्धेयानि च सन्ति । यतस्तानि तत्तन्महापुराणेभ्य एव भाव सगृह्य तत्तन्मुनिभि प्रणीतानि सन्ति, यस्य सङ्केतो विभिन्नेषु पुराणेषूपलभ्यते—

आष्टादशभ्यस्तु पृथक् पुराण यत् प्रदृश्यते ।
विजानोध्व द्विजश्रेष्ठास्तथा तेभ्यो विनिर्गतम् ॥

( मत्स्यपुराणे ५३।६३ )

एवं महापुराणाना परिचयप्रसङ्गे विष्णुपुराणे उल्लिखित विद्यते यद् अष्टादशभ्यो महापुराणभ्योऽतिरिक्तानि यानि पुराणानि समुपलभ्यन्ते, तानि विभिन्नै मुनिभि कृतानि ज्ञेयानि—

महापुराणान्येतानि ह्यष्टादश महामुने ।
तथाचोपपुराणानि मुनिभि कथितानि च ॥

( विष्णुपुराणे ३।६।२४ )

गरुडपुराणेऽपि अष्टादश महापुराणानि गणयित्वा तत्तन्मुनिभि कृतानामुपपुराणानामुल्लेखो । वर्तते—

अन्यान्युपपुराणानि मुनिभि कथितानि तु । ( ग० पु० ११५।१६ )

इत्थ महापुराणेभ्य पृथक् यानि पुराणानि प्राप्यन्ते, तानि तेभ्य एव निर्गतानि मन्तव्यानि। अत उपपुराणाना स्रोतांसि महापुराणानि सन्तीत्यत्र न काचिदस्ति सशीति । अत एव च तुल्यन्यायेन महापुराणानामिवोपपुराणानामपि प्रामाण्यमङ्गीक्रियते विपश्चिद्भि —

अन्याश्च सहिता सर्वा मरीचिकपिलादय. ।
सर्वत्र धर्मकथने तुल्यसामर्थ्यमुच्यते ॥

स्कन्दपुराणानुसार तूपपुराणानि साक्षाद् ब्रह्मणैव प्रोक्तानि सन्ति—

तथैवोपपुराणानि यानि चोक्तानि वेधसा ।
(स्क० पु० रेवाखण्डे १।४१)

उपपुराणसख्या विमर्श

कियन्तो विपश्चितो निश्चिन्वति यद् यथा महापुराणाना सख्या अष्टादश नियता सन्ति तथोपपुराणाना सख्या निश्चिता नास्ति । यतो हि अष्टादशभ्य उपपुराणेभ्योऽपि अतिरिक्तानि पुराणानि समुपलभ्यन्ते । अत उपपुराणाना सख्या अस्ति असख्या, किन्तु मतमेतन्नास्ति सुसङ्गतम्, यतो हि महापुराणानामिव उपपुराणानामपि सख्या नियता एव सन्ति, अष्टादश । अतोऽष्टादशमहापुराणवद अष्टादशानि उपपुराणनि अपि निभाल्यन्ते पुराणेषु । एवञ्च यथा अष्टादशानि महापुराणानि विद्यन्ते तथैवाष्टादशसख्याकानि उपपुराणान्यपीति निर्विवादम् । तथाचोक्त ब्रह्मवैवर्ते महापुराणे—

अष्टादशपुराणानामेवमेव विदुर्बुधाः ।
एवञ्चोपपुराणानामष्टादश प्रकीर्तिता ॥
(ब्र० वै० श्रीकृष्णजन्मखण्डे १३१।२२)

स्कन्दपुराणेऽपि उपपुराणाना गणनाप्रसङ्गे तानि अष्टादशसख्याकान्येव प्रोक्तानि सन्ति—

पाराशर भागवतं कौर्मञ्चाष्टादश क्रमात् ।
(स्क० पु० रेवाखण्डे १।५८)

प्रतिमहापुराणमेकैकमुपपुराणं प्रादुर्भूत विद्यते । अत एवमहापुराणवदुपपुराणान्यपि अष्टादशैव सन्ति । यथा महापुराणानि हिन्दुजातेर्जीवन-

स्यास्ति प्रमुख आधार तथैवोपपुराणान्यपि प्राचीनभारतीयगौरवचिन्तनस्य विकाशे, सर्वोपकारिण्या अनन्यसाधारणाया भारतीयसस्कृतेः प्रचारे, ऐतिहासिकतत्त्वस्य प्रकाशे, धार्मिकव्यवस्थाया प्रसारे, वर्णाश्रमव्यवस्थाया सरक्षणे च महान्ति उपकारकाणि विद्यन्ते। अतस्तान्यपि महापुराणवत् प्राचीनानि प्रामाणिकानि श्रद्धेयास्पदानि चाभिमतानि सन्ति। मत्स्यपुराणानुसारमुपपुराणानि महापुराणाना सन्ति उपभेदा, न तानि सन्ति स्वतन्त्रग्रन्थरूपाणि। तथा हि—

उपभेदान् प्रवक्ष्यामि लोके ये सम्प्रतिष्ठिता ॥

( मात्स्यपुराणे ५३।५९ )

परन्तु अनेके गवेषका विद्वासो महापुराणवदुपपुराणान्यपि स्वतन्त्रग्रन्थरूपाणि मन्यन्ते। अतएव धर्मशास्त्रनिबन्धकारैः तानि स्वतन्त्रग्रन्थान् मत्वा स्वस्वनिबन्धग्रन्थेषु महता समादरेण तेषा वचनानि समुद्धृतानि सन्ति। उपपुराणना वर्णनपद्धतौ चमत्काराय महान् प्रयासो विहितो विद्यते, येनाभासो भवति यदिमानि नातिप्राचीनानि सन्ति। अपिच महापुराणेषु अनुक्ता अपि बहवो विषया उपपुराणेषु महत्या रोचक शैल्या उल्लिखिता. सन्ति, येषामनुशीलनेन तदध्ययने उत्तरोत्तरमुत्कण्ठा वर्द्धते। एवसत्यपि आस्तिकजगति लोकप्रियताद्वाढ्या महापुराणाना यादृगस्ति समादरो न तादृगुपपुराणानाम्। किञ्च यथा पुराणशब्दश्रवणसमकालमेव महापुराणाना सहसा स्मरणमुपजायते, न तथोपपुराणाना स्मृति जायते। तथापि तानि महापुराणवन्मान्यानि गण्यानि च सन्त्येव, यतो हि उपपुराणानामपि उद्दृश्य तदेवास्ति यन्महापुराणानामस्ति लक्ष्यभूतम् भक्त्या भगवत्समासादनादिकम्।

## उपपुराणनामानि यथा—

(१) आदिपुराणम् (२) नरसिहपुराणम् (३) स्कन्दपुराणम् (४) शिवधर्मपुराणम् (५) दुर्वास.पुराणम् (६) नारदीयपुराणम् (७) कपिलपुराणम् (८) वामनपुराणम् (९) औशनसपुराणम् (१०) ब्रह्माण्डपुराणम् (११) वरुणपुराणम् (१२) कालिकापुराणम् (१३) माहेश्वरपुराणम् (१४) शाम्बपुराणम् (१५) सौरपुराणम् (१६) पाराशरपुराणम् (१७) मारीचपुराणम् (१८) भास्करपुराणञ्च। इमानि सन्ति अष्टादशोपपुराणानि। तथाहि—

आद्य सनत्कुमारोक्त नारसिंहमथापरम् ।
तृतीय स्कान्दमुद्दिष्ट कुमारेण च भापितम् ॥
चतुर्थ शिवधर्माख्य साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्य नारदीयमतः परम् ॥
कपिल वामन चैव तथैवोशनसेरितम् ।
ब्रह्माण्ड वारुण चाथ कालिकाह्वयमेव च ॥
माहेश्वर तथा शाम्ब सौर सर्वार्थसचयम् ।
पराशरोक्तमपर मारीच भास्कराह्वयम् ॥
( कूर्मपुराणस्य पूर्वार्द्धे १।१७-२० )

एवमेव किञ्चिच्छब्दान्तरेण नामान्तरेण च देवीभागवते (३।१३।१६) स्कन्दपुराणस्य रेवाखण्डे ( १।४८-५२ ) मत्स्यपुराणे ( ५३।५७-६२ ) गरुडपुराणे च ( २१५।१७-२० ) उपपुराणाना स्पष्टमुल्लेखा विद्यते ।

यथा वायुपुराण-शिवपुराण—श्रीमद्भागवत-देवीभागवतातिरिक्तानां महापुराणाना नामविपये समेषा पुराणानामैक्यमत्रमस्ति, न तथोपपुराणाना नामसम्बन्धे पुराणाना मतैक्यमुपलभ्यते । तत्तत्पुराणेषूपपुराणाना नामानि भिन्नानि भिन्नानि समवाप्यन्ते । केवल हि द्वादशानामादिपुराण-नरसिंहपुराण-दुर्वासःपुराण - नारदीयपुराण - कपिलपुराण-औशनसपुराण-वरुणपुराण - कालिकापुराण - माहेश्वरपुराण-शाम्बपुराण-सौरपुराण-पराशरोपपुराणाना नामानि कूर्म स्कन्द-गरुड देवीभागवतपुराणेषु समानानि मिलन्ति, किन्तु शिष्टाना पण्णामुपपुराणाना नामानि तु विभिन्नानि उपलभ्यन्ते । अपि च मत्स्यपुराणे चतुर्णा नरसिंहपुराण-नन्दीपुराण-शाम्बपुराण-आदित्यपुराणानामेव नामान्युपलभ्यन्ते तथाहि—

पाद्मे पुराणे तत्रोक्त नारसिंहोपवर्णनम् ।
तच्चाष्टादशसाहस्र नरसिंहमिहोच्यते ॥
नन्दाया यत्र माहात्म्य कार्तिकेयेन वर्ण्यते ।
नन्दीपुराण तल्लोकैराख्यातमिति कीर्त्यते ॥
यत्र शाम्ब पुरस्कृत्य भविष्येऽपि कथानकम् ।

प्रोच्यते तत्पुनर्लोके शाम्बमेतन्मुनिव्रता ॥
एवमादित्य सञ्ज्ञा च तत्रैव परिगीयते ।
( मत्स्यपुराणे ५३।५९-६२ )

## औपपुराणानि

यथाष्टादश महापुराणानि अष्टादशोपपुराणानि च सन्ति तथैवाष्टादशौपपुराणान्यपि विद्यन्ते । तथाहि (१) सनत्कुमारपुराणम् (२) वृहन्नारदीयपुराणम् (३) आदित्यपुराणम् (४) सूर्यपुराणम् (५) नन्दिकेश्वरपुराणम् (६) कौर्मपुराणम् (७) भागवतपुराणाम् (८) वसिष्ठपुराणम् (९) भार्गवपुराणम् (१०) मुग्दलपुराणम् (११) कल्किपुराणम् (१२) देवीपुराणम् (१३) महाभागवमपुराणम् (१४) वृहद्धर्मपुराणम् (१५) परानन्दपुराणाम् (१६) वह्निपुराणम् (१७) हरिवशपुराणञ्च—

अद्य सनत्कुमार च नारदीय वृहच्च यत् ।
आदित्य भानव प्रोक्त नन्दिकेश्वरमेव च ॥
कौर्म भागवत ज्ञेय वासिष्ठ भार्गव तथा ।
मुद्गल कल्किदेव्यौ च महाभागवत तत ॥
वृहद्धर्म परानन्द वह्नि पशुपति तथा ।
हरिवश ततो ज्ञेयमिदमौपपुराणकम् ॥
( वृहद्विवेके ३ )

एव श्रीस्वामिना ज्ञानानन्दसरस्वतीमहोदयेन स्वकीये धर्मकल्पद्रुमे अष्टादशानामुपौपपुराणानामपि सङ्केत कृतोऽस्ति । तन्मतेन पञ्चप्रकारकाणि पुराणानि सन्ति—(१) पुराणानि ( महापुराणानि (२) उपपुराणानि (३) औपपुराणानि (४) उपोपपुराणानि (५) उपौपपुराणानि च तथाचैवविध भेदमजानाना केचन महापुराणेतराणा सर्वेषामुपपुराणत्वेन गणन विधाय सर्वाणि उपपुराणेष्वेवान्तर्भावयन्ति । तेषा मते असख्यातानि सन्ति उपपुराणानिति सुधीभिर्विभाव्यमत्रत्य स्वारस्यम् ।

## सौर-शैव-शाक्तादिभेदाः

यथा महापुराणेषु सौर-शैव-शाक्त-वैष्णवादिभेदा वर्तन्ते तथैवोपपुराणेष्वपि सौर-शैव-शाक्त-वैष्णव-गाणपत्यादिभेदा अपि विद्यन्ते। यथा सूर्यपुराणम्, शाम्बपुराणम् भास्करपुराणम्, आदित्यपुराणम्, वह्निपुराणम्, सौरपुराण सौरधर्मोत्तरपुराणञ्च सौरोपपुराणेषु परिगण्यन्ते। शाक्तोपपुराणेषु कालिकापुराणम्, देवीपुराणम्, महाभागवतम्, नन्दीपुराणम्, बृहन्नन्दिकेश्वरपुराणम्, शारदापुराणञ्च वर्तन्ते। शिवधर्मपुराणम्, माहेश्वरपुराणम्, पशुपतिपुराणम्, स्कन्दपुराणञ्च शैवोपपुराणेषु स्वीक्रियन्ते। वैष्णवोपपुराणेषु, विष्णुधर्मोत्तरपुराणम्, विष्णुधर्मपुराणम्, नरसिंहपुराणम्, बृहन्नारदीयपुराणम्, नारदोपपुराणम्, आदिपुराणम्, कल्किपुराणम्, पराशरपुराणम्, परानन्दपुराणम्, सनत्कुमारपुराणम्, वसिष्ठपुराणम्, मरीचिपुराणम्, वरुणपुराणम्, दुर्वासपुराणम्, औशनसपुराणम्, हरिवंशपुराणञ्च विद्यन्ते। गाणपत्योपपुराणेतु द्वयोरेव मुद्गल-गणेशपुराणयोर्गणना भवति।

## उपपुराणानां कालनिर्णय

उपपुराणाना रचनाकालस्य विषये विपश्चितां महानस्ति मतभेद। बहूना विदुषा विश्वासो विद्यते यदुपपुराणानि न सन्ति, प्राचीनानि, किन्तु निर्विवादमुपपुराणानि अतिप्राचीनकालत एव महापुराणेभ्यः तत्तन्मुनिभि सगृहीतानि सन्ति। वेदानां मर्मज्ञेन मनीषिणा षड्गुरुशिष्येण स्वकीये ग्रन्थे वेदार्थनिर्णये नरसिंहोपपुराणस्य कियन्त श्लोका उद्धृताः सन्ति। ऐतिहासिकनिर्णयानुसार षड्गुरुशिष्यस्य प्रादुर्भाव एकादश शताब्द्या जात आसीत्। इतोऽपि पूर्वं १०३० ईशवीये वर्षे भारतभ्रमणार्थमागत्याल्वेरुणि अत्रत्यानां विदुषा साहायेन विशेष ज्ञान सम्प्राप्य भारतभ्रमणविषयमेक ग्रन्थ लिखितवान्। तस्य द्वादशे परिच्छेदे तेन पुराणाना विवरण प्रस्तुवता सोम-शाम्ब-नन्दा-आदित्य-नरसिंहादिपुराणाना नामोल्लेख कृतो वर्तते। एतेन स्पष्ट प्रतीयते यत्तस्मिन् समये एषामुपपुराणानामपि विद्वद्वर्गे विशिष्ट समादरो जात आसीत्। अतो दशम शताब्दी पर्यन्तमुपपुराणना निर्माणे न काप्यनुपपत्तिः सम्भवति इतः परमुपपुराणाना कालनिर्णय प्रयासोऽसङ्गत एव प्रतिभाति।

विन्टरनित्समतानुसारं तूपपुराणानां रचनाकालः षष्ठशताब्दीतो दशमशताब्दीं यावदेव भवितुमर्हति।[1] डा० वयुलारमतेन पञ्चम-शताब्द्या उत्तरकाल एवोपपुराणानां निर्माणकालः समुचितः प्रतिभाति।[2] किन्तु डा० आर० सी० हाजरामहोदयः उपपुराणानां प्रणयनकालम् ई० पू० ५०० वर्षेभ्यः पूर्वमेव मनुते।[3] एवमुपपुराणानां रचनाकाल-सम्बन्धे विभिन्नानां विदुषां भिन्नानि मतानि विद्यन्ते। तत्र युक्तायुक्तत्वं समालोचकैः मनीषिभिः स्वयमेव समूहनीयम्।

## उपपुराणानां वैशिष्ट्यम्

उपपुराणेषु प्रायः एकैकं कमपि देवविशेषमुद्दिश्य तन्माहात्म्यं विशदतया विवृतं विद्यते। यद्यपि महापुराणेष्वपीयं प्रक्रिया प्राप्यते यथा शैवपुराणेषु भगवतः शिवस्य, वैष्णवपुराणेषु भगवतो विष्णोः, शाक्त-पुराणेषु च भगवत्याः शक्त्या एव माहात्म्यातिशयः सूचितो वर्तते, तथापि उपपुराणेषु इयं सरणिर्विशेषतोऽनुसृताऽस्ति।

स्थावरजङ्गमात्मकस्य जगतो यद् मूलभूतमेकं परं ब्रह्मैव मुख्यतया उपास्यं विवक्षितं तन्न स्वरूपतः सम्भवति, यतो हि तस्य 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, यन्मनसा न मनुते' इत्यादिभिः श्रुतिभिः वाङ्मनसोरविषयताया स्पष्टमुद्घोषितत्वात्। अतः तस्मिन् मनोनिवेशः तदुपासनमितिनियमात् मनोवाग्विषयावगाहनस्यासंभवे, तत्र न मनोनिवेशः कर्तुं शक्यः, नापि तस्य वचसा स्तुतिः सम्भवति। अस्माद्धेतोः सगुण-साकार-रूपाणि आधारीकृत्य तस्मिन् मनोनिवेश्यमिति साधीयानस्ति मार्गः। तानि च सगुण-साकाररूपाणि अधिकारिभेदात् पञ्चविधानि तत्तच्छास्त्रेषु निरूपितानि सन्ति। यथा सर्वलोकपालकः भगवान् विष्णुः, सकलसंहारकः भगवान् शिवः, जगज्जननी शक्तिः, विश्वस्यात्मा भगवान् भास्करः, विघ्नविघातको गणपतिश्च। एषु विशिष्टेषु पञ्चसु देवेषु कस्मिंश्चिदेकस्मिन् देवे स्वकीयरुच्यनुसारं ब्रह्मबुद्धिर्विधेया उपासकेन। येनोपासकेन यो देवः परब्रह्मतया भाव्यते, स एव तद्दृष्टौ सर्वतः प्रधानम्, अन्ये च देवाः तदनुगामिनो भवन्ति। अनेकेषु देवेषु परब्रह्मतया भावितेषु सम्यगुपासना

१ हिस्ट्री आफ इण्डियन लिट्लेचर पृ० ८०

२ इण्डियन इण्टिक्वेरी वा० १९ पृ० ४०८

३. स्टडीज् इन् दि उपपुराणाज् वा० १ पृ० २१२

न भवितुमर्हति। यतो हि मनस एकाग्रतैवास्ति उपासनाया वास्तविक फलम्। अनेकत्र च निवेशित मन एकाग्र भवितु नार्हति। तस्माद्बहुत्र मनस स्थैर्याभावाद् ब्रह्मबुद्धिरेकस्मिन्नेवकस्मिन् देवे कर्तव्या, परमितरपु च देवेषु विद्वेषो न विधेय।

परब्रह्मतया भावितो देव एव सर्वतो मुख्य इत्येव पुराणेषूपपुराणेषु च प्रख्यापितम्। अत एवोक्त भगवता पतञ्जलिनाऽपि स्वकीये योग-दर्शने—यथाभिमतध्यानाद्वा (१।२४) यस्याधिकारिण स्वभावद् यत्र देवे अभिरुचि, स एव देव तेन ध्यातव्य इति तदर्थ।

तदित्थ विभिन्नतया मनोनिवेशार्थ स्वीकृतेषु अनेकेषु देवेषु वैष्णव-पुराणेषु भगवान् विष्णुरेव सर्वश्रेष्ठो मन्यते। तदाज्ञयैवान्ये देवा स्वस्व-कर्मणि प्रवर्तन्ते। शैवपुराणेषु भगवानाशुतोष एव कर्तुमकर्तुमन्यथा कर्तु सर्वथा समर्थो वर्ण्यते। शाक्तपुराणेषु जगदधिष्ठात्री आद्या शक्तिरेव सर्व विधातु समर्था, तदनुकम्पयैव ब्रह्म-विष्णु-महेश्वराअपि सृष्टिस्थित्यु-त्पत्तिव्यवहारेषु प्रभवा भवन्ति। सौरेषु पुराणेषु भगवान् भास्कर एव समस्तस्यास्य विश्वस्यात्मत्वेनाख्यातो जगज्जाल सञ्चालयति। गाणपत्योपपुराणेषु च भगवान् गणपतिरेव परब्रह्मतया ध्यातुमिष्ट। तत्र मुद्गलपुराणे ऋद्धि सिद्धिश्चेतीमे द्वे गणपते भार्यात्वेन व्याख्याते स्त। यदा गज स्वीय शुण्डादण्ड स्वमुखे निवेश्य निमिलितनेत्रो भवति तदा मण्डलाकार तन्मुखमेकरूप दृश्यते, नच तस्यावयवभेद प्रतीयते इति निर्विकल्पक समाधिसाम्यमभिहितम्। केवल वेद्यविषयाकाराकारैव वृत्तिर्भवतीत्येकदन्तरूपेण तदेव सूचितम्। तद्विग्रहे विभिन्नावयवप्रतीत्या तस्य ससाररूपता प्रस्फुटैव। चतुर्भिर्भुजैश्चतुर्दिग्व्याप्ति सूच्यते। गणपते-श्चतुर्षु करेषु चत्वारि पाशाङ्कुशमोदककमलानि चिन्हानि चतुर्विधाना धर्मार्थकाममोक्षाणा सूचकानि सन्ति। तत्राकुशो धर्मरूप नियन्त्रित्वेन धर्मस्याङ्कुशसाजात्येन प्रवृत्तिदर्शनात्। पाशोऽर्थरूपः, अर्थरूपेण पाशेनैव जीवाना विशेषतो बन्धनदर्शनात्। मोदक कामरूपम्, तात्कालिक-सुखरूपमोदहेतुत्वात्। कमल जले वर्तमानमपि न मनाग्जलेन लिप्यते इति मोक्षरूप तद् भगवतो गणपते र्हस्ते स्थितम्। एवं यथाधिकार-मुपासकै सेवमानो भगवान् गणपतिश्चतुरोऽपि पुरुषार्थान् भक्तेभ्यो नून प्रददातीति सर्वसिद्धिकरत्वं तस्य स्पष्टतरमेव। यथा मूषक पृथिव्या

प्रच्छन्न एव निवसति, प्रछन्न एव च वन्धनानि छनत्ति तथैव ब्रह्मरूपो गणगतिरपि समेषा प्राणिनामन्तर्निगूढो निवसति, प्रच्छन्न. सन्नेव भक्तानां विघ्नव्यूहान् च छिनत्तीति भगवतो गेणपते मूंषकवाहनस्यास्ति रहस्यम् । गणपते शरीर ससाररूपम् ससारिणा चोदर दुष्पूर भवति । वहुतरे भोगेऽपि तत्र शान्तेरभवदर्शनात् । अत एव तस्योदर वहुविस्तृत दृश्यते । अतएवोक्त भगवतो गणपते. स्तुतौ–'लम्बोदर परमसुन्दरमेक दन्तम' इत्यादि । ब्रह्मरूपो गणपति ससारिणामुदरं प्रविश्य भुक्तमन्नपानादिकं सर्वं सम्यक् पाचयति—

अह वैश्वानरो भूत्वा प्राणिना देहमास्थित ।
प्राणापानसमायुक्तो पचाम्यन्न चतुर्विधम् ॥

इति श्रीमद्भगवद्गीताया गणपत्यभिन्नत्वेन भगवता श्रीकृष्णनेनाभिधानात् । तस्मात् परेपामुदरं प्रविश्य भोगकरणात्तस्य महदुदरत्वं ख्याप्यते । एव भगवतो गणपते स्वरूप तत्र स्थाने स्थाने निरूपित वर्त्तते, यत्र तत्र विचित्राभि कथाभिश्च गणपतेरेव पञ्चसु देवेषु प्राधान्य प्रख्यापितम् ।

अथेकदा विश्वस्यात्मान सवितार ध्याननिरत विलोक्य तद्रथेन सहैव भ्रमद्भि र्वालखिल्यै.—भवान् कमभिध्यायतीति साश्चर्य पृष्ट. स.–गणपतिररस्माक सर्वेषामधिष्ठाता, स एव परं ब्रह्म तदाज्ञयैव सर्वे वयं तत्तत्कर्मसु प्रवर्तामहे । तमेवाहमभिध्यायामीति भगवतः सूर्यस्योक्त्या गणपते पर ब्रह्मत्व साधितम् ।

एवं गाणपत्योपपुराणेषु गणपत्युपासनया विविधं फल प्रदर्श्य रामकृष्णयुधिष्टिरादीनामपि गणपत्युपासन निर्दिष्टम् । अतो महिम्नः स्तोत्रे—

रुचीना वैचित्र्यादृजु कुटिल नानापथजुषा ।
नृणामेको गम्यस्त्वमसि पयासामर्णव इव ॥

इति पुष्पदन्ताचार्यभणतिनिर्दशात् पुराणोपपुराणौप-पुराणोपोपपुराणानि आश्रित्य स्वरूच्यनुसार यस्मिन् कस्मिन्नप्येकस्मिन् देवे परब्रह्मवुद्धि विधाय तदुपासनया साधकै आत्मकल्याण कार्यमिति पौराणिकाना विपश्चिता पारमार्थिकोऽस्ति पन्थाः ।

पञ्चम परिच्छेद

# पुराणलक्षणसमीक्षा

लक्षणप्रमाणाभ्या वस्तुसिद्धिरिति नियमाल्लक्षणज्ञानस्यावश्यकत्वेन किंलक्षणक पुराणमिति जिज्ञासाया तत्तत्पुराणेषु पुराणलक्षणवर्णनप्रसङ्गे प्रोक्तमस्ति यत् सृष्टि, प्रलय, प्रसिद्धराजवशपरम्परा, मन्वन्तराणि, देवर्षिराजवशेषु समुत्पन्नाना विशिष्टव्यक्तीना पावनचरितवर्णनञ्चेति पञ्च विषया प्रधानतया यस्मिन् ग्रन्थे विवेचिता. सन्ति तत् पुराणमुच्यते—

> सर्गश्च प्रतिसर्गश्च वशो मन्वन्तराणि च ।
> वशानुचरित चेति पुराण पञ्चलक्षणम् ॥

अत्र सर्गो नाम सृष्टि = जगत उत्पत्ति. । प्रतिसर्गो नाम दृश्यमानस्य समस्तस्य प्रपञ्चस्य प्रलय । वशो विश्वस्यापादानभूताना तत्त्वाना देवर्षिमनुष्याणा चोत्पत्तिपरम्परा । मन्वन्तर नाम सृष्ट्यादीनां कालव्यवस्थापनम् । वशानुचरित च तत्तद्वशभवाना मनुष्याणा राजर्षीणा महर्षीणां च विषये यद् वक्तव्य तद्विवरणोपस्थापनम् ।

## पुराणस्य पञ्चलक्षणसमन्वय:

समन्वय विष्णुपुराणे प्रथमाशस्य प्रथमेऽध्याये नित्यनियमनिवृत्त मुनिवर पराशरं प्रति सर्वशास्त्रतत्त्वज्ञस्य मैत्रेयस्य सप्रणामप्रार्थनायाम्—

> यन्मय च जगद् ब्रह्मन् ! यतश्चैतच्चराचरम् ।
> लीनमासीद् यथा यत्र लयमेष्यति यत्र च ॥
> यत्प्रमाणानि भूतानि देवादीनाञ्च सम्भवम् ।
> समुद्रपर्वताना च सस्थानं च यथा भुव ॥
> सूर्यादीना च सस्थानं प्रमाण मुनिसत्तम ।
> देवादीना तथा वशान् मनून् मन्वन्तराणि च ॥
> कल्पान् कल्पविभागांश्च चातुर्युगविकल्पितान् ।
> कल्पान्तस्य स्वरूपं च युगधर्मांश्च कृत्स्नश ॥

देवर्षिपार्थिवाना च चरित यन्महामुने ।
वेदशाखाप्रणयन यथावद् व्यासकर्तृकम् ।।
धर्माश्च ब्राह्मणादीना तथा चाश्रमवासिनाम् ।
श्रोतुमिच्छाम्यह सर्व त्वत्तो वासिष्ठनन्दन ।।
( वि० पु० १।१।९-१४ )

अत्र भूताना प्रमाण देवादीना सम्भव, समुद्रपर्वतादीना भुव सूर्यादीना च सस्थानमिति सर्वं सर्गेऽन्तर्भवति, चराचरस्य प्रलय प्रति-सर्गे, देवादीना वश वशे, कल्प-कल्पविभागयुगधर्माश्च मन्वन्तरे, देवर्षिपार्थिवादीना चरित वेदशाखाविभागश्चेति सर्व वशानुचरिते-ऽन्तर्भवति ।

प्रशस्त पुराणलक्षणमिद किञ्चित् पाठभेदेन एकरूपेण वा विष्णु-पुराणे । ( ३।६।२४ ) मत्स्यपुराणे ( ५३।६४ ) मार्कण्डेयपुराणे (१३७।१३) देवीभागवते ( १।२।१८ ) शिवपुराणस्य वायवीयसहिताया पूर्वार्द्धे ( १।४१ ) अग्निपुराणे ( १।१४ ) भविष्यपुराणे ( २।२५ ) ब्रह्मवैवर्ते ( १३१।६ ) कूर्मपुराणस्य पूर्वार्द्धे ( १।१२ ) वाराहपुराणे ( २।४ ) गरुड-पुराणस्याचारकाण्डे ( २।२८ ) स्कन्दपुराणस्य प्रभासखण्डे ( २।८४ ) ब्रह्माण्डपुराणस्य पूर्वभागे (१।३८) शुक्रनीतौ च ( ४।९३ ) समुपलभ्यते । अमरसिहप्रभृतिभि कोशकारैरपि अद पुराणलक्षण यथैवाङ्गीकृतम् । किन्तु श्रीमद्भागवतस्य द्वितीये स्कन्धे दशमाध्याये पुराणानि दशलक्षण-लक्षितानि प्रोक्तानि—

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतय ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रय ।।
दशमस्य विशुद्धचर्थ नवानामिह लक्षणम् ।
वर्णयन्ति महात्मान. श्रुतेनार्थेन चाञ्जसा ।।
( श्री० भा० २।१०।१.२ )

## दशलक्षणसमन्वय:

श्रीमद्भागवते महापुराणे एतल्लक्षणसमन्वयकारिणा विपश्चिता मतमस्ति यत् श्रीमद्भागवतस्य प्रथमद्वितीयौ स्कन्धौ स्त उपोद्घातस्वरूपौ अतएतयोराद्ययोर्द्वयो· स्कन्धयोर्नहि लक्षणसमन्वयो भवितुमर्हति, किन्तु

तृतीयस्कन्धतो द्वादशस्कन्धपर्यन्त दगसु स्कन्धेपु क्रमशो दशाना लक्षणाना भवति समन्वय । तथाहि—तृतीये स्कन्धे ३३ अध्याया सन्ति, तेपु सर्गस्यकारणसृष्टे तत्त्वानामुत्पत्तिप्रक्रियाया वर्णन विद्यते। चतुर्थे स्कन्धे सन्ति ३१ अध्याया, येषु विसर्गस्यकार्यसृष्टेश्चराचरस्य जगतो वर्णनमस्ति। पञ्चमे स्कन्धे २६ अध्याया सन्ति, यत्र तृतीयलक्षणस्य स्थानस्यजम्बूद्वीपादीना स्थितेर्वर्णन जातमस्ति। षष्ठे स्कन्धे १९ अध्याया सन्ति, तेपु चतुर्थलक्षणस्यानुग्रहणरूपस्यपोषणस्याऽजामिलादि-रक्षाया पुष्टि कृताऽस्ति। सप्तमे १९ अध्याया. सन्ति, तत्र ऊर्त प्रह्लाद-हिरण्यकशिपुप्रभृतीना शुभाशुभकर्मवासनाया उत्कर्षापकर्षौ वर्णितौ स्त। अष्टमे २४ अध्यायाः सन्ति, तेपु पष्ठलक्षणस्य मन्वन्तरस्य निरूपणमस्ति, नवमे २४ अध्याया' सन्ति, यत्र १-१३ अध्यायेपु भगवता विष्णोरनुवर्तिना सूर्यवंशसमुद्भवाना राज्ञाम् १४-२४ अध्यायेपु च चन्द्रवशीयाना च राज्ञा नानाख्यानोपवृहितकथाद्वारा सप्तमलक्षणस्य ईशानुकथाया. प्रामाणिक विवरणमुपस्थापितमस्ति। दशमे ९० अध्याया. सन्ति, येपु अष्टमलक्षणस्य निरोधस्यदुष्टाना राज्ञा दैत्याना च वधस्य विवरण दत्तमस्ति। एकादशे ३१ अध्यायाः सन्ति, यत्र पुराणनवमलक्षणस्य मुक्ते स्वस्वरूपेणावस्थिते-र्विवेचन वर्तते। द्वादशस्कन्धे च सन्ति १३ अध्याया, येपु दशमस्य पुराणलक्षणस्य आश्रयतत्त्वस्यपरमेश्वरस्योपदेशो दत्तोऽस्ति। दशममिद-माश्रयतत्त्वमेव श्रीमद्भागवतस्यास्त्यन्तिम लक्ष्यम्। अस्यैव विशुद्धये प्राथमिकाना नवाना लक्षणानामुपादानं कृतमस्ति। अर्थात् मानवजन्मनो वास्तविकलक्ष्यज्ञानाय नवसख्याकाना लक्षणाना विवरणमुपस्थापित-मस्ति। इत्थ सामान्यतया दशाना पुराणलक्षणाना भवति श्रीमद्भाग-वतस्य क्रमश दशसु ३-१२ स्कन्धेपु समन्वय.।

अपि च श्रीमद्भागवतस्य द्वादशस्कन्धे सप्तमाध्याये कतिपयशब्दभेदेन भूयो दश लक्षणानीत्थ परिगणितानि सन्ति—

सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च।
वशो वंशानुचरित सस्था हेतुरपाश्रयः॥
दशभिर्लक्षणैर्युक्त पुराण तद्विदो विदुः।
केचित् पञ्चविध ब्रह्मन्! महदल्पव्यवस्थया॥

(श्री० भा० १२।७।९-१०)

( १ ) सर्गः ( २ ) विसर्गः ( ३ ) वृत्ति ( ४ ) रक्षा ( ५ ) अन्तराणि ( ६ ) वशः ( ७ ) वशानुचरितम् ( ८ ) सस्था ( ९ ) हेतु ( १० ) अपाश्रयः। एभिर्दशभिर्लक्षणैर्लक्षित साहित्य पुराणविद्भिर्विद्वद्भि पुराणं प्रोच्यते।

येषु पुराणेष्वेषा दशाना लक्षणाना पृथक् पृथग् वर्णन विद्यते, तानि महापुराणानि कथ्यन्ते। येषु च पञ्चलक्षणस्यास्ति प्राधान्य तानि लघुपुराणान्युपपुराणानि वा प्रोच्यन्त, महदल्पव्यवस्थया = पुराणमहापुराणव्यवस्थया पुराणलक्षणं ज्ञेयम्।

श्रीमद्भागवतस्य द्वितीयस्कन्धे प्रोक्तलक्षणापेक्षया द्वादशस्कन्धीयलक्षणे कियता पदाना परिवर्तने सत्यप्यर्थे किमपि परिवर्तन न प्रतीयते। अर्थाद् द्वयो. स्कन्धयोरुपात्तयोर्लक्षणयोर्नामसु भिन्नता त्ववश्यमस्ति, परन्तु तदर्थे न काऽपि विषमता दृष्टिगोचरीभवति। एव सत्यपि द्वितीयस्कन्धलक्षणवद् द्वादशस्कन्धे लक्षणानि न क्रमशो निर्दिष्टानि सन्ति, किन्तु द्वादशे लक्षणानि किञ्चिद्व्युत्क्रमेणोपात्तानि सन्ति। यथा ( १ ) सर्ग.कारणसृष्टि. तृतीयस्कन्धे ( २ ) विसर्गःकार्यसृष्टिः चतुर्थे ( ३ ) वृत्ति जम्बूद्वीपादिस्थानाना स्थितिः पञ्चमे ( ४ ) रक्षाअजामिलादीना पालन षष्ठे ( ९ ) हेतु शुभाशुभकर्मणां वासना। प्रह्लादस्य शुभकर्मवासना हिरण्यकशिपोश्चाशुभकर्मवासना सप्तमे, (५) अन्तराणिमन्वादीना विवरणम् अष्टमे, ( ६, ७ ) वश., वंशानुचरित्त च = सोमसूर्यवशीयराज्ञा विवरणं नवमे, ( ८ ) सस्थानित्य-नैमित्तिक-प्राकृतप्रलयाः = दुष्टदैत्याना वधो दशमे, ( ९ ) सस्थाभेदात्यन्तिक-प्रलयरूपया मुक्तिरेकादशे, ( १० ) अपाश्रय.परमेश्वरतत्त्वस्य निरूपण च द्वादशे स्कन्धे जातमस्ति। एवमस्य द्वादशस्कन्धीयलक्षणस्य समन्वयोऽप्यक्रमेण तृतीयतो द्वादशस्कन्धपर्यन्तं ( ३-१२ ) दशसु स्कन्धेषु जायते एव।

दशानां = सर्गादीनां लक्षणानि श्रीमद्भागवते एवमुक्तानि सन्ति—

( १ ) ईश्वरप्रेरणया गुणत्रयसाम्यावस्थापन्नाया प्राकृतौ जायमानात् क्षोभात् महत्तत्त्वस्याविर्भावो भवति, ततोऽहङ्कार', तत एकादशेन्द्रियाणि पञ्चतन्मात्राश्च, पञ्चतन्मात्राभ्यः पञ्च महाभूतान्युत्पद्यन्ते, इत्येवं तत्त्वानामुत्पत्तिक्रमः सर्ग· प्रोच्तते तथाहि—।

अव्याकृतगुणक्षोभान् महतस्त्रिवृत्तोऽहमः।
भूतमात्रेन्द्रियार्थाना सम्भव. सर्ग उच्यते ॥

( श्री० भा० १२।७।११ )

( २ ) परमात्मनोऽनुग्रहात् सृष्ट्यर्थं सामर्थ्यं प्राप्य ब्रह्मद्वारा पूर्वकर्मानुसारं सदसद्वासनाप्राधान्येन बीजाद्बीजमिव प्रवाहापन्न यत् चराचरात्मक जगज्जायते तद् विसर्गः कथ्यते—

पुरुषानुगृहीतानामेतेषा वासनामयः ।
विसर्गोऽयं समाहारो बीजाद्बीज चराचरम ॥

( श्री० भा० १२।७।१२ )

( ३ ) वृत्ति. प्राणिना जीवननिर्वाहसामग्री । जीवननिर्वाहार्थं चराणा प्राणिनामचराणि भूतानि वृत्ति । मानवा जीवननिर्वाहार्थं येषा वस्तूनामुपयोग विधत्ते, तदेव तद्वृत्ति । मनुष्यै स्वस्वभावत. स्वेच्छानुसारं काश्चन वृत्तयो निश्चिता , काश्चन च शास्त्रादेशता गृहीताः । उभयविधाया वृत्तेरुद्देश्य मानवजीवनस्थितिसंरक्षणमेवास्ति—

वृत्तिर्भूतानि भूताना चराणामचराणि च ।
कृता स्वेन नृणा तत्र कामाच्चोदनयाऽपि वा ॥

( श्री० भा० १२।७।१३ )

( ४ ) प्रतियुगमीश्वर. पशुपक्षिमनुष्यर्षिदेवतादिरूपेणावतीर्य विविधां लीला विधत्ते, वेदद्विषो निहत्य च धर्मं स्थापयति । तस्यावतारलीला विश्वस्य रक्षार्थमेव भवति । अतो भगवल्लीलेय रक्षा व्यपदिश्यते—

रक्षाच्युतावतारेह विश्वस्यानु युगे युगे ।
तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यै त्रयीद्विष ॥

( श्री० भा० १२।७।१४ )

( ५ ) मनु मनुपुत्रा ऋषयो देवता इन्द्रो विष्णोरंशावताराश्चेत्येवंविधाभि. षड्भिर्विशेषताभिर्युक्त कालो मन्वन्तरमुच्यते । मन्वन्तरेणैव सर्वो व्यवहारो निर्वहति । प्रत्येकमन्वन्तरस्याधिष्ठातृरूपेण कश्चन विशिष्टो मनुर्भवति, यस्य सहयोगिन. पञ्चान्येऽपि भवन्ति—

मन्वन्तर मनुर्देवा मनुपुत्रा. सुरेश्वर ।
ऋषयोऽंशावताराश्च हरे षड्विधमुच्यते ॥

( श्री० भा० १२।७।१५ )

( ६-७ ) ब्रह्मण सकाशाद् उत्पन्नाना भूतभविष्यद्वर्तमानाना राज्ञाम् ऋषीणाञ्च सन्तानपरम्परा वश ; तेषा वशधराणा चरित्रचर्चा च वशानुचरित कथ्यते—

राज्ञा ब्रह्मप्रसूता वशस्त्रैकालिकोऽन्वय ।
वशानुचरित तेषा वृत्त वशधराश्च ये ॥
( श्री० भा० १२।७।१६ )

( ८ ) सस्था प्रलय., स्वभावादेब ब्रह्माण्डस्य प्रलयो जायते, स च चतुर्विध·—नैमित्तिकलप्रलय-प्राकृतिकप्रलय-नित्यप्रलय-आत्यन्तिकप्रलय-भेदात् । तत्त्वज्ञानिभिर्विद्वद्भि प्रलय एव सस्थेति नाम्ना अभिधीयते—

नैमित्तिक प्राकृतिको नित्य आत्यन्तिको लय ।
संस्थेति कविभि प्रोक्ता चतुर्धास्य स्वभावत ॥
( श्री० भा० १२।७।१७ )

( ९ ) वस्तुतो जीव एवात्र हेतुशब्देन व्यवह्रियते, यतः स एवादृष्टद्वारा सर्गविसर्गादीना कर्माणा भवति हेतु कर्ता। अविद्याविवशो जीवो विविधकर्मकलापेऽ्वासक्तो भवति । य एन च प्रधानतत्त्वदृष्ट्या पश्यन्ति ते तनेनमनुशयिनंप्रकृतौ शयनकर्तार कथयन्ति, ये चोपाधिदृष्ट्या अवलोकयन्ति ते तमव्याकृत प्रकृतिरूप वदन्ति—

हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारक ।
य चानुशयिन प्राहुरव्याकृतमुतापरे ॥
( श्री० भा० १२।७।१८ )

( १० ) यत्तिसृषु जाग्रत्-स्वप्न-सुषुप्तिष्ववस्थासु ततः पर तुरीयतत्त्वरूपेण ( साक्षिरूपतया ) लक्ष्यते, तदेव ब्रह्म अत्र अपाश्रयशब्देन प्रोच्यते—

व्यतिरेकान्वयो यस्य जाग्रत्-स्वप्न-सुषुप्तिषु ।
मायामयेपु तद् ब्रह्म जीववृत्तिष्वपाश्रयः ॥
( श्री० भा० १२।७।१९ )

## उभयोः लक्षणयो सामञ्जस्यम्—

उभयत्र ध्याने दीयमाने शब्दभेद एव लक्ष्यते, नाभिप्रायभेद उपलभ्यते । द्वितीयस्कन्धे ( १ ) सर्ग·, ( २ ) विसर्ग , ( ३ ) स्थानम्, ( ४ )

पोषणम्, ( ५ ) ऊति , ( ६ ) मन्वन्तरम्, ( ७ ) ईशानुकथा, ( ८ ) निरोध , ( ९ ) मुक्ति , ( १० ) आश्रय इति दश लक्षणान्युक्तानि ।

द्वादशस्कन्धे च (१) सर्ग , (२) विसर्गः, (३) वृत्ति , (४) रक्षा, (५) अन्तराणि, (६) वंश , (७) वंशानुचरितम्, (८) निरोध , (९) हेतु , (१०) अपाश्रयश्चेति दश लक्षणानि प्रोक्तानि सन्ति ।

तत्र सर्ग-विसर्गावुभयत्र स्त समानौ। द्वितीयस्कन्धे निर्दिष्टस्य स्थानशब्दस्य स्थाने द्वादशस्कन्धे वृत्तिपदस्यास्ति प्रयोग । द्वितीये प्रोक्तमनुग्रहरूप पोषण द्वादशे रक्षापदेन प्रोच्यते। द्वितीये प्रयुक्तस्य जीवस्य संसारप्राप्तिहेतुकाविद्याकर्मवासनादिबोधकस्य ऊतिपदस्य स्थाने द्वादशे हेतुपद प्रयुक्तम् । द्वितीये उल्लिखितस्य मन्वन्तरमित्यस्य स्थाने द्वादशेऽन्तरपदमुपात्तम् । द्वितीये दर्शितस्य ईशानुकथापदस्य स्थाने द्वादशे वंश-वंशानुचरितपदे प्रयुक्ते । द्वितीये उक्तस्य निरोधस्य स्थाने द्वादशे संस्थापदस्य प्रयोगो जात , यत्र नित्यप्रलय-नैमित्तिकप्रलय-प्राकृतिक-प्रलया अन्तर्भवन्ति । द्वितीय प्रोक्ता मुक्तिर्द्वादशे प्रोक्तसंस्थाभेदात्यान्तिक-प्रलयपदेन गृह्यते । तथा द्वितीयस्कन्ध उपात्तस्याश्रयस्य स्थाने द्वादश-स्कन्धेऽपाश्रयशब्दो व्यपदिष्ट । सर्वमेतन्निम्नाङ्कितेन विवरणेन स्पष्टतमं ज्ञेय भवति । तथाहि—

| क्रम | द्वितीयस्कन्धलक्षणम् | द्वादशस्कन्धलक्षणम् |
|---|---|---|
| १ | सर्ग | सर्ग |
| २ | विसर्ग | विसर्गः |
| ३ | स्थानम् | वृत्ति· |
| ४ | पोषणम् | रक्षा |
| ५ | ऊतिः | हेतु· |
| ६ | मन्वन्तरम् | अन्तरम्. |
| ७ | ईशानुकथा | वंश-वंशानुचरिते |
| ८ | निरोध | संस्था = { नित्यप्रलय·, नैमित्तिकप्रलय., प्राकृतिकप्रलयश्च } |
| ९ | मुक्ति | संस्था = आत्यन्तिकप्रलय. |
| १० | आश्रय. | अपाश्रय. |

एव श्रीमद्भागवतवद् ब्रह्मवैवर्तपुराणस्य श्रीकृष्णजन्मखण्डेऽपि महापुराणानि दशलक्षणलक्षितानि प्रोक्तानि सन्ति—

सृष्टिश्चापि विसृष्टिश्च स्थिति तेषा च पालनम् ।
कर्मणा वासना वार्ता मनूना च क्रमेण च ॥
वर्णनं प्रलयाना च मोक्षस्य च निरूपणम् ।
उत्कीर्तनं हरेरेव देवाना च पृथक् पृथक् ॥
दशाधिक लक्षण च महता परिकीर्तितम् ।
( ब्र० वै० १३१।८९½ )

एषु सृष्टि , विसृष्टि , स्थितिः, पालनम्, कर्मणां वासना, मनूनां वार्ता, प्रलयाना वर्णनम्, मोक्षस्य च निरूपणमित्यष्टावुभयत्र समानान्येव सन्ति । हरेरुत्कीर्तनमित्यस्याश्रयेऽन्तर्भावो जायते, देवाना च पृथक् पृथगित्यस्य ईशानुकथाया वशानुचरिते वा अन्तर्भावो भवति । इत्येव शब्दान्तरै श्रीमद्भागवतस्यैव लक्षणानि ब्रह्मवैवर्तेऽपि प्रोक्तानि सन्ति ।

## पञ्चलक्षणे दशलक्षणस्यान्तर्भावः

ननु दशलक्षणस्य पञ्चलक्षणेन विरोधात् कथ तयोः प्रामाण्यमित्येवस्थितौ कियन्तो विद्वासो दशलक्षणस्य पञ्चलक्षण एवान्तर्भावं कुर्वन्ति, केचन च महापुराणानि दशलक्षणानि, उपपुराणानि च पञ्चलक्षणानीति मन्यते । तत्र पुराण पञ्चलक्षणमितिवादिना विपश्चितां मते श्रीमद्भागवते प्रोक्तानि दशलक्षणानि पुराणान्तरप्रोक्तपञ्चलक्षणस्यास्ति आवश्यकतानुसार विस्तारमात्रम् । यतो हि श्रीमद्भागवते सर्ग-विसर्ग-वशवंशानुचरितमन्वन्तराणि तु शब्दत एव प्रोक्तानि सन्ति । अवशिष्टानामन्येषामप्यन्तर्भाव एतेष्वेव सम्भवति । तथाहि सर्गोऽस्ति प्रकृतेर्गुणवैषम्याज्जायमाना विराट्सृष्टिः ( ब्रह्माण्डस्य समष्टिसृष्टि ), विसर्गश्च ब्रह्माण्डान्तर्वर्तिना ब्रह्मणो जायमानाना जीवाना व्यष्टिसृष्टि । परिणामतः सर्गे विसर्गस्यान्तर्भावो नानुचितः । तथा च विसर्ग. किल सर्गस्यावान्तरभेद. । एवमाश्रयापाश्रयशब्दाभ्यामुपात्त ईश्वरः सर्गकर्तृत्वेन हेतु', ऊतिर्वा

सर्ग एवान्तर्भवितुमर्हति। प्रतिसर्गे संस्था-निरोधयोरन्तर्भाव । मन्वन्तरेऽन्तरस्यान्तर्भाव । वृत्ति, स्थानम्, ईशानुकथा, पोषणम्, रक्षा वा वंशवंशानुचरितयोः स्फुटमन्तर्भवन्ति ।

तथाहि—

सर्गे—विसर्ग-हेतु-ऊति-आश्रयापाश्रयाणामन्तर्भाव ।

प्रतिसर्गे—संस्था-निरोधयोरन्तर्भावः ।

मन्वन्तरे—अन्तरस्यान्तर्भाव. ।

वंशवंशानुचरितयो —वृत्ति-स्थान-रक्षा-पोषण-ईशानुकथानामन्तर्भावः ।

तस्मात् श्रीमद्भागवतीयानि दश लक्षणानि पुराणान्तरोक्तस्य पञ्चलक्षणस्य प्रपञ्चमात्रमुपबृंहितरूप देनि स्वीकारे न काऽप्यनुपपत्ति. । दशलक्षण पुराणमिति मन्यमानाना मनीषिणा मत तु येषु दशलक्षणाना पृथक् पृथग् वर्णन वर्तते, तानि महापुराणानि कथ्यन्ते, यत्र च पञ्चानामेव लक्षणानामस्ति प्राधान्य तान्युपपुराणानि प्रोच्यन्ते । अत एव ब्रह्मवैवर्तपुराणस्य श्रीकृष्णजन्मखण्डे प्रथम पूर्वोक्त सर्गश्च प्रतिसर्गश्चेत्यादि पञ्चलक्षणमुक्त्वा प्रोक्त यत्—

एतदुपपुराणाना लक्षण च विदुर्बुधा ।

ततो दशलक्षणविवक्षया संकेतितम्—

महता च पुराणाना लक्षण कथयामि ते ॥

(श्री० ज० ख० १३१।७)

श्रीमद्भागवतेऽपि महापुराणोपपुराणलक्षणनिर्णयप्रसगे प्रोक्तं यत् पुराणविदो विद्वासो दशभिर्लक्षणैर्लक्षित पुराण वदन्ति, अपरे च पचलक्षणलक्षित पुराणमिति ब्रुवते। तदित्थ दशलक्षणलक्षितानि महापुराणानि पञ्चलक्षणलक्षितानि चोपपुराणानीति तेषामभिप्रायः—

दशभिर्लक्षणैर्युक्तं पुराण तद्विदो विदुः ।
केचित् पञ्चविध प्राहुर्महदल्पव्यवस्थया ॥

(श्री० भा० १२।७।१०)

वस्तुतो न सन्ति पुराणसामान्यस्य दश लक्षणानि, अपित्विमानि सन्ति ब्रह्मवैवर्तस्य, श्रीमद्भागवतस्य च नैज लक्षणम् । यतो हि भगवत्स्वरूप-

विवेचनमेवास्ति श्रीमद्भागवतनिर्माणस्य प्रधानं कारणम् । अतो दशमस्याश्रयतत्त्वस्य परमेश्वरस्य स्वरूपपरिज्ञानायैवात्र नवाना लक्षणाना विवेचन कृतमस्ति—

दशमस्य विशुद्धयर्थं नवानामिह लक्षणम् ।
वर्णयन्ति महात्मान श्रुतेनार्थेन चाञ्जसा ॥
( श्री० भा० १२।७।२ )

अपि च तत्रैवाग्रे---

एव लक्षणलक्ष्याणि पुराणानि पुराविद ।
मुनयोऽष्टादश प्राहु क्षुल्लकानि महान्ति च ॥
( श्री० म० १२।७।२२ )

तस्मादाश्रयतत्त्वमेवास्ति श्रीमद्भागवतस्यान्तिम ध्येयम् । तस्यैव यथार्थनिश्चयार्थमन्येषा नवाना लक्षणानामुपादानं कृतमस्ति । यद्यपि पुराणानां प्रतिपाद्य दशलक्षण पञ्चलक्षण वा तत्र तत्र पुराणेषु प्रतिपादिन जगतस्तन्मूलतत्त्वमस्ति यत्—पुरा अनिति यत्तत् पुराणमिति पुराणशब्दव्युत्पत्त्यनुसार यत्तत्व दृश्यमानस्य समस्तस्य प्रपञ्चस्य प्रादुर्भावात् पूर्वमपि विद्यते, यत एव च सर्वमिद विश्व विजायते । इदमेव तत्त्वम् "सदेव सौम्य इदमग्र आसीत्" इत्यादिना छान्दोग्यश्रुतिरपि निर्दिशति । पुराणतत्त्वस्यास्य प्रतिपादनादेव तत्प्रतिपादक वाङ्मयं पुराणशब्देन व्यपदिश्यते । तत्र सर्गादीना वर्णनं तु नितरा निर्धर्मकतया इदमित्थभावेन स्पष्ट निरूपयितुमशक्यस्य तस्य तत्त्वस्य प्रतिपादनाय तटस्थलक्षणोपस्थानमात्रफलकमस्ति, यथा—"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्ति अभिसविशन्ति" इत्यादिवचनैरुपनिषदस्तटस्थलक्षणमुखेन जगतो मूलतत्त्व वर्णयन्ति, तथैव पुराणान्यपि सर्गादिवर्णनेन तटस्थलक्षण पुरस्कृत्य मुख्यतया जगतो मूलकारणस्य प्रति पादन एव पर्यवस्यन्ति । अत एव श्रीमद्भागवते "दशमस्य विशुद्धयर्थं नवानामिह लक्षणम्" ( १२।७।२ ) इति वचनं सगच्छते, दशमश्च तेष्वाश्रय एव द्वादशेऽपाश्रयशब्देन लक्षित —

आभासश्च निरोधश्च यतश्चाध्यवसीयते ।
स आश्रय पर ब्रह्म परमात्मेति शब्द्यते ॥
( श्री० भा० २।१०।७ )

व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ।
मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रय ॥
( श्री० भा० १२।७।१९ )

तस्मात् समग्रस्यास्य विश्वस्य मूलहेतुभूतं दशममपाश्रयतत्त्वमेव सर्वेषा पुराणाना प्रधानतम प्रतिपाद्यमस्ति। सर्गप्रतिसर्गादिनिरूपण तु तत्प्रतिपादनोपायतया गौण प्रतिपाद्य प्रतीयते। अत एव हरिवंशपुराणीयमिद पद्य सगच्छते—

वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरि सर्वत्र गीयते॥
( ह० व० ३।४९ )

कौटिलीयार्थशास्त्रस्य व्याख्याया जयमङ्गलायामेकमन्यदेव पुराणलक्षणमुपात्तमस्ति। यत्र धर्मविज्ञानमपि पुराणपञ्चलक्षणान्तर्गतमेक लक्षण प्रतिपादितमस्ति—

सृष्टि-प्रवृत्ति सहार-धर्म-मोक्ष-प्रयोजनम् ।
ब्रह्मभिर्विविधैर्गीत पुराण पञ्चलक्षणम् ॥
( अ० शा० १।५ )

"यद् ब्राह्मणानीतिहासान् पुराणानि कल्पा गाथा नाराशंसी·" इति तैत्तिरीयारण्यक विवृण्वता भगवता भाष्यकृता 'पुराणानि ब्रह्मादीनि यद्वा देवासुरा सयत्ता आसन्नित्यादयः, इतिहास, "आत्मा वा इदमेवाग्र आसीत्, नान्यत् किञ्चन मिषदिति सृष्ट्यादिप्रतिपादकानि पुराणानि' इत्युक्तम्। तत्र पुराणशब्दस्य व्याख्याया सृष्ट्यादिप्रतिपादकानि पुराणानीति वदता भाष्यकारेण सृष्टिप्रवृत्यादिवचनमेव स्मृतमिति स्पष्टं प्रतीयते।

ननु सर्गश्च प्रतिसर्गश्चेत्यादिना पुराणप्रोक्तस्य पुराणलक्षणस्य सृष्टिः प्रवृत्तिरिति जयमङ्गलाकृल्लक्षणत पार्थक्यप्रतीते कथमुभयो· प्रामाण्यमिति वाच्यम्? एकेन केनापि लक्षणेन लक्ष्यसिद्धौ लक्षणान्तरेण तत्र दोषदानस्यानौचित्यात्। नह्येकस्मिन् लक्षणे स्थितेऽन्यानि लक्षणानि न सम्भवन्तीति कश्चनास्ति नियम। दर्शनशास्त्रे बहूना लक्षणाना वर्ण्यमानत्वेनानेकलक्षणकरणे न काप्यस्त्यनुपपत्ति। बहूनां लक्षणाना प्रयोजनं तु सर्वत्र समेषां लक्षणानामप्राप्तौ सत्या केनचिदेकेनापि लक्ष्यनिर्णयो

भवति । अतो दशलक्षणैः पञ्चलक्षणैर्वा न काप्यनुपपत्तिर्भवितुं शक्या, दशलक्षणरहितानामपि पुराणाना पुराणत्वज्ञापनाय पञ्चलक्षणस्यावश्यकत्वात् ।

वस्तुतस्तु प्रत्येक शास्त्राणा मुख्यतया प्रतिपाद्या विषयाः पृथक् पृथग् भवन्ति । अनेकेऽन्यदीया. प्रासगिका विषया अपि तत्र तत्रोपतिष्ठन्ते, यथा धर्मशास्त्रे मनुस्मृतौ प्रथमाध्याये सृष्टिप्रक्रिया प्रसगत समागता । एव दर्शनशास्त्रेष्वपि धर्मविषय प्रासगिक एवापतति । तथा च तत्तच्छास्त्रस्य लक्षणे क्रियमाणे यो यस्य प्रातिस्विको विषयो भवति, स एव तल्लक्षणत्वेन निरूप्यते, न प्रासगिको विषयो लक्षणकोटौ प्रविष्टो भवति । सर्ग-प्रतिसर्ग-वशमन्वन्तरवशानुचरितानीति पञ्चैव पुराणाना सन्ति प्रातिस्विका विषया , न तु धर्मादय , तेषा वेददर्शनोपासनाग्रन्थेषु विस्तरश प्रतिपादनात् । एव नास्ति कोऽपि विषयो य· पुराणेषु प्रसगतो न सगृहीतो भवेत्, पर सर्वे ते विषयाः पुराणाना लक्षणानि न भवन्ति, अपि तु प्रातिस्विकान्येव सर्ग-प्रतिसर्ग-वश-मन्वन्तर-वशानुचरितानि लक्षणत्वेन निरूपयितु समुचितानि । अतस्तान्येव पुराणलक्षणत्वेन निरूपितानि, न धर्मादय. । तस्माद् जयमङ्गलालक्षणे धर्मपदोपादानमनावश्यक प्रतिभाति । अपि च श्रीमद्भागवते "मन्वन्तराणि सद्धर्म " ( २।१०।४ ) इत्यादिना मन्वन्तरलक्षणे धर्मस्य प्रतिपादनाद् मन्वन्तरेणैव धर्मस्य गतार्थतासम्भवेन जयमङ्गलालक्षणे धर्मपदप्रवेशोऽनावश्यक एव । पुराणलक्षणान्तर्गतो मन्वन्तरभाग सद्धर्म इत्युक्त्या पुराणाना धर्मप्रतिपादकत्व स्पष्टम्, यत श्रीमद्भागवतस्य प्रादुर्भाव एव भागवतान् धर्मान् व्याख्यातु जात । अत एव सरस्वत्या. पुनीते तटे स्त्रीशूद्रादीनामपि धर्मप्रतिपादकमहाभारतप्रणयनानन्तरमसन्तोषादप्रसन्नमनस स्वयमनुशोचतो भगवतो व्यासस्य वचन संगच्छते--

भारतव्यपदेशेन हृाम्नायार्थश्च दर्शित ।
दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ।।
कि वा भागवता धर्मा न प्रायेण निरूपिता ।
प्रिया परमहसाना त एव हृच्युतप्रिया. ।।

( श्री० भा० १।५।२९ ३१ )

एव भगवत श्रीकृष्णस्य महिमान वर्णयितुं प्रोत्साहयत देवर्षेर्नारदस्य महर्षि व्यास प्रति प्रतिवचनमपि धर्मस्य पुराणाङ्गत्व साधयति—

यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः ।
न तथा वासुदेवस्य महिमा ह्यनुवर्णित ॥
(श्री० भा० १।५।९)

तस्माद्धर्मं खलु पुराणस्यास्त्यविभाज्यमङ्गमिति पुराणलक्षणकोटौ तस्य प्रवेशोऽनावश्यक एव। अत एव भगवता व्यासेन मन्वन्तरे धर्मस्योपन्यासो विहित·—

मन्वन्तर हि सद्धर्मं ऊतय कर्मवासना ।
( श्री० भा० २।१०।४ )

## पुराणेषु योगसिद्धिविमर्शः

भारतीयाया· संस्कृतेर्विद्यायाश्चावबोधार्थं पुराणं विश्वकोपभूतमस्ति । पुराणवाङ्मये बहुनामेवविधाना विद्याना सङ्केतो विवरणानि चोपलभ्यन्ते, याश्च विद्या इदानीमपि विस्मयमावहन्ति नितराम् । अलौकिककर्मणा विशिष्ट उल्लेखोऽपि पुराणानामेक वैशिष्ट्य बिभर्ति । पुराणप्रोक्तानि अलौकिकानि कर्माण्येव सिद्धय इत्युच्यन्ते शास्त्रेषु । यै खलु नियमै प्रक्रियाभिर्वा सिद्धय प्रजायन्ते, तेषा ज्ञानमावश्यकमेव ।

का नाम सिद्धि ? तत्प्रकाराश्च कतिविधा· ? प्राचीन युगे कथ सिद्धयः साफल्यमभजन् ? आधुनिके च समये कथं तासा ह्रास उपलक्ष्यते ? इत्यादिप्रश्नाना समाधानस्यावश्यकत्वात्तावत् किञ्चित् प्रस्तूयते ।

कयाऽपि लोकातीतशक्त्या अलौकिकेन वाऽपि सामर्थ्येन कस्यचन अद्भुतस्य पदार्थस्य या सृष्टिर्विलोक्यते, सा खलु सिद्धिसत्तानिर्धारिणी, अद्भुतपदार्थजननशालिनी, देहेन्द्रियादिषु विलक्षणपरिवर्तकारिणी, अलौकिकसामर्थ्यप्रकाशिका लोकातीतशक्तिरेव सिद्धिपदेन सन्ततं व्यपदिश्यते तज्ज्ञैः । सिद्धे पञ्च प्रकारान् आदिशति योगदर्शने महर्षिः पतञ्जलि । जन्मौषधिमन्त्रतप समाधिजा सिद्धय ( ४।१ ) श्रीमद्भागवते महर्षि व्यासोऽपि--जन्मौषधितपो मन्त्रयोगसिद्धैर्नरेतरै ( ४।६।९ ) तत्र प्रथमा जन्मसिद्धि , अणिमाद्या भवति । यथा पक्षिणामाकाशादिगमम् कपिलादिना मुनीना जन्मान्तरीयपुण्य प्रभावादेव सासिद्धिक ज्ञानम् ।

द्वितीया ओषधिजा सिद्धि , पारदादिरसायनानामुपयोगाद् जायमाना सिद्धिरोषधिजन्यत्वाद् ओषधिसिद्धि· । रसायनशास्त्रप्रणेता बौद्धो

नागार्जुनाचार्यं स्वीयरससिद्धिग्रन्थेऽस्या सिद्धे विविधान् प्रकारान् उपयोगाञ्च विशिष्टतयाऽभिव्यक्तवान् । रसायनस्य माहात्म्यप्राचुर्येणैव गोरक्षनाथाद्या महासिद्धा· कालचक्र विजित्य साम्प्रतमपि मही विचरन्ति, स्वदर्शनेन भक्तान् अनुगृह्णन्ति, स्वोपदेशेन च जिज्ञासून् कृतार्थयन्तीति कर्णाकर्णिकया श्रूयते । यथा वा सोमरसादिपानेन, विभिन्नौपधिसेवनद्वारा वा कायाकल्प विमाय पुन युवत्वप्राप्ति ओपधिसिद्धि ।

मन्त्राभ्यासेन जायमाना सिद्धिस्तु तृतीया । यथा मन्त्रद्वारा चित्तस्यैकाग्रतया इष्टदेवादिदर्शनम् । मन्त्राणामलौकिके प्रभावे सदिहाना. साम्प्रतमपि वर्तन्ता केचन महाभागा·, परन्तु मत्रजा सिद्धिर्वास्तविकीति पुराणाना दृढ समुपजृम्भते प्रामाण्यम् । अनया सिद्ध्या आकाशगमनादीनि कार्याणि तु स्वतो निष्पद्यन्ते ।

तपसा सिद्धिश्चतुर्थी । तप प्रभावेण तापसाना सकल्पसिद्धिर्भवति । सकल्पप्रभावाद्योगी—यदेव कामयते, तदेव भवति । तप सिद्धिप्रभावात् चित्ते विलक्षणा योग्यता जायते ।

समाधिजा सिद्धिस्तु पञ्चमी पातञ्जलयोगदर्शनस्य तृतीये विभूतिपादे विस्तरशः प्रतिपादिताऽस्ति, यथा श्रोत्राकाशयो· सम्बन्धे कृतसयमस्य योगिनो दिव्य श्रोत्र प्रवर्तते, श्रोत्राकाशया सम्बन्धसयमाद् दिव्यं श्रोत्रम्, ( यो० सू० ३।४१ )–

इत्थ योगशास्त्रादौ पञ्चविधाना सिद्धीना सामान्यतो निरूपण वर्तते ।

न केवल भारते वर्पे, न वा केवल वेदपुराणादिष्वेव सिद्धाना चर्चा समुपलभ्यते, अपितु जैनग्रन्थेपु बौद्धग्रन्थेषु च तत्तदाचार्याणा जीवनचरिते सिद्धीना सङ्केत समुपलभ्यते । पाश्चात्त्यजगतो धर्माचार्याणा जीवनचरितेऽप्यनेकाः सिद्धय. चमत्कार जनयन्तीति नापरोक्ष प्रेक्षावताम् । ख्रिस्तमतसस्थापकस्य 'क्राइस्ट' नामधेयस्य धर्माचार्यस्य विपये श्रूयन्ते बह्व्यः सिद्धय· न्यूटेस्टामेण्टनामके ग्रन्थे । एव मोहम्मदीयधर्मसस्थापकस्य मुहम्मद महाभागस्य जीवनचरितेऽपि दाराशिकोहनामा उपनिषद्रसिकः प्रख्यातो लेखक. स्वीये 'रिसाल-ए-हकनुमा' नाम्नि पारसीकभाषानिबद्धे ग्रन्थे लिखति यद् आरब्यमरुभूमौ वर्बुरवृक्षस्य छायाया स्वोष्ट्रोपरि समासीनो मुहम्मदसाह्वो यदा ध्याने निमग्नो बभूव, तदा उष्ट्रस्तस्य परिबृहित देहभार सोढुमशक्नुवन् शनै. भूमौ उपविवेश । इयमेव गरिमेति

नाम्ना ख्याता सिद्धि, यत्र देहस्य भार एतावान् परिवृंहिता भवति, यदधिष्ठित. पशुर्भार वोढु नितान्तमशक्त पदात् पदमपि चलितुमसमर्थो भवति ।

मध्ययुगीयख्रिष्ट्रीयधर्मानुयायिना भूयसा साधूना साध्वीनां योषिता च जीवनचरिते प्रार्थनासमये स्वासनादुत्थानम्, आकाशगमनादिक च विचित्रा सिद्धि समामनन्ति तच्चरित्रनिबद्धार । बहूना साधकाना जीवने बहुशोऽनुभूतमिद तथ्य यत् ते प्रार्थनासमये स्वासनेभ्योऽन्तराले उत्तिष्ठन्ति, पर प्रार्थनाया अवसाने शनै शनै आकाशात् तेषा देह आसनेऽवतरति । योगवासिष्ठे तु आकाशगमनादिसिद्धीना बहुश समालम्भो न केषामपि विस्मयाय कल्पेत, यथा श्रीराम प्रति महर्षि वसिष्ठ —

अनात्मविद् अमुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यकर्मक्रिया कालशक्त्या प्राप्नोति राघव ॥

सिद्धयो न केवल भारते वर्ष, प्रत्युत अस्मिन् विपुले जगति च प्राचीने युगे समभूवन्, वर्तमाने काले सम्भवन्ति, भविष्ये च सम्भविष्यन्तीति नहि कश्चिदत्र विवादस्यावकाश ।

प्राचीने युगे सिद्धीना भूयसी फलाभिव्यञ्जनशक्ति साक्षात् कुर्म. । सत्त्वप्राचुर्योपजायमानतपस प्राबल्यात्, आचरणस्य विशुद्धे, स्वार्थभावनाया वैधुर्यात्, परोपकारपरायणाना जनाना परोपकारबुद्धे सन्तत प्राचुर्यात्, त्यागस्य च माहात्म्यात् सिद्धोना फलाविर्भावो भवतिस्म । तदानी पूर्वोक्ताः सिद्धय सहजरूपेणैव जगति साक्षात् क्रियन्ते स्म जनै । एव गौरवमयपुराणनिर्दिष्टसिद्धीना हृदयावर्जका पन्थान, स्वमहनीयोत्कर्षेण जनाना मनासि आत्मान प्रति आकृष्टु सर्वथा समर्था अभूवन् ।

साम्प्रतिके समये महोत्कर्षशालिनीनामपि सिद्धना सत्ताविचारप्रस्तावे कमपि ह्रासमेव विलोकयाम । साम्प्रत सिद्धीना विरलेऽपि प्रचारे तासा मूलतोऽभाव वक्तु न कश्चिदपि विपश्चित् शक्नोति । दैवात् कालस्य माहात्म्यात्, सिद्धीना फलाभिव्यञ्जन विरलता प्रयातम् । सिद्धीना फलाभिव्यञ्जनाय साधकाना सात्त्विक जीवन सदाचार. च अनिवार्यत्वेन अभिवाञ्छन्ति शास्त्रमर्मज्ञाः, परन्तु इदानी परान्नभोजनेन दूषितोदराणाम्, परापवादेन दग्धजिह्वानाम्, प्रतिग्रहेण च विकृतहस्ताना जनाना मन्त्रादिसिद्धय· कथकारं स्वाभिमतं साफल्यं भजेयु । सत्यपि

एतादृशि दुरवस्थाग्रस्ते समये न किमपि नैराश्य भजन्ति तज्ज्ञा.; प्रतिकूलोऽपि समय. स्वोच्चाभिलाषसम्पादनेन साफल्य नेयः। यदि जना विहाय आलस्यम्, दूरीकृत्य च सिद्धीना साफल्यविषये सन्देहजालम्, स्वीय जीवन सात्त्विकभावापादनेन विशुद्धसदाचारपोषणे बद्धपरिकारा भवेयु, तर्हि सिद्धीना फल नून प्रत्यक्षायमाणमेव भवेदिति नास्ति लेशोऽपि सन्देहस्य।

पुराणानि सन्ति भारतीयसस्कृते. समस्ताना विद्याना चाकरः। तत्र स्थाने स्थाने यौगिकप्रक्रियाया योगसिद्धेश्चापि समुल्लेखो विद्यते।

योगदर्शनस्य प्रायः सर्वे विषया सन्ति प्रायोगिकाः। अतो दर्शनमिदं सर्वैरेवास्तिकनास्तिकै समान समाद्रियते। योगस्यावान्तरविषयेषु स्यान्नाम विदुषा विचारवैविध्यम्, पर क्रियाशानां प्रयोगे न कस्याप्यस्ति काचिद् विमति :

यमनियमादिभि शुद्धान्त करणस्तत्तद्धारणया प्राप्तसिद्धिर्योगी सर्वं कर्तुं शक्नोति। ऐन्द्रजालिकक्रियासु प्रायो दृक्शक्तिस्तम्भनप्रक्रिया दृश्यते। इन्द्रजालक्रियाप्रदर्शकोऽनेकसंयोगवियोगरूपिणी क्रिया प्रदर्शयन्निन्द्रजालविद्यया दर्शकाना दर्शनानि स्तम्भयति, येन द्रष्टारस्तस्य तत्तत्पदार्थसयोगवियोगकार्यकलाप ज्ञातुमसमर्था भवन्ति।

यथेन्द्रजालक्रीडाप्रदर्शको विविधा क्रिया प्रदर्शयन्निन्द्रजालविद्यया दर्शकदर्शनानि स्तम्भयति, येन द्रष्टारस्तस्य तत्तत्कार्यकलाप सम्यगवगन्तु न पारयन्ति, तथैव योगी दृक्शक्तिस्तम्भनक्रियया परकीयदृष्टितोऽन्तर्दधाति, येनोन्मीलितनेत्रोऽपि पुमान् स्तम्भितदृक्शक्तित्वान्न यागिन द्रष्टुं शक्नोति। यदेन्द्रजालस्य साधारणक्रियया दृष्टिशक्तिः स्तम्भिता भवति, तदा योगिभिः सयमक्रियया किन्न भवितुमर्हति ?

शरीरे प्रवेशनिर्गममार्गयोर्यावत्यो नाड्य. सन्ति, तासा परिज्ञानेन चित्तस्य परशरीरे प्रवेश. सम्भवति। योगसमाधिना स्थूलशरीराच्छूक्ष्मशरीरस्य बन्धन शिथिल भवति। सयमद्वारा चेतसो गमनागमनमार्गीयधमनीना परिज्ञानेन सूक्ष्मशरीरस्य कुत्रापि प्रवेशक्रियाया निर्गमनक्रियायाश्च परिज्ञान योगिनो जायते। तदानी योगी स्वेच्छया स्वशरीरान्निर्गत्य परकाये प्रवेष्टुमर्हति, श्रीमद्भागवतस्यैकादशस्कन्धे पञ्चदशोऽध्याये लिखितमस्ति यत् परस्य शरीरे प्रवेष्टुकामो योगी तत्रात्मान भावयन्

यथा भ्रमर एकस्मात् पुष्पात् पुष्पान्तर प्रयाति, तथैवात्मशरीरादन्यस्य शरीरे प्रविशति --

परकाय विशन् सिद्ध आत्मान तत्र भावयेत् ।
पिण्ड हित्वा विशेत् प्राणो वायुभूत षडङ्घ्रिवत् ॥
( श्री० भा० ११।१५।२३ )

यदा योगी सयम द्वारीकृत्य परकीयमन्त करण प्रविशति, तदासौ तद्विपयेषु सयम कुर्वाण परकायचित्तस्य सुविस्तृत परिज्ञान सम्पादयति । साधको योगक्रियायामग्रे सरन् यदा समाधिमासादयति, तदैव परकाय-प्रवेशयोग्यतामधिकरोति । योगी यमनियमादिनात्मवल प्राप्य निजासन-जयेन स्थूल शरीर विजित्य प्राणायामेन प्राणान् वशीकृत्य प्राणमयकोश-सहितं सूक्ष्मदेह स्थूलदेहान्निस्सार्य प्राणशक्तिद्वारा परकायप्रवेशस्य ततो निर्गमनस्य च शक्ति लभते । कस्यापि जीवस्यान्त करणभाव जिज्ञासमानो योगी तदीयज्ञानविशेषे सयम विदधान· स्वकीयान्तःकरण परकीयान्तः-करणसम्बद्धं विधाय परेषामन्तःकरणभाव गृह्णाति ।

यथा मधुकरराजा यत्र यत्र गच्छति, तत्र तत्रान्या अपि मधुमक्षिकाः सहैव गच्छन्ति, तथैव परकायप्रवेशसमये जीवेन सह तदीयानीन्द्रियाण्यपि गच्छन्ति । परस्य काये प्रतिष्ठो योगी तत्र स्वशरीरवद् व्यवहरति । सयम-द्वारा समानवायोर्विजयेन योगी तेज पुञ्जमयो जायते । यतः समानवायुः समत्वमुत्पादयति । अतः समत्वेन च गुणेन साधके सर्वा शक्तयः समा-कृष्यन्ते । यथा मर्यादावान् समभावसम्पन्नः समुद्रो भुमिस्थितान् जलराशीन् नदीद्वारा स्वस्मिन् समाकर्षति, यथा वा समदर्शी भगवान् भास्कर स्वकीयकिरणैरितस्ततो विकीर्णान् रसान् स्वस्मिन् समाकर्षति, तथैव शरीरस्थित· समानो वायु स्वरूपतो वियुज्यमानो विकर्णा तेज-शक्ति समाकृष्य योगिनः शरीर तेजोमयं विधत्ते । यथा वैज्ञानिका तन्त्र-क्रियाद्वारा प्राणिना छायारूपचिह्नाना धारणशक्ति समुत्पाद्य फोटोग्राफ-नामके यन्त्रे मनुष्यादीना मूर्तीर्यथावत् प्रकाशयन्ति, तथैव योगिनोऽपि पूर्वजन्मसंस्कारेषु सयमेन पूर्वजन्मज्ञान परजन्मसस्कारेपु च सयमेन परजन्मज्ञान कर्तु प्रभवन्ति ।

यथा रूपविषयकसंयमेन योगिन· शरीरस्वरूप केनापि द्रष्टुं न शक्यते, तथैव शब्दविषयकसयमेन श्रोत्रग्राह्यशक्तिरपि स्तम्भिता भवति । येन

योगिन समुच्चारितशब्दमपि न कश्चिच्छ्रोतुमर्हति । एवं स्पर्शरसगन्धाना सयमेन योगिन शरीरस्य स्पर्शरसगन्धानपि पार्श्वस्थ. पुरुषो नावगन्तुं प्रभवति ।

यथा समेषा शब्दानामाश्रय आकाश, तथैव समस्ताना प्राणिना कर्णेन्द्रियाधारोऽप्याकाश एव । यथा दाहिकया शक्त्या साकं पावकस्य सवन्ध, तथैव शब्देन सहाकाशस्य सबन्धो विद्यते । आकाश एकस्मिन् स्थाने समुच्चरित. शब्द· स्थानान्तर गच्छति । यतस्तयोर्मध्य आकाशातिरिक्त किमप्यन्यन्नास्ति । अत. शब्दाधार आकाश एव सिध्यति । कर्मेन्द्रियस्याकाशसबन्धादेव शब्दः श्रूयते । पिहिते कर्णे आकाशसवन्धाभावान्न शब्द समाकर्ण्यते । अत आकाशेन सह कर्णेन्द्रियस्यास्ति साक्षात् संवन्ध इति निश्चीयते । आकाशस्यावरणराहित्यात् सर्वव्यापित्वे नास्ति कश्चित् सन्देहलेश. । तथा च कर्णेन्द्रियाकाशयोराश्रयाश्रयिभावसवन्धे सयमेन योगिना दिव्या शक्तिरधिगम्यते । यया सूक्ष्मादपि सूक्ष्मो निगूढादपि निगूढोऽतिदूरस्थोऽपि शब्द. श्रूयते योगिना ।

स्थूलशरीराकाशयो· सवन्धे सयममनुतिष्ठन् योगी यदा लघुतरतूलादिपदार्थेषु धारणा कुर्यात्तदा तस्मिन् लघुत्वसिद्धिर्जायते । तथा योगी यथेच्छमाकाशे भ्रमति, तिष्ठति, स्थानात् स्थानान्तरञ्च गन्तु प्रभवति ।

यदा योगी सयमेन भूताना विजयं कुरुते, तदा स्वत एव प्रकृतिस्तदधीनता प्रतिपद्यते । यथा गाव. स्ववत्सान् स्वतो दुग्ध पाययन्ति, तथैव पञ्चमहाभूतविजयेन वशीभूता प्रकृति. स्वयमेव यागिन सेवते ।

सिद्धिर्द्विविधा—परा, अपरा च । तत्र विपयसवन्धिन्योऽपरा. सिद्धयो मुमुक्षुभिर्योगिभिर्हेयाः स्वस्वरूपानुभवोपयोगिनी परा सिद्धि । तत्र परासिद्धिस्तदुपयोगिन्यश्चान्या. सिद्धयो योगिभिरुपादेया·, हेयाश्च विषयसवन्धिन्योऽपरा सिद्धय. । यदि साधकस्तीव्रवैराग्ययुक्तो मनसः सुदृढतया योगैश्वर्येभ्यो मुखं परावर्तयन् तत्र न मुह्यति, तर्हि शान्तिमयं तत्स्थानं प्राप्नोति, यत्र गमनेन निखिला अपि मनोवासनाः पूर्णतामापद्यन्ते । सत्त्वगुणप्रभावेण रजस्तमोमलेऽपसारिते, अन्त करणे च निर्मलतामुपगते ऋतम्भराख्या पूर्णज्ञानमयी वुद्धिरुदयते । मलमलीमसेऽन्त.करणे भगवत्साक्षात्कारो न संभवति, अपि तु मलराहित्याद् निर्मलमन्त करणं भगवद्दर्शनाय समर्थं भवति । साधनवैराग्याभ्यां पक्षाभ्यामुड्डीयमानः साधको हस इवात्मदर्शनसामर्थ्यं लभमानस्तीव्रवैराग्योदयाद् विविधे चाकचिक्ये

ग्रस्तो न भवति, अपि तु शनै शनैर्भगवद्दर्शनाधिकारी भवन् परं कल्याणस्वरूप कैवल्यपदमामादयति, यदा सत्त्वगुणस्य प्रबलप्रवाहाद् रजस्तमसो मलं पूर्णरूपेणापसर्पति, तदा पुरुषः स्वकीय यथार्थस्वरूपमधिगच्छति। यथैकोऽग्निस्फुलिङ्गोऽनेकानग्निस्फुलिङ्गानुत्पादयति, तथैव योगबलेनैकमन्त करणमनेकत्व प्रतिपद्यते। महत्तत्त्वमधिगच्छन् योगी यथेच्छमनेकान्यन्त करणानि स्रष्टुमर्हति। योगसाधनेन स्वस्वरूपज्ञानमधिगतवताऽत्मज्ञानिना योगिना सिद्धय स्वत एव प्राप्यन्ते। यद्यपि स्वरूपोपलब्धौ सत्या साधक· प्रकृतिलीलया न पुनर्ग्रस्यते, परन्तु व्युत्थानदशाजनितासु सिद्धिषु समाकृष्ट सन् जडभरतवद् विपन्नो भवितुमर्हति। अतो मुमुक्षुभिर्योगिभि· सिद्धयो हेया एव।

योगशास्त्रे साधकस्त्रिविधोऽभिमत—अधमो मध्यम उत्तमश्च। तत्र साधनपथेऽग्रे सरन् सिद्धिभोगी साधकोऽधमो निगद्यते। सिद्धीरवलोकयन्नपि तद्भोगपराङ्मुखो मध्यम। यस्तु न कथञ्चित् सिद्धिमीक्षते, नापि समीहते, स उत्तम। अत परवैराग्यसनाथ उत्तमसाधक एव कैवल्यस्य सर्वथाधिकारी, तेनैव च त्वरित कैवल्यमासाद्यते।

यथावद् योगसाधनानुष्ठानेन ज्ञानोदये योगिनामन्त करणतो निखिल· सन्देहो दूरीभवति। अतो योगिनो यथेच्छं समेषा वस्तुना यथार्थ ज्ञानं जायते। योगी यत्रैव स्वीया ज्ञानदृष्टि प्रसारयति, तत्रैव तस्य बुद्धिर्देशकालपरिच्छेदरहिताऽभ्रान्ता सती प्रयाति, तया च तत्र त्रिकालदर्शित्वमुपपद्यते।

यदा साधको मन प्राणमिन्द्रियाणि च वशे कृत्वा स्वकीयं चित्त परमात्मनि नियोजयति, तदेश्वर भावयतस्तस्य समक्ष· बह्व्यः सिद्धयः उपतिष्ठन्ते। तदुक्तं श्रीमद्भागवते महापुराणे—

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिन।
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धय॥ श्री० भा० ११।१५।१

सिद्धीरेताः समुपलभ्य योगिना सर्वं कर्तुं शक्यते। पाषाणे प्रवेष्टुं पार्यते, आवरणरहिते वियत्यपि तिरोहितेन भूयते, पञ्चापि भूतानि योगिनां क्लेशदानि न भवन्ति। योगी शिलायां प्रवेष्टुमर्हति, जल तमार्द्रं कर्तुं न शक्नोति, पावकस्तदीय शरीर न दहति। न च वायु· शुष्क

कर्तुमर्हति। इमा अष्टौ सिद्धय ईश्वरीया सन्ति। एताभिर्योगिन ईश्वर-स्वरूपता प्रतिपद्यन्ते, ईश्वरानुकम्पयैवैता समधिगम्यन्ते च।

कया धारणया कास्वित् कथस्वित् सिद्धिरच्युत !
कति वा सिद्धयो ब्रूहि योगिना सिद्धिदो भवान्॥ ( ११।१५।१ )

इति श्रीमद्भागवते उद्धवस्य प्रश्ने भगवान् श्रीकृष्ण. प्रोक्तवान्—

सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः।
तासामष्टौ मत्प्रधाना दशैव गुणहेतव.॥ ( ११।१५।२ )

तथाहि अष्टसु सिद्धिषु तिस्रोऽणिमा-महिमा-लघिमासिद्धयस्तु शारीरि-क्यः सन्ति। आसा प्राप्तिरैन्द्रियकी सिद्धिरस्ति। इच्छानुसारं लौकिकपार-लौकिकपदार्थानुभाविका प्राकाम्यसिद्धि। मायायास्तत्कार्यस्य च सञ्चालनमीशिता सिद्धिः गुणेष्वसङ्गो वशिता सिद्धि। स्वेच्छया कामनासुखप्राप्ति· कामावसायितानाम्न्यष्टमी सिद्धि।एता अष्टाऽपि सिद्धयो मयि स्वभावत एव तिष्ठन्ति। येभ्योऽह ददामि तैरशतः प्राप्यन्ते। तथा चोक्त श्रीमद्भागवते—"एता मे सिद्धय सौम्य ! अष्टौ चोत्पत्तिका मताः"
( श्रीमद्भागवते ११।१५।५ )

एतदतिरिक्ता अनूर्मित्व-दूरश्रवण-दूरदर्शन-मनोजवत्व-कामरूपत्व-परकायप्रवेशन–स्वच्छन्दमृत्यु–अप्सरोभि. सहक्रीडा–देवदर्शन–सकल्पसिद्धि अप्रतिहतगत्याज्ञा इतीमा दश सिद्धय. सत्त्वगुणस्य विशेषविकासा-द्भवन्ति। त्रिकालज्ञत्व-द्वन्द्वराहित्य-परचित्ताद्यभिज्ञता-अग्नि-सूर्य-जल-विषादीना शक्तिप्रतिष्टम्भनत्व-अपराजयत्वानीत्येताः पञ्चापि सिद्धयो योगिना भवन्ति।

किञ्च, कया धारणया कीदृशी सिद्धिरवाप्यत इत्यपि तत्र विस्तरतो वर्णितम्, योगधारणाभिः प्राप्यमाणसिद्धीनां नामनिर्देशोऽपि कृतोऽस्ति। तथा हि—यः पञ्चभूताना सूक्ष्मास्तन्मात्रा ईश्वरशरीरमिति बुद्ध्या तन्मात्रक मे शरीरमिति भावयन् साधकोऽणिमानं सिद्धि प्राप्नोति। यः स्वीयं मनो महत्त्वाकारं कृत्वा महत्तत्त्वरूपेण मा ध्यायति, स महिमानं सिद्धिमवाप्नोति। यो वाय्वादीनां चतुर्णा भूताना परमाणून् मदात्मकान् मत्वा चित्तं मदाकारं कुरुते, स लघिमानं सिद्धि प्राप्नोति। यः सात्त्विक-महङ्कारं मत्स्वरूपं मत्वा तत्र धारणां करोति, स प्राप्ति सिद्धि प्राप्नोति।

यो महत्यात्मनि मयि मानसं धारयति, स प्राकाम्यसिद्धिमवाप्नोति। ययेच्छानुसारं सर्वे भोगा लभ्यन्ते। य. कालस्वरूपे विश्वरूपे मयि धारणां करोति, स ईशित्वसिद्धिमवाप्नोति। अनया जीवान् स्वेच्छया प्रेरयितुं सामर्थ्यमुपलभ्यते। यस्तुरीयाख्ये भगवति नारायणे मयि मनो धारयति, स कामावसायित्वसिद्धिं प्राप्नोति, यया तस्य सर्वा कामना पूर्णा भवन्ति। श्वेतद्वीपपतौ शुद्धधर्ममये मयि चित्तं धारयन् योगी षडूर्मिरहितो भवति। य आकाशात्मनि मयि मनसा सहानाहतनाद चिन्तयति, स दूरश्रवण-सिद्धि लभते। यो योगी नेत्र सूर्ये, सूर्यञ्च नेत्रे सयोज्य मा मनसा ध्यायति, स सूक्ष्मदृक् सन् दूरदर्शनसिद्धिमाप्नोति। यया स समस्तं विश्वं पश्यति। यो मनो देह च प्राणै सह मयि सयोज्य मम धारणा करोति स मनोजवत्वसिद्धि लभते। अनया यत्रेच्छति तत्र तत्क्षणे समुपगच्छति। यो योगी मन उपादाय ( उपादानकारणं कृत्वा ) यद्यद् रूप वभूषति तत्तदनुकूल रूप धत्त इत्येषा कामरूपसिद्धिः। परकायप्रवेशमिच्छन् योग्येवं भावयेद् यदहं तस्मिन्नेव शरीरेऽस्मि। एव भावनया तस्य प्राणवायुयथा भ्रमर एक पुष्प परिहृत्य पुष्पान्तरं गच्छति, तथैवात्मशरीर त्यक्त्वा परकाये प्रविशति ( श्रीमद्भागवते ११।१५।४-२३ )।

सकामाना साधकाना हिताय नानाविधाना सिद्धीना वर्णन पुराणे-तिहासयोर्योगशास्त्रेषु चोपलभ्यते। सिद्धीनामनेकेषु भेदेषु सत्स्वपि योगदर्शनस्य विभूतिपादे भगवता पतञ्जलिना सिद्धेस्त्रयस्त्रिशद्भेदाः समाम्नाताः। तास्वष्टौ सिद्धयो मुख्याः सन्ति। पञ्चमहाभूतविजया-नन्तरमणिमादयो पूर्वोक्ता अष्टौ सिद्धयः स्वयमुपतिष्ठन्ते।

योगसाधनेन स्वस्वरूपोपलब्धौ जातायामपि पूर्वसस्कारजन्यां व्युत्थानदशामधिगतवता योगिना सिद्धय स्वत एव प्रतिपद्यन्ते। वस्तुतः समाधिजन्ये मुक्तिपदे सिद्धयो विघ्नकारिण्य एव सन्ति। अत एव चञ्चल-चेतसो योगिन एव सिद्धिमपेक्षन्ते। सर्वा अपि ताः समाधेर्नित्यानन्दशुद्धा-द्वैतदशायां प्रत्यूहजनिका एव। अत एव योगिनं सावधानीकर्तुं भगवता पतञ्जलिना विभूतिपादे—"ताः समाधावुपसर्गा व्युत्थाने सिद्धय." ( ३।३७ ) इति योगसूत्रमाविष्कृतम्। यद्यपि स्वस्वरूपोपलब्धौ सत्या साधकः प्रकृतिलीलया न पुनर्ग्रस्तु शक्यते, तथापि व्युत्थानदशाजनितासु सिद्धिषु समातिष्ठन् जडभरतवद् विपन्नो भवितुमर्हतीति प्रधान्येन समुन्नतयोगिन सावधानीकर्तुं सिद्धान्तोऽयं निर्णीत। अतो लौकिक्यश्च

सर्वविधा अपि सिद्धयो मुमुक्षुभिर्हेया एव। तथा चोक्त श्रीधीश-गीतायाम्—

महतो ज्ञानिनश्चैव योगिनोऽपि तपस्विन ।
सिद्धि सार्थैरनेकै र्हि मोहयन्ती निरन्तरम् ॥
आवागमनचक्रेऽस्मिन् स्वविलासात्मके मुहु ।
मोक्षमार्ग च रुन्धाना घूर्णयेद्वै समन्तत ॥

वस्तुत सिद्धय परमार्थमार्गे वाधिका एव सन्ति। अत सिद्धिर्न वाञ्छनीया, तत्प्राप्त्या मुमुक्षुयोगिना योगमार्गेऽन्तराया आविर्भवन्ति। सिद्धिभ्य सकामाना साधकानामभ्युदयस्त्ववश्य भवति, परन्तु मुमुक्षूणा कृते वाधिका एव भवन्ति ता, न साधिका —

सर्वस्याभ्युदयस्यापि बीजेपु योगसिद्धिषु ।
मत्सायुज्यदशाप्राप्तौ वाधिकास्ता न साधिका ॥ ४।१३ ॥

यस्य चित्तवृत्तिर्भगवदुन्मुखा न भवति, यस्मिन्नल्पीयस्यपि विषया-सक्तिर्विद्यते, एवम्भूतेन पुसा यदि सिद्धय उपलब्धाः स्यु', तर्हि ताभिस्त-स्याभिमान वर्धते। विषयप्राप्तौ भोगे च सिद्धोनामुपयोगो भवति, येन भोगे वाधाया आशङ्कोपतिष्ठते। तस्या विनाशे सिद्धय उपयुज्यन्ते। परिणामे साधक कस-रावण-हिरण्यकशिपुवदसुरभावापन्नतया क्रूरो भवति। अत. प्राप्तासु सिद्धिषु साधकस्तत्र न रमेत; अपि तु ता विघ्नरूपा इति मत्वा परित्यजेत्। अत एव साधका ब्रह्मलोकभोगमपि प्राप्य ब्रह्म-सामर्थ्यं वोपलभ्य सिद्धिभ्य पृथक् तिष्ठन्ति। तेषा कृते वास्तविको सिद्धि-स्त्वन्त करणस्य सम्यक् शुद्धिरेवास्ति। यत्र भगवदतिरिक्तस्य कस्यापि स्थानं नास्ति—

अन्तरायान् वदन्त्येता युञ्जतो योगमुत्तमम् ।
मया सम्पाद्यमानस्य कालक्षपणहेतव. ॥
जन्मौषधितपोमन्त्रै र्यावतीरिह सिद्धय. ।
योगेनाप्नोति ता सर्वा नान्यैर्योगगतिं व्रजेत् ॥
( श्री. भा. ११।१५।३३-३४ )

योगसूत्रेच "जन्मौषधिमन्त्रतप समाधिजाः सिद्धय" ( ४।१ ) इति सूत्रयता भगवता पतञ्जलिना तु पञ्चविधाः सिद्धयः प्रोक्ता'। तत्र जन्मतः

सिद्धिर्यथा परमहमशुकदेवे महर्षिकपिलादौ च जन्मत एव सिद्धिरुत्पन्ना। औपधादिनापि सिद्धय समुत्पद्यन्ते, यथा रसायनादिना ताम्रसुवर्णनिर्माण कायाकल्पकरैरौपधैश्च जरानाशपूर्वक दीर्घायुष्ट्वप्राप्तिर्यथा महर्पेश्च्यवनस्य। मन्त्रैरपि सिद्धि प्राप्यते, यथा गुटिकादिसिद्धिद्वारा आकाशगमनम्, तान्त्रिकमन्त्रसाधनेन मारणम्, वशीकरणाम्, उच्चाटनादिकायञ्च। तपसाऽपि सिद्धिरधिगम्यते। यथा तप साधनेन विश्वामित्रस्य ब्राह्मणत्वाधिगम भक्तप्रधानस्य नन्दिकेश्वरस्य मनुष्यतो देवत्वप्राप्तिश्च। समाधित. सर्वविध-सिद्धिलाभस्तु योगसूत्र तृतीयपादे विस्तृत प्रदर्शित। सर्वा अपि सिद्धय. समाधिसिद्धेर्विघ्नस्वरूपा एव। यत सर्वासामपि साहाय्यकारि साधन समाधिरेव। यत शुकदेवादिभि प्राक् साधनानि कृतानि, अतो वर्तमान-जन्मनि सिद्धिरधिगता। औपधादिनापि शरीर तादृशमेव जायते यादृश समाधिना सपद्यते।

राज्ञ शर्याति कन्यया सुकन्यया बालसुलभचापल्येनारण्ये यदा महार्षेश्च्यवनस्य चक्षुपी कण्टकेन विद्धे, तदा शर्याति सैनिकाना शकृन्मूत्र-निरोधाऽभवत्। तदुक्त श्रीमद्भागवते—"शकृन्मूत्रनिरोधाऽभूत् सैनिकाना च तत्क्षणात्" (९।३।५)।

अपि च शर्याति. सोमयज्ञे महर्षिणा च्यवनेन स्वतपःप्रभावेणासोम-पावप्यश्विनोकुमारौ सोम पायितौ, तदसहमानो देवराजस्तौ हन्तु यदा वज्रमाददे, तदा महर्षिश्च्यवनः सवज्रमिन्द्रस्य वाहु स्तम्भयामास—

हन्तु तमाददे वज्र सद्यो मन्युरमर्षित।
सवज्र स्तम्भयामास भुजमिन्द्रस्य भार्गव॥
(श्री० भा० ९।३ २५)

इद सर्वं पर्यालोच्य महर्षेश्च्यवनस्य तप सिद्धौ न कश्चिदस्ति सन्देहलेशः।

भगवन्तं श्रीराम परावर्तयितुकामाय सेनापरिजनयुताय भरताय सिद्धेश्वयण भरद्वाजेन महर्षिणा विहित सार्वभौमेनापि राज्ञा विधातुम-शक्यमातिथ्य दर्श दर्श कस्य सचेतसो योगसिद्धिविषये सन्देहकलङ्क-पङ्कलेशः सभवेत्?

श्रीराम साक्षात्कर्तु चित्रकूटगमनसमये तीर्थराजे प्रयागे भरद्वाजाश्रमे निवासाय कृतमति भरत भरद्वाजा निमन्त्र्य यज्ञशाला प्रविश्य आचम्य

नेत्रे प्रमृज्य प्रणम्य च निखिलशिल्पकलाकोविद विश्वकर्माणमाहूयातिथ्य-सामग्रीसम्पादनाय समाज्ञप्तवान् । अथ महर्षिणाज्ञप्तः स तत्काल विविधा शयनाशनोपवेशनादिभिरद्भुतामातिथ्यसामग्रीमुपस्थापयामास ततो दिव्यान् मानवमात्रदुर्लभानातिथ्यसामग्रीसम्भारान् समालोक्यायत्नसिद्धत्वात्, अपूर्वत्वात्, अत्याश्चर्यजनकत्वात्, द्रागुत्पन्नविविधविचित्रवस्तुसमूहत्वाच्च सर्वे विस्मिता अभूवन् ।

तत्तत्पुराणेषु निर्दिष्टा विश्वामित्रवशिष्ठयोरनेका सिद्धय. कस्याश्चर्य-जनिका न भवन्ति । तप सिद्धिप्रभावादेव विश्वामित्रेणाभिनवा सृष्टि कृता, स्वर्गात् पात्यमानोऽपि त्रिशङ्कुरन्तराले स्थापित ।

"आज्ञा गुरूणामविलङ्घनीया" इति सिद्धान्तेन पितुर्यमदग्नेराज्ञया मातू रेणुकाया परशुरामेण शिरसि छिन्ने आज्ञापरिपालनात् प्रसन्नेन पित्रा जमदग्निना तप सिद्धया रेणुका पुनरुज्जीविता । तप सिद्धिप्रभावेणैव राज्ञा भगीरथेन भव्या भगवती भागीरथी भूतले समानीयास्माक दृग्गोचरीकृता । तप सिद्धयैवागस्त्येन दुर्धर्षोऽपि समुद्रश्चुलुकीकृत. । समाधिसिद्धे पूर्ण प्रभावो दधीचिमुनिद्वारा स्वास्थिप्रदानसमये दृश्यते । सादर देवै प्रार्थित इन्द्रस्य वज्रनिर्माणार्थ परोपकारबुद्धयास्थिप्रदाना-योद्यतो महर्षिर्दधीचिर्यदा परे ब्रह्मणि मनः सयोज्य समाधावस्थित, तदा स गत शरीरमपि नाज्ञातवान् धन्या खल्वस्माक पूर्वजा ये परोपकाराय स्वशीरस्थमस्थ्यपि सहर्ष प्रायच्छन्, किमुत धनादिकम्—

यताक्षासुमनोबुद्धिस्तत्त्वदृक् स्वस्तवन्धनः ।
आस्थित. परम योगं न देह वुबुधे गतम् ॥

( श्रीमद्भागवते ६।१०।१२ )

मैथिलीमन्वेष्टुं लङ्का गच्छतो भगवतो हनुमतो मध्येसमुद्र सुरसया सह जाते साक्षात्कारे भूयोभूयस्तदपेक्षाया द्विगुणितां कायवृद्धि दर्श दर्शमु-भयोः कायवृद्धिसिद्धौ न भवितुमर्हति कस्यापि कापि विचिकित्सा । पुनरेग्रे सिंहिकासाक्षात्कारे "सक्षिप्य मुहुरात्मानं निपपात महाकपि." ( वा० रा० ५।१।१८३ )। भूयो लङ्काप्रवेशसमये ता दुष्प्रवेश्या मत्वा देह संक्षिप्य मार्जारमात्रशरीरो भूत्वा प्रविवेश । एवमशोकवाटिकाया

सन्दिहानायाः सीताया समक्ष कामावसायित्वसिद्धि प्रदर्शयितुमुद्यतो भगवान् हनूमानुवाच—

न मे जानाति सत्त्व वा प्रभाव वासितेक्षणा ।
तस्मात् पश्यतु वैदेही यद्रूप मम कामत ॥
( वा० रा० २६।३४ )

एव लङ्काया यत्र तत्र हनूमत. शरीरस्य सकोचविकासौ दृष्ट्वा तत्राष्टविधसिद्धिसद्भावे न कश्चिदस्ति सन्देहलेश । योगसिद्धिप्रभावात् प्रकृतिर्योगिना वश्या भवति, प्रकृतेस्तद्वश्यत्वाद् योगिभि. कायस्य महत्त्वह्रस्वत्वादिक सर्वं कर्तु पार्यते ।

योगसिद्धिषु बह्व्य. सिद्धय आत्मज्ञानिना योगिनामेव भवन्ति, कियन्त्योऽज्ञानिनामपि भवन्ति । आत्मज्ञानहीना: साधका सिद्धिमुपगता भ्रष्टा भवन्ति । यतस्ते सांसारिकसुखप्राप्तये ता उपयुञ्जते, परिणामे आत्मोन्नतिच्युतास्ते भवन्ति, किन्त्वात्मवेत्तार आत्मोपलब्धौ सदाऽग्रेसरीभवन्त्येव । अत एवोक्तं हरिवशे हरिवशपर्वणि—"योगो हि दुर्लभो नित्यमल्पप्रज्ञैर्न सशय." ( १८।१५ ) ।

वस्तुत· पुराणसिद्धान्तानुसार सर्वैश्वर्यसम्पन्नस्य भगवतोऽनुकम्पया शमादिसम्पन्नेषु यमनियमादिना विशुद्धहृदयेषु भगवद्भक्तेपु सर्वा सिद्धयोऽनायासमेवोपतिष्ठन्ते । अत एव पर्वतात् पात्यमानस्यापि प्रह्लादस्य न कापि क्षतिरजायत, नापि हस्तिना ताड्यमानस्य तस्य काऽपि वेदनाभवत्, न च विषमोदकभक्षणेनापि किञ्चिदनिष्ट जातम्, न वा ब्रह्मण: प्राप्तवरयापि होलिकाया सहाग्नौ दह्यमानस्य तस्य शरीरं दग्धु वह्निः प्राभवत् । पुराणेषु स्थले स्थलेऽवतारधारिणा रामकृष्णादीना महापुरुषाणां सिद्धेर्दर्शनं तु बोभूयत एव ।

ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे द्वाविंशतिधा सिद्धयो नामग्राहं गृहिता: सन्ति यथा—१–अणिमासिद्धि·, २—लघिमासिद्धि·, ३—प्राप्तिसिद्धि , ४—प्राकाम्यसिद्धि·, ५—महिमासिद्धि·, ६—ईशित्वसिद्धि , ७—वशित्वसिद्धि·, ८—कामावसायित्वसिद्धि·, ९—दूरश्रवणसिद्धि , १०—परकायप्रवेशसिद्धि·, ११—मनोजवित्वसिद्धि:, १२—सर्वज्ञत्वसिद्धि , १३—अभीष्टसिद्धि , १४—अग्निस्तम्भनसिद्धि·, १५—जलस्तम्भनसिद्धि ,

१६—चिरजीवित्वसिद्धि, १७—वायुस्तम्भनसिद्धि, १८—क्षुत्पिपासा-निद्रास्तम्भनसिद्धि, १९—वाक्सिद्धि, २०—मृतानयनसिद्धि, २१—सृष्टिकरणसिद्धि, २२—प्राणाकर्षणसिद्धिश्च।

तदनन्तरं सर्वसिद्धिप्रदां मन्त्रसिद्धिमुद्दिश्य तत्प्राप्त्युपायोऽपि तत्र दर्शितः—

अनेन योगिनः सिद्धा मुनीन्द्राश्च सुरास्तथा।
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेत् सताम्॥

एवं मार्कण्डेयपुराणस्य चत्वारिंशदध्याये सलक्षणमष्टसिद्धीनामुल्लेखः कृतोऽस्ति (४०।३०—३४)।

शिवपुराणे उमासंहितायां षड्विंशाध्याये सप्तविंशाध्याये च सिद्धीनां स्वरूपं फलञ्च प्रदर्शितमस्ति। तत्रोक्तं यत्—"यः प्रतिदिनमेकाग्रचेतसा ओङ्कारस्याभ्यासं करोति तस्य किञ्चिदप्यसाध्यं न भवति, मनोवाञ्छिता सिद्धयो जायन्ते, स सर्वज्ञः समदर्शी स्वेच्छानुसारं रूपं धृत्वा सर्वत्र विहरति, कदाचिदपि विकारैर्नाभिभूयते। स साक्षाच्छिव एव भवति, इत्यत्र न काचित् संशीति"।

"भ्रुवोर्मध्ये ललाटवर्तिनं बालसूर्यतेजसमग्निं साक्षात्कृत्य योगी इच्छानुसारं रूपधारणसामर्थ्यवान् सन् यथेच्छं शरीरं धृत्वा क्रीडति। स कारणतत्त्वं शान्तयित्वाऽन्यशरीरे च प्रवेष्टुमणिमादिसिद्धीः प्राप्तुं सर्वं द्रष्टुं दूरस्थं शब्दं श्रोतुमाकाशे विचरितुं च सिद्धीः प्राप्नोति। सूर्यप्रभवं महाज्योतिर्मयं महापुरुषं मां ज्ञात्वा साधको मृत्युमतिक्राम्यति, मोक्षलाभाय ततोऽन्यो न कश्चिद् मार्गोऽस्ति" (२७।२५)।

महाभारते तु स्थले स्थले योगसिद्धेः प्रभावो दृश्यते, विशेषतः शान्तिपर्वणि (३२०) अध्याये सिद्धेश्चर्चा कृतास्ति। यत्र राज्ञो धर्मध्वजस्य जनकस्य ज्ञानपरीक्षार्थं मिथिलामुपस्थाय सुलभानाम्नी काचिद् योगिनी भिक्षाचर्याव्याजेन तत्साक्षात्कारं कृतवती। तेन कृतातिथ्या गृहीतभोजना विद्वत्सभामध्यं मन्त्रिभिः परिवृतं तं प्रति मोक्षविषये जिज्ञासमानाऽपि जनकस्य जीवन्मुक्तत्वे सन्दिहाना सा स्वयोगशक्तिबलेन स्वसूक्ष्मबुद्धिद्वारा जनकस्य शरीरे प्रविष्टा सती निजनेत्रद्वारा राज्ञो नेत्रकिरणानि संयम्य योगबलेन तच्चित्तं बद्ध्वा वशीचकार।

सोऽपि तत्प्रभाव ज्ञात्वा स्वभावद्वारा तद्भावं गृहीत्वा अनिष्ठत्। तदनन्तर तयो प्रश्नोत्तरमजायत—

सुलभा त्वस्य धर्मेषु मुक्तो नेति ससशया।
सत्त्व सत्त्वेन योगज्ञा प्रविवेश महीपते.॥
नेत्राभ्या नेत्रयोरस्य रश्मीन् सयम्य रश्मिभि।
सा स्मत चोदयन्ती योगवन्धैर्ववन्ध ह॥
जनकोऽप्युत्सयन् राजा भावमस्या विशेषयन्।
प्रतिजग्राह भावेषु भावमस्या नृपोत्तम!॥
तदेकस्मिन्नधिष्ठाने सवाद· श्रूयतामयम्।
छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डिके॥

(म भा॰ शा प ३२०।१६-१९)

योगसिद्धिप्रभावादेव व्यासेन सञ्जयाय दिव्यदृष्टि· प्रदत्ता, यो दूरस्थोऽपि समस्तं महाभारतयुद्धमपश्यत्।

योगिनो योगमार्गेऽग्रेसरतो येऽन्तराया समुद्भवन्ति ते योगविघ्न-शब्देनोच्यन्ते। जोवो हि स्वभाववलेन दृष्टानुश्रविकविषयान् सेवमान· साधनवलेन भगवत्कृपावलेन च योगमार्गेऽग्रसरा भवति। तथापि योगिनो दृष्टानुश्रविकाविषया न जहति, तत्र तस्मिन् शुभमार्गे तस्य योगिन. स्वत एव या उच्चविषयभोगोपयोगिनी दैवी शक्ति रुदेति सा योगसिद्धि-रित्याम्नायते।

सिद्धीनामनेकविधत्वेऽपि अध्यात्माधिदैवाधिभूतभेदेन त्रैविध्यमेवोह्यम्। तत्र मन्त्रौषधिप्रभृतया हि आधिभौतिका सिद्धय, अणिमालघिमादय. आधिदैविक्य. कथ्यन्ते, वेदाविर्भावशास्त्रप्रकाशनशक्तिप्रभृतया वौद्धा. सिद्धय आध्यात्मिक्यो ज्ञेया:। एषा शारीरिक-मानसिक-बौद्धशक्तिविशे-षाणा सर्वविधाभिरपि सिद्धिभि. सम्बन्धो ज्ञेय। अत्रैव यदि योगी योग-मार्गे व्रजन् आसा सिद्धीना मध्ये कुत्रापि स्खलन्नासक्तो भवेच्चेत्तर्हि तस्य पतनमवश्य भावि भवति।

यदा योगिषु इमा दैवशक्तिरूपा योगसिद्धयो विराजमाना भवन्ति तदा तेषा योगिना सिद्धिप्रदर्शनेच्छाविरहेऽपि कुलकामिनीनामङ्गदर्शनवत् कदाचिद् अन्येषामपि ता सिद्धयो दृष्टिपथमारोहन्ति एव। यथा हि कुलाङ्गना पुरुषान्तर स्वाङ्ग नैव दर्शयति, या प्रदर्शयति सा तु कुलटा

व्यभिचारिणी वा निगद्यते। एवं सत्यपि कुलाङ्गनायाः निजपितृ-भ्रातृ-पुत्रादिभ्यो भोजनपरिवेषणादिसेवाव्यग्रतायाः कदाचन वायुवेगवशाद् वस्त्राञ्चले दोधूयमानेऽनिच्छयापि पुरुषान्तरैस्तदङ्गदर्शनं क्रियते तथैव परवैराग्यशालिनोऽपि योगिनोऽप्यनिच्छयैव योगसिद्धय कदाचित् प्रसङ्ग-वशात् पुरुषान्तराणा दृष्टिपथमृच्छन्ति चेन्न तद्विरुद्ध मन्यते। यदि तु स योगी तासु लब्धासु सिद्धिपु समासक्तो भूत्वा तत्समाराधनपरायणः स्यात्तर्हि तत्पतन नूनं भवेदिति निश्चप्रचम्।

ब्रह्माण्डपुराणस्य उपसंहारपादेऽपि ललितादेव्या स्तुत्या सौभाग्यं यश अष्टौ सिद्धीश्च प्रप्नोति साधक इत्युक्तमस्ति—

स्तुवन्ति ये महाभागा ललिता परमेश्वरीम्।
ते प्राप्नुवन्ति सौभाग्यमष्टौ सिद्धीर्महद् यश ॥१८।१८

यावत्यो हि सिद्धय श्रूयन्ते, ता सर्वा अपि त्रिधा विभक्तु शक्यन्ते। तत्र प्रथमा ज्ञानमम्बन्धिनो सिद्धिराध्यात्मिकी निगद्यते, द्वितीया कर्म-सम्बन्धिनीसिद्धि आधिदैविकी सिद्धिः कथ्यते, तृतोया स्थूलपदार्थ-सम्बन्धिनी सिद्धिश्च आधिभौतिकी प्रोच्यते। आसां विविधानामपि सिद्धीनां दैवे जगति या आधिदैविकस्वरूपा देव्य सन्ति ता अपि त्रिविद्या शब्दवाच्या। तन्त्रान्तरेषु पुराणेषु च त्रिविधविद्याना कृपाप्राप्तये तासां वशीकरणेन च सिद्ध्यवाप्तये वहव उपायाः विवेचिता सन्ति। तत्र तिसृणामपि सिद्धोना प्राप्तौ यानि साधनानि अनुष्ठीयन्ते, तानि योगमूल-कानि तपोमूलकानि वा भवन्ति। तत्साधनवेलायाञ्च क्षमा-मौन-सयमा-नामालम्बन सर्वथाऽऽवश्यकम्।

आसा तिसृणा विद्याना च महात्म्यमीदृगुन्नत विद्यते यद् उन्नतो-न्नता अपि देवा एकाधारेण अधिगन्तुं नार्हन्ति। यथा आध्यात्मिक्य-शक्तयो महत्सु ऋषिषु समुपलभ्यन्ते, परन्तु ता एव सर्वेष्वपि भगवदव-तारेषु नासाद्यन्ते। इत्थमेव या नानाविधा अधिदैव्य सिद्धयो भगवद-वतरेषु प्राप्यन्ते, न ता एव ऋषिषु समासाद्यन्ते। अतस्तासा सर्वासामपि एकाधारेण प्रकाशोऽसम्भव एव प्रतिभाति अस्मादेव हेतो महर्षेर्विश्वामित्र-स्यापि सिद्धीना प्राप्तौ अनेके विघ्नाः सजाता। तथापि विश्वामित्रमहर्षेः तपसोऽसाधारण्यं सर्वजगत्प्रसिद्धमेव। यतो हि स महात्मा एकास्मिन्नेव जन्मनि क्षत्रियशरीर परिवर्त्य ब्राह्मणशरीरमधिगतवान्। इत्यत एव यदि

तस्यामाधारणतपस्विनो वशे इमाः तिस्रोऽपि सिद्धय स्युस्तर्हि जगदधिष्ठात्र्या जगदम्बाया अनुम्पयाविरुद्धमसम्भव कार्यमपि सम्भवं स्यात् ।

विश्वामित्रस्यासाधारणतप·प्रभावपरवशाः तेन वलादाकृष्यमाणा तद्भयत्रस्ता· ता त्रिविधसिद्धद्ध्यधिष्ठातृदेवता दु खिता आसन् । विश्वामित्रस्य चेतसि कोधाहङ्कारयो समुदयवेलायामेव तस्य मौनव्रतभगे सति तदीया प्रवला अपि तप शक्ति· क्षीणा सजाता । यया प्रवलया तप-शक्त्या सुदृढया योगशक्त्या च तिस्रो महाविद्या समाकृष्णमाणा आसन् । तत· तासा त्रिविधाना स्वतन्त्रतयाऽन्तरायोपलब्ध्या पलायनावसरोपस्थितिरजनि । ता पलायय स्वाधिष्ठानमाश्रिता ।

श्रीमद्भागवतानुसारमीश्वराराधनतो योगिनो नूनं सर्वा सिद्धया जायन्ते–

उपासकम्य मामेव योगधारणया मुने ।<br>
सिद्धय पूर्वकथिता उपतिष्ठन्त्यशेषत ॥<br>
मद्धारणा धारयत का सा सिद्धि सुदुर्लभा ।<br>
सर्वासामपि सिद्धीना हेतु पतिरहं प्रभुः ॥

( ११।१५।३१,३२ )

यद्यप्यद्यत्वे सिद्धिप्राप्तये यतमाना अपि बह्वो देशकालयोर्वैपरीत्यात्, परिस्थिते· पारवश्यात्, विशुद्धसाधनाभावात्, सम्यग् यमनियमादियोगाङ्गाननुष्ठानाच्च पूर्ववत् सिद्धि न लभन्ते, तथापि निर्मलेनान्त·करणेन हार्दिकेन च भावेन तदर्थं भूयो भूयो यतनीयमेवावश्यम् ॥

## पुराणेषु योग-षट्चक्रचिन्तनसमीक्षा

भारतीयसस्कृते· प्रतीकानि पुराणानि सन्ति विविधाना विद्यानामागाराणि । तत्र प्रसङ्गतः स्थलविशेषेषु योग-यन्त्र-तन्त्र-मन्त्रादीनामपि विचारचर्चा प्रचुरतया कृताऽस्ति ।

योगस्य प्रायः सर्वे विषया· सन्ति प्रायोगिका परमोपयोगिनश्च । अत एवायमास्तिक-नास्तिक-प्राच्य-प्रतीच्यादिभि· सर्वैरेव समानरूपेण समाद्रियते । अवान्तरविषयेषु स्यान्नाम मतवैविध्यम्, योगविषये परन्तु क्रियाशाना प्रयोगे न कस्यापि विद्यते विमतिः ।

**योगस्योपयोगितादिग्दर्शनम्**

वैज्ञानिका इव योगिनोऽपि समाजस्य उन्नायका भवन्ति। यथा वैज्ञानिकाः स्व-प्रयोग-शालाया तन्मयतापूर्वक विविध प्रयोग-परीक्षणानन्तर समाजस्य समक्षे विविध कल्याण-कारिणम् आविष्कारम् उपस्थापयन्ति तथैव योगिनोऽपि स्व-प्रयोग-शालाया स्वस्थान् दृढान् बलिष्ठान् कार्य-कुशलान् सर्व-कला प्रवीणान् नागरिकान् निर्माय राष्ट्रस्य समाजस्य च महान्तम् उपकार कुर्वन्ति। वैज्ञानिकाना प्रयोगा कदाचिद् अफला समाजस्य राष्ट्रस्य च हानिकारका अपि भवितुम् अर्हन्ति, पर योगिना निर्माण-कार्याणि सर्वदा सत्यस्य शिवस्य सुन्दरस्य च प्रतिष्ठापकान्य् ऐव भवन्तीति नाऽत्र सन्देह ।

योगिना वैज्ञानिकानाञ्च चिन्तन-प्रवाह-मार्ग काम भिन्नो भवेत्, पर द्वावपि प्रकृते· तल-स्पर्शि विवेचन विधातु प्रयतेते। द्वाभ्याम् एव जगत सूक्ष्माणा स्थितीना स्पर्श कर्तुम् प्रयत्यते। अन्तर तयो केवलम् एतावद् एव भवति यद् वैज्ञानिका केवल जगत स्थूल-शक्तिपु स्वाधिकार कृत्वा सन्तोषम् अनुभवन्ति, किन्तु योगिनो नैतावता तुष्यन्ति, प्रत्युत तेषा योगचित्त-धारा इतोप्य् अग्रे प्रवहति। योगिनः समाधिस्थाः सन्ता विश्व-वारिधौ विकीर्णानि सिद्धि-रत्नानि संग्रहीतु प्रभवन्ति। योगिनाम् अन्तर्दृष्टिर् अत्यन्तसूक्ष्मा भवति। ते स्वय साधना-सम्भावित-सिद्धि-समृद्धि सर्वेषा समक्ष समुपस्थापयितु समर्था भवन्ति। अतो योगिना कार्य-कौशल धन्य यशस्यं वन्द्य सर्वथा स्पृहणीय राष्ट्र-निर्माणोपयोगि विश्वोपकारि चास्ति।

विशालं वैभव, विपुला विद्या, सुरम्य स्थानम् अपरिमित साधनम्, समृद्ध साहित्यम्, सुन्दर शरीर, कुशग्रा बुद्धि उर्वरित मस्तिष्कम्, सूक्ष्मा विवेचन-सरणि, सर्वम् एतत् स्वास्थ्य विना निष्फल भवति। अतोऽनायासेन सम्भावितेन योगाऽभ्यासेन शरीरस्य स्वास्थ्य-लाभायावश्य प्रयत्नो विधेय.। योगाऽभ्यासार्थं न बाह्यस्य साधनऽऽवश्यकता भवति, नापि विशालस्य भवनस्यापेक्षा जायते, न चाधिकस्यैश्वर्यस्याऽऽकाङ्क्षास्ति, किन्तु प्रतिदिन प्रात· साय यथासम्भव स्वभवने पवित्रे एव वातावरणे स्वल्प· समयोऽपेक्ष्यते। प्रात· शारीरस्य बौद्धिकस्य च स्वास्थ्यस्य लाभाय शरीर सुदृढ बलिष्ठम् नीरोग मनोहर च विधातु योगदर्शनस्य साधनम् अवश्यम् अनुष्ठेयम्।

योग शरीरम् नीरोगं बलिष्ठ च कुरुते, मानम च निर्मल पवित्र सम्पादयति। योगानुसार प्राकृतिक जीवनम् एव दैनिकस्य जीवनस्य क्रमोऽस्ति। योगिनो वनेषु, पुष्प-वाटिकासु, लता-कुञ्जेषु, गोमयादि-लिप्तेषु पवित्रतमेषु गृहेषु, नदी-कूप-सरसा विशुद्ध-ज लवायूना सेवनेन दुग्ध-कन्द-मूल-फलादीना सदुपयोगेन सन्मार्गानुसरणेन च सूर्य-किरणैर् जीवन-तत्त्व-ग्रहणपूर्वकम् अनायासेन मानसिक नैरुज्यम् उपलभ्य प्राकृतिकं जीवन यापयन्ति।

शरीर व्यवहारार्थस्य परमार्थस्य च मुख्य साधनम् अस्ति। एतद्-द्वारैवाभीष्टस्य वस्तुन उपलब्धे. सम्भवोऽस्ति। शुद्धा नाड्य, विशुद्ध रुधिरम्, बलवान् मज्जा-तन्तु, सशक्त क्रिया-तन्तु, निर्मल ज्ञानम्, विशुद्ध वीर्य च मानव-शरीर-स्वास्थ्य-लाभे भवन्ति कारणानि। एतदर्थ योगाभ्यासम् अन्तरा नाऽस्ति किञ्चिद् अन्यद् वास्तविकम् आत्यन्तम उपयोगि च साधनम्। बाह्य-सौन्दर्यापेक्षयाऽऽन्तरिक-सौन्दर्यस्य भवति महत्त्वम्। नियमतो योगसाधनेनान्तरिक सौन्दर्य वर्द्धते। अतो योगिनो बाह्य-सौन्दर्य-वर्द्धनापेक्षयाऽऽभ्यन्तरस्य सौन्दर्यस्य परमोपयोगित्वम् अनुभूयानुभूयानुशीलयन्ति योगाभ्यासम्। यथा भगवतो मूर्तौ मन्दिर च सौन्दर्य, रम्यत्व, सुदृढत्व स्वच्छत्व चापेक्षितम् अस्ति तथैव शरीरम् अध्यात्म-परमात्मनो मन्दिर मत्वा तस्य निर्मलता-सम्पादनाय प्रय-तन्तेऽहर्निश विवेकिनो योगिन। अत एवोक्त पूज्यपाद-भगवच्छकराचार्यै सदासारस्तोत्रे—

देहो देवालयः प्रोक्तो देही देवो निरञ्जनः।
अर्चितं सर्वभावेन स्वानुभूत्या विराजते॥

यदि समुचितेन रूपेण परमार्थ-साधनं क्रियेत तर्ह्य् आत्मशरीर एव भगवतो निरञ्जनस्याऽवश्य दर्शन सभवेत्। यथा स्वच्छे मलरहिते दर्पणे शरीर स्पष्ट प्रतिबिम्बित भवति, तथैव शरीराऽऽरोग्येण प्रसन्ने मनसि सर्वा क्रिया सफला भवन्ति।

अतएव 'योग कर्मसु कौशलम्' इति यद् उक्त भगवता श्रीकृष्णेन तदपि समीचीन घटते। योगेन कर्म कर्तुं शक्तो भवति मानव। कर्म च जीवनस्यास्माक मूलम्। कर्म विना न क्षणम् अपि स्थातु शक्यते केनापि। यथोक्तम् गीतायाम्—

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् । ३।५।
शरीर-यात्राऽपि च ते न प्रसिद्धयेदकर्मण । ३।८।

इत्थ केनाऽप्य् अपाकर्तुं न शक्यते योगस्य महामहिमा ।

यथा परिपक्व पुष्टम् उत्कृष्ट च बीजम् उर्वरित-क्षेत्र-सूर्यप्रकाश-शुद्ध-जलवायु-निर्दोष-विमलाऽऽकाशादीनाम् उचित-व्यवस्थाया अभावे न प्ररोह-समर्थं भवति तथैव केवलेनाऽसनाभ्यासेन पर्याप्तो लाभो भवितुं नार्हति, किन्तु तदर्थ विशुद्धस्य वायो., सात्विकस्य भोजनस्य, रोगापनुद-जीवन-तत्त्वाना, योगाऽङ्गाना च सेवनम् अप्यत्यन्तम् आवश्यकम् । दुर्व्यसनाना त्यागोऽश्लील-साहित्यस्याध्ययनादेर् विरति, अनोतिमूलक-कुकर्म-परिवर्ज्जनम्, चल-चित्रादि-वीभत्स-दर्शन-वैरस्यम् अपि साधनस्य कृतेऽत्यावश्यकत्वेनापेक्षितम् अस्ति ।

योगाऽभ्यासस्यानुष्ठानेन शरीरे उत्तरोत्तरम् उत्कर्ष आविर्भवति, सर्वाङ्गेषु सामर्थ्यम् आरोग्यतायाः सञ्चारश्च जायते, बुद्धौ विचारवैशद्य मनसि शान्ति , चित्तस्य चाञ्चल्य-निवृत्तिश्च प्रादुर्भवति । जीवनेऽभिनवा शक्ति , नवीना स्फूर्तिः, अपूर्वस्य तेजस आविर्भावश्च योगसाधनस्य फलम् । योगाभ्यासेऽचिन्त्या शक्तिः, अगाध गाम्भीर्यम्, अद्भुत रहस्यं च प्रच्छन्नम् अस्ति ।

शास्त्रेषु सन्त्य् एतादृशानि बहूनि वर्णनानि येषु पुरुषैर् योग-द्वारा कृतानाम् अद्भुत-कार्याणां वर्णनं प्राप्यते ।

न केवलम् एतावद् एवाऽपितु साधको योग-साधना-द्वारा विषयेभ्य इन्द्रियाणि प्रत्याहृत्य मनसि तच्चात्मनि विधाय शरीराभ्यन्तरे एव ज्ञानगम्यम् आत्मान द्रष्टु शक्नोति, अगम्यं ब्रह्मणो लोक चाऽप्य् अधिगन्तुं पारयति । उक्तम् अपि मतङ्गेन ऋषिणा—

अग्निष्टोमादिकान् सर्वान् विहाय द्विजसत्तम ।
योगाभ्यासरतः शान्त परं ब्रह्माधिगच्छति ॥

अय ससार-विषविषूचिकावेगो महान् दुःसहोऽस्ति सोऽपि योगरूप-गरुडमन्त्रेणैव शाम्यति नान्यथा ।

एव योगबीजे पार्वती-महादेव-संवादे भगवती पार्वती भगवन्तं सदाशिवम् अप्राक्षीत्, भगवन् ! यदि केवलेन ज्ञानेन मोक्ष-प्राप्तिः सम्भवति

तर्हि योग एव मोक्षद इति ज्ञानिनां मतं कथकारं संगच्छते। तद् उत्तरे एवम् अवादीत् भगवान् शकरः—यद्यपि ज्ञानेन मोक्षो भवति नान्येन साधनेनेति ज्ञानिना कथन सत्यम् अस्ति, तथापि खड्गेनैव शत्रु-पराजयो भवतीत्य् अस्य सत्यत्वेऽपि कि युद्धेन वीर्येण विना शत्रुपराजयः सम्भवति। तथैव योग बिना केवलेन ज्ञानेन मोक्षप्राप्ति र्न सम्भवति। किञ्च ज्ञाननिष्ठो विरक्तो धर्मज्ञो जितेन्द्रियोऽपि देवो योगेन विना मोक्षं न लभते—

ज्ञाननिष्ठो विरक्तोऽपि धर्मज्ञोऽपि जितेन्द्रिय ।
विना योगेन देवोऽपि न मोक्ष लभते प्रिये ॥

( योगबीजम् १।२४ )

भारतवर्षे पूर्वत एव चिन्तनशोलव्यक्तिभिरात्मतत्त्वस्यानु-सन्धानं क्रियते। साधनसम्पन्ना योगिनो योगबलेनान्तःकरणाना बाह्येन्द्रियाणा च समुत्कर्षं संसाध्यात्मतत्त्व ज्ञातु प्रभवन्ति। लौकिक-प्रत्यक्षद्वारा सत्यस्यात्मतत्त्वस्य सपादनं साक्षात्कारो वा न सभवतीत्य्-अतः समाधेरभ्यासो विविधसाधनप्रणालोनाम् अनुशीलन चात्यन्तम् अस्त्य् आवश्यकम्। यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यान-समाधिभिर् अन्तःकरणस्य शुद्धौ सत्याम् एव चिद्दर्पणे आत्मनो विम्ब-प्रतिफलति। अतो योगसाधनद्वारा अन्तःकरणस्य शुद्धिः परमाऽऽवश्य-कीति योगविदा मतम्।

श्रवणमनननिदिध्यासनानि त्रीण्येव साधनानि साधारणतया भारतीयदर्शनेष्व् आत्मदर्शनस्य कारणानि सन्ति। तथा चोक्तम्—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतव. ॥

न्यायकुसुमाञ्जलौ उदयनाचार्येणाऽपि श्रवणानन्तरम् एव दार्शनिका-लोचनायाः स्थानं स्थिरीकृतम् अस्ति—

पदचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥

योगिभि र्योगबलेन मन स्थिरीकृत्य देहाभ्यन्तरे कुत्र किम् अस्तीति सम्यग ज्ञात्वा मानसिकीनाम् अवस्थाना विचार आरभ्यते। लौकिकै जनैश्च योगसाधनद्वारा शरीर स्वस्थ विधाय स्व० कर्तव्य० कर्म सम्पादयद्भि देशस्य राष्ट्रस्य च रक्षोचितसमाजस्य निर्माण सत्साहित्यस्य च सर्जन विधेयमित्यु उभयथैव योगस्योपयोगिता। सम्प्रति तु व्यवहार-दृष्ट्याऽतीवाऽवश्यकताऽस्ति तस्य करालेऽस्मिन् राष्ट्रसकटकाले। तेन स्वकीयं शरीरम् इन्द्रियाणि मनो बुद्धि वा सशोध्य वयं शत्रुभि प्रदत्त संकटम् अपाकर्तुं समर्था भवेम इति।

योगभूमिमारोढुमष्टौ सोपानानि सन्ति। येषां वर्णन परमकारुणि-केन महर्षिणा पतञ्जलिना स्वकीये योगसूत्रे विहितं विद्यते। तत्र वहिरिन्द्रियनिग्रहात्मको यम प्रथम, अन्तरिन्द्रियनिग्रहरूपो नियमो द्वितीय, स्थूलशरीराधिपत्यस्थापनमासनं तृतीयम्, प्राणक्रियाधिपत्य-प्रवर्तकश्चतुर्थ प्राणायाम, वहिस्तोऽन्त प्रवेशात्मिका हि क्रिया पञ्चमी प्रत्याहारशब्देनोच्यते, अन्त स्थैर्यविधायिका किया षष्ठी धारणा निगद्यते, आत्मानुमन्धानपग क्रिया सप्तम ध्यानमुच्यते, जीवात्मपरमात्मनोरैक्य-करणमष्ठमं ममाधिशब्दवाच्यं भवति। अयमेवाष्टमसोपानात्मक समाधिः-राजयोगस्य साध्यो विषय। आचारवान् योगी कमशः कस्मिन्नपि, एकस्मिन् योगमार्गे ससर्पन्नस्मिन्नेवाभ्यर्हितेऽष्टमे समाधिरूपे सोपाने समागत्य विश्राम्यति।

इमानि अष्टौ सापानानि योगस्याष्टौ अङ्गान्युच्यते। एषा योगाङ्गाना-मनुष्ठानात् शरीस्थाया अशुद्धेः क्षयानन्तर विवेकख्यातिपर्यन्तं ज्ञानस्य प्रकाशो जायते। तथाचोक्त योगसूत्रस्य द्वितीये साधनपादे—

योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्याते (२।२८)
यमनियमासनप्राणायामप्रत्याहारधारायाध्यानसमाधयोऽष्टावङ्गानि (२।२९)

एष अन्तिमाः त्रय ध्यरणा-ध्यान-समाधयः सयमपदेन प्रोच्यन्ते। इमे त्रय आद्याना पञ्चाना यमादीनामपेक्षया सवीजस्य समाधेः अन्त-रङ्गसाधनानि सन्ति, किन्तु निर्वीजस्य समाधेस्तु इमे त्रयोऽपि वहिरङ्गानि एव साधनानि सन्ति, यतो हि तस्यान्तरङ्गं साधनं परवैराग्यमेवास्ति। तत्संयमविनियोगाद् विविधा सिद्धयः प्रप्यन्ते, यासां वर्णन योगदर्शनस्य तृतीये पाद विस्तरतो विद्यते। यद्यपि एताः सिद्धयः अश्रद्धालूनां योगे

श्रद्धावृद्धये विक्षिप्तचित्तानां चित्तस्यैकाग्रतासम्पादनाय सहायिका भवन्ति तथापि आसु आसक्ति र्न विधेया। ता हि सर्वा सिद्धय व्युत्थान-दशाया सिद्धयः सत्योऽपि समाधौ विघ्नरूपा एव सन्ति तेसमाधावुसर्गा व्युत्थाने सिद्धय ( यो. सू. ३।३७ )।

योगमार्गमनुसरतो योगिनो विविधप्रकाराणि विघ्नानि उपतिष्ठन्ते। तत्तद्भूमिकाधिपतयो देवा महता समादरेण दिव्यविषयैश्वर्यादीना प्रलोभनानि प्रददते। तेषु मनस सङ्गात् सर्व परिश्रमो व्यर्थो भवति अहङ्काराच्च अनिष्टस्य प्रसङ्ग उपतिष्ठते—

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरण पुनरनिष्टप्रसङ्गात् ( यो. सू ३।५१ )

अतो योगाभ्यासिना योगिना सिद्धिभ्यः सावधानेन भवितव्यम्। तत एव तस्य लक्ष्यसिद्धि सम्भवति, नान्यथा।

पूर्वसस्कारवशाज्जीवो विषयभोगेच्छायामासक्तो भवति, तया च भोगेच्छया सासारिके गतागतचके परिभ्रमन् निरन्तर दु खभाग्भवति। एतस्माद् दु खजालान्नि. रणाय योगमार्गोऽस्ति साधीयान् पन्था। वुद्धि-योगस्यायमेवास्ति क्रमो यद् अज्ञानवशादुत्पन्नममत्ववशात् प्राणी दु खभाग् भवति। दु खज्ञानकारणतो वैराग्यमुपजायते। विपयवैराग्यतश्च सम्यग्ज्ञानस्य सदसज्ज्ञानरूपस्योदयो भवति। ज्ञानसूर्योदये च स्वत एवा-ज्ञानान्धकारो दूरीभवति। ततो ज्ञानात्मकस्य स्वरूपस्यानुभवसमकालमेव तथा च विषयवैराग्याद् दोपनिवृत्तौ सत्या कैवल्यमुपजायते मुक्तिपद-मुपतिष्ठते एव इदमेव राजयोगस्य साधनम्। 'तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ( यो. सू ३।४ )

साख्य-योगदर्शने सर्वप्राचीने वैदिकदर्शने स्त। योग. कर्मयोगनाम्ना तथा सांख्य ज्ञानयोगनाम्ना प्रसिद्धे स्त, ययो गीताया भूयो भूयो महत्त्व प्रदर्शितमस्ति। श्रीमद्भागवतस्य तृतीये स्कन्धे महामुनिना स्वमातर देवहूतिं प्रति तथैकादशे स्कन्धे भगवता श्रीकृष्णेन उद्धव प्रति साख्य-योगयोराध्यात्मिक उपदेशो महता कौशलेन प्रदत्तोऽस्ति।

साख्येन स्वकीयो निखिलोऽपि सिद्धान्तः वेदस्याधारेणैवाङ्गीकृतोऽस्ति तथा तेषा श्रुतिभिरविरोध साधितो विद्यते। योगश्च साख्यस्यैव क्रियात्मक रूपमस्ति। योगो हि सर्वसम्प्रदाय-मतमतान्तर-वादविवादविहीनः

सावभौमा धर्मोऽस्ति, य तत्त्वज्ञान स्वानुभवद्वारैवोपदिशति, साधक च चरमलक्ष्य यावदुपस्थायति। अत एव श्रुतयो योगस्य माहिमान गायन्ति। जीवो हि स्वभावत. चित्तवृत्तिद्वारा स्थूलतामनुसरति, पर योग· ता स्थूतताताः सूक्ष्मता नयति। चित्तवृत्तया यावद् बहिर्मुखा भवन्ति तावदेव तत्र तमोरजसो मात्रा वर्द्धते, तद्विपरीता वृत्तयो यावदन्तर्मुखीना भवन्ति तावदेव तमोरजसो· तिरोभावपूर्वकं सत्त्वप्रकाशो वर्द्धते। एव यदा काचिदपिवृत्ति र्नावतिष्ठते तदा शुद्धं परमात्मतत्त्वमेवावशिष्यते। तत्साक्षात्कृत्य योगी कृतकृत्यो भवति।

दार्शनिकमनीषिणा मनर्मास्त यद् वेदानुसार योगोऽस्ति द्विविध स्थूल सूक्ष्मश्च। तत्र स्थूलो योग. अणिमाद्यष्टसिद्धिससाधक·, तथा सूक्ष्मो योगः यमनियमासनप्राणायामप्रत्याक्षरधारणाध्यानसमाधिभिरष्टैरङ्गैयुक्तोऽस्ति। योगस्य साधन हि द्विविधमुपदिष्टमास्ते सगुण निर्गुणं च। तत्र कस्मिश्चिद्देशविशेषे चित्तस्य स्थापन नाम धारणा। मनसो धारणया सह क्रियमाण। प्राणयाम सगुण· प्रोच्यते तथा देशविषेस्याश्रयणमन्तरा मनसो निर्वीजसमाधौ एकाग्रतासम्पादन निर्गुण. प्राणायाम. प्रोच्यते। सगुण प्राणायामो हि मनसो निर्गुणत्वसम्पादने = वृत्तिशून्य विधाय स्थिरीकरणे सहायको भवति। तदुक्त महाभारते शान्तिपर्वण· मोक्षधर्मपर्वणि याज्ञवल्क्यजनकसवादप्रसङ्गे—

वेदेषु चाष्टगुणित योगमाहुर्मनीषिणः।
सूक्ष्ममष्टगुण प्राहु र्नेतर नृपसत्तम।
द्विगुण योगकृत्यं तु योगिना प्राहुरुत्तमम्।
सगुण निर्गुण चैव यथाशास्त्रनिदर्शनम्।
धारणा चैव मनस. प्राणायामश्च पार्थिव!
एकाग्रता च मनस प्राणायामस्तथैव च॥
प्राणायामो हि सगुणो निर्गुण धारयेन् मन। ३१६।७–९३

यथा मेघनिर्गतानां जलविन्दूनामाधातेन पाषणशिला न चञ्चला भवति तथैव विविधा विक्षेपा अपि योगिन विचलितं कर्तुं न प्रभवन्ति स निर्वीजसमाधौ स्थितः अन्धकारमध्यवर्तिन देदीप्यमानमनलमिव हृदये स्थितमविनाशिनं परब्रह्मपरमात्मानं सक्षात्करोति एष एव योगिनां योगः,

एतदतिरिक्तं किमन्यद् योगलक्षण भवितुमर्हति ? एव ज्ञात्वा मनीषिणो योगिन: आत्मन· कृतकृत्या मन्यन्ते—

पाषाण इव मेघोत्थै र्यथा विन्दुभिराहतः ।
नालं चालयितु शक्यस्तथा युक्तस्य लक्षणम् ॥ ३१५।२०
स्वयुक्त· पश्यते ब्रह्म यत्तत् परमव्ययम् ।
महतस्तमसो मध्ये स्थित ज्वलनसन्निभम् ॥ ३१६।२५
एतद्धि योग योगाना किमन्यद् योगलक्षणम् ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिण ॥ ३१६।२७

विविधदु खव्रातैः परिपीड्यमानस्य पुस ऐकान्तिकात्यन्तिकदु:ख-विच्छित्तये क्रियोपयोगेन परमात्मन समाराधनमेवास्ति परम साधनम्। तदुक्त ब्राह्मे पुराणे—

तमाराध्य जगन्नाथ क्रियायोगेन वाडवा ।
नून मोक्ष पर जग्मुस्तस्मात्तन्मोक्षकारणम् ॥ ( २७।१५ )

अर्थाद् विपश्चित ससारार्णवनिमग्नाना विपयोपहृतचेतसा सचेतसा कृते समाराधनरूपया परया भक्त्या हरितोपणमेवासशय मोक्षकारण-मामनन्ति । योगसाधनान्तर्गतस्य योगशब्दस्य ब्रह्मणि सयोगोऽर्थः । तथा चोक्तमग्निपुराणे—

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगति. ।
तस्या ब्रह्मणि सयोगो योग इत्यभिधीयते ॥ ( ३७९।२५ )

अनेन योगसाधनेन मनसोऽनेकात्मभावस्य निरसनपूर्वक ब्रह्मभूयस्त्व-मापद्यते । यद्यपि मोक्षप्राप्तौ ब्रह्मज्ञानमेव मुख्यं करणमस्ति, तथापि सतत चित्तैकाग्रता विना न तत्सम्भवति । यथा वायुना कम्पमाने जले चन्द्रादिप्रतिविम्वं स्पष्टं न प्रतीयते, तथैवानेकविधसङ्कल्पविकल्पजालैः सक्षोभ्यमाणे मनस्यात्मस्वरूपस्यावबोधो न सम्यक् सम्भवति । अत एवोक्तं योगकल्पद्रुमे—

ज्ञान वदन्तीह विमोक्षकारण तज्जायते नैव विलोलचेतसि ।
लौल्य हि योगेन विना प्रशाम्यति तस्मात्तदर्थं हि यतेत साधकः ॥ ( ७ )

योगतत्त्वोपनिषद्यपि ज्ञानरहितस्य मोक्षासम्भवात्तदर्थ योगाभ्यासस्यो·पदेशो दत्तो विद्यते—

योगो हि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ।
तस्माद् ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ॥ (१५)

कूर्मपुराणे प्रोक्तं यद् योगाग्निः प्रथमं पापानि विनाशयति, पश्चाच्छुद्धेऽन्तःकरणे ज्ञानमुत्पद्यते, तदनन्तरं च कैवल्यमुपलभ्यते—

योगाग्निर्दहति क्षिप्रमशेषं पापपञ्जरम् ।
प्रसन्नं जायते ज्ञानं ज्ञानान्निर्वाणमृच्छति ॥

गरुडपुराणेऽपि भवतापतप्तानां कृते योगः परममौषधं प्रोक्तमस्ति—

भवतापेन तप्तानां योगो हि परमौषधम् ।

योगवासिष्ठे तु संसारविषविसूचिकावेगो महान् दुःसहोऽस्ति, स हि योगरूपगारुडमन्त्रेणैव शाम्यति, नान्यथेति प्रोक्तमस्ति—

दुःसहा राम ! संसारविषवेगविषूचिका ।
योगगारुडमन्त्रेण पावनेनोपशाम्यति ॥

विवेकचूडामणौ भगवान् शङ्कराचार्योऽपि प्रोक्तवान् यद् ये पुरुषा घटपटादि बाह्यं प्रपञ्चं श्रोत्रादीन्द्रियं चित्तं च चिदात्मनि साक्षिणि प्रविलाप्य समाधिस्था भवन्ति, त एव जन्ममरणात्मकैर्बन्धनैर्विमुच्यन्ते—

समाहिता ये प्रविलाप्य बाह्यं श्रोत्रादिचेतःस्वमहं चिदात्मनि ।
त एव मुक्ता भवपाशबन्धैर्नान्ये तु पारोक्ष्यकथाभिधायिनः ॥

## योगभेदविमर्शः

विभिन्नानां योगिनां रुच्यनुसारं योगस्य प्रणाली अपि विभिन्नभागेषु विभक्ताऽस्ति । अविद्याग्रस्तो जीवः परब्रह्मतो भिन्नमिवात्मानं मन्यमानो विविधां दुःखसन्ततिमनुभवति । एतद्विभिन्नतामपहाय जीवो यतो ब्रह्मणो निर्गतस्तत्रैव तस्य पुनरानयनं सुतरां स्वाभाविकम् । एवं किल जीवं ब्रह्मपदं प्रापयितुं पुराणेषु यावन्ति साधनानि निर्दिष्टानि, तेषु त्रिविधो योगो मुख्यतमः । अत एव भगवता श्रीकृष्णेनोद्धवं प्रति श्रीमद्भागवते मानवानां कल्याणाय त्रिविधो योगः प्रोक्तः—ज्ञानयोगः, कर्मयोगः, भक्तियोगश्च । तत्र विषयेष्वनासक्तस्य निवृत्तेन्द्रियव्यापारस्य सन्यासिनः

कृते ज्ञानयोगस्योपदेश, यज्ञादिकर्मकलापेष्वनिवृत्तचित्तस्य विषयाभिलाषिणश्च पुंस कर्मप्रवृत्तये कर्मयोगस्योपदेश, भगवता गुणकथाश्रवणादिषु जातश्रद्धस्य नातिनिर्विण्णस्य, नातिसक्तस्य पुरुषस्यापादेयत्वेन भक्तियोगो निर्दिश्यते—

योगास्त्रयो मया प्रोक्ता नृणा श्रेयो विधित्सया ।
ज्ञान कर्म च भक्तिश्च नान्योपायोऽस्ति कुत्रचित् ।।
निर्विण्णाना ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेष्वनिर्विण्णचित्ताना कर्मयोगस्तु कामिनाम् ।।
यदृच्छया मत्कथादौ जातश्रद्धस्तु य पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद ।।

( श्री० ११।२०।६-८ )

अत एव भगवत्सम्बन्धिनीषु कथासु सश्रद्ध प्रवर्तमानस्य निष्कामकर्मिण स्वधर्मपालनपरायणस्य भगवति जायतेऽहैतुका भक्ति । योगेन निर्धूतमनोमलो विशुद्धान्त करणश्च साधको विशुद्धस्य ज्ञानस्यावाप्तौ परमात्मनश्च प्राप्तावाधकारिता प्राप्नोति । अत एवोक्त श्रीमद्भागवते—

अस्मिंल्लोके वर्तमान स्वधर्मस्थोऽनघ शुचि ।
ज्ञान विशुद्धमाप्नोति मद्भक्ति वा यदृच्छया ।।
स्वर्गिणोऽप्येतमिच्छन्ति लोक निरयिणस्तथा ।
साधक ज्ञानभक्तिभ्यामुभय तदसाधकम् ।।

( श्री० भा० ११।२०।११.१२ )

गीताकारेणापि साधारणतया योगो ज्ञानयोग-कर्मयोग-भक्तियोग-भेदात् त्रिषु भागेषु विभक्तोऽस्ति । योगशिखोपनिषदादिषु प्राचीनग्रन्थेषु लिखितमस्ति यत् स्वाभाविको योग एक एवास्ति, नानेक । साधकेषु महायोगनाम्ना प्रथित स एव मन्त्रयोग-हठयोग-लययोग-राजयोगभेदाच्चतुर्धा विभक्तोऽस्ति—

मन्त्रो हठो लयो राजयोगोऽन्तर्भूमिकाक्रमात् ।
एक एव चतुर्धाऽय महायोगोऽभिधीयते ।। ( १।१२९ )

( १ ) शास्त्रोक्ताना नाममन्त्राणा जपेन भगवद्रूपाणा च ध्यानेन चित्तवृत्ति निरुध्य मुक्तिपथाग्रेसरणप्रकारो मन्त्रयोग । तथा च भगवतो

दिव्याना नाम्ना रूपाणा चावलम्वनेन चित्तबृत्तेर्निरोधाय यावत्य. क्रिया उपदिष्टा सन्ति, ता सर्वा एव मन्त्रयोगेऽन्तर्भवन्ति ।

( २ ) शारीरिकक्रियाकलापैश्चित्तबृत्तिनिरोधतो मुक्तिमार्गाश्रयणं हठयोग । एव च स्थूलशरीरसम्बन्धिनीना मुद्राषट्कर्मादिक्रियाणामभ्यासद्वारा स्थूलशरीर आधिपत्यस्थापनपूर्वक सूक्ष्मशरीरे प्रभावसम्पादनाय या क्रियासरणयो निर्धारिता सन्ति, ता हठयोगेऽन्तर्भवन्ति ।

( ३ ) षटचक्रभेदनपूर्वक वहिर्मुखीनां शक्तीना ब्रह्माण्डे पिण्डे वा विलयन लययोग । अर्थाद् मूलाधारे सार्द्धत्रिवलयाकारा सर्पवत्कुण्डलाकृति निद्रिता कुण्डलिनी गुरूपदिष्टक्रियाभि प्रबुद्धा कृत्वा षट्चक्रभेदनपूर्वक सहस्रारे विहारिणि परमात्मनि लयस्य यानि साधनानि निर्दिष्टानि, तानि लययोगेऽन्तर्भवन्ति ।

(४) केवलबुद्धिसाहाय्येन ब्रह्मविद्याविचारद्वारा चित्तवृत्तेरुपरम विधाय मुक्तिपदप्राप्ति किल राजयोग । एव बुद्धिद्वारा चित्तवृत्तिनिरोधस्य यावत्य क्रियाशैल्य सन्ति, ता सर्वा राजयोगेऽन्तर्भवन्ति ।

## योगपद्धतयः

मन्त्रयोगिनो मन्त्रमाश्रित्य जीवात्मपरमात्मनो सम्मिलनमाकाङ्क्षन्ते शब्दात्मकस्य मन्त्रस्य चेतनत्वे तत्साहाय्येन जीव क्रमश ऊर्ध्वं गच्छन् शब्दातीते परमात्मधाम्नि स्थानमवाप्नोति । वैखरीशब्दत क्रमशो मध्यमामवस्था भिन्दन् पश्यन्तीशब्दे प्रवेश एव मन्त्रयोगस्य मुख्यमुद्देश्यम् । पश्यन्तीशब्दोऽय स्वप्रकाशमानश्चिदानन्द । चिदात्मकस्य पुरुषस्य सैवाक्षया षोडशी कला । एतदेवात्मज्ञानस्येष्टदेवतासाक्षात्कारस्य शब्दचैतन्यस्य वा प्रकृष्टं फलम् । अवस्थामिमामधिगतो जीवः कृतकृत्यो भवति । मूलाधारतो निरन्तर शब्दस्रोत ऊर्ध्वं गच्छति । बहिर्मुखो जीव इन्द्रियवशवर्ती भूत्वा विषयेष्वासज्जते । यदा योगक्रियाकौशलेनेन्द्रियाणा बहिर्गतिर्निरुध्यते प्राणमनसी च स्तम्भिते भवत, तदा साधकश्चेतनशब्दममु श्रोतु सामर्थ्यं लभते । इडापिङ्गलयोर्गती अवरुध्य प्राणमनसो प्रवेशे सम्पद्यमाने सारस्वतं स्रोतोऽनुभूयते । इदमेव साधकमाज्ञाचक्र नयति, ततश्च बिन्दुस्थान विभेद्य सहस्रारकेन्द्रे महाविन्दु यावत् प्रापयति । सततं जीवोऽयं हसेति मन्त्रं जपति, गुरुकृपया प्राणे विपरीतभावमापन्ने स सोऽहं मन्त्ररूपेण परिणमते ।

प्रत्यहं प्रत्येक प्राणी "हकार च सकार च जीवो जपति सर्वदा" इत्यनुसार हंसमन्त्रस्योच्चारणं करोति। हकारेण श्वासो बहिर्निःसरति, सकारेण पुनः शरीराभ्यन्तरे प्रविशति। एव जीवः सर्वदा हंस-हंस इति जपति। गुरुकृपया तद्विधान विज्ञाय सुषुम्णाया तत्परिवर्तनेन स सोऽहमिति रूपमाधत्ते।

हठयोगिनः षट्कर्म-आसन-बन्ध-मुद्रा-प्राणायामादिषु शारीरिक-क्रियासु विशेष बल दत्त्वा देह बलिष्ठ स्वस्थ कर्मशील च विधातु विशेषतः प्रयत्न कुर्वन्ति, नाडीशुद्धिपुरस्सर मूलाधारात् कुण्डलिनी समुद्बोध्य शेषपञ्चचक्रभेदनपूर्वक सहस्रारचक्रे तस्या उपस्थानाय च यतन्ते। षट्कर्मासनमुद्राप्रत्याहारप्राणायामध्यानसमाधयो हठयोगस्य सप्ताङ्गानि सन्ति। तत्र धौति-वस्ति-नेति-त्राटक-नौलि-कपालभातिनामकैः षट्कर्म-भिर्देहशुद्धिः, आसनेन दृढता, मुद्रया स्थिरता, प्रत्याहारेण धीरता, प्राणा-यामैर्लघुता, ध्यानेनात्मनः प्रत्यक्षम्, समाधिना च निर्लेपता, ततो मुक्तिः सम्पद्यते।

लययोगिनः समस्तेभ्य कामना-वासना-आसक्ति-सङ्कल्प-विकल्प-जालेभ्यो मुक्ता भूत्वा चित्त वृत्तिशून्य विधाय शान्तामवस्था प्राप्तु प्रयतन्ते। तेषामय विश्वासोऽस्ति यन्नित्यशुद्धबुद्धमुक्तस्वरूप स्वयप्रकाश-मानमात्मतत्त्व विशुद्धे चित्त एव स्फुरति, नान्यथा। मूलकन्दाद् ब्रह्मरन्ध्र-पर्यन्त विस्तृताया सुषुम्णानाड्या या षड् ग्रन्थयः सन्ति, ताः षट् चक्राण्युच्यन्ते। योगक्रियाभिर्मूलाधारे स्थितामनुद्बुद्धा कुण्डलिनी समुद्बोध्य षट्चक्रद्वारा सुषुम्णापथे प्रवाहिता कृत्वा ब्रह्मरन्ध्रोपरि सहस्र-दलकमले स्थिते परमशिवे लय एव लययोगस्योद्देश्यम्, एतदेव षट्चक्र-भेदनमुच्यते। लययोगस्यालौकिकरहस्यविज्ञानाय मन्त्रद्रष्टारः ऋषयोऽ-प्युत्सुका आसन्, यस्य सङ्केत ऋग्वेदमन्त्रे १।३४।२, समुपलभ्यते।

राजयोगी योगाभ्यासाय आसने विशेषवल ददाति। हठयोगस्य सम्बन्धः स्थूलशरीरेण प्राणवायोर्निग्रहेण चास्ति। राजयोगस्य च मनसा सम्बन्धोऽस्ति। यत्र हठयोगस्याभ्यास समाप्ति गच्छति, तत एव राज-योगस्यारम्भो भवति। हठयोगी यदा प्राणवायु संयोज्य विभिन्नचक्रेषु नयति तदा सिद्धिर्भवति। राजयोगिनः तु सयमेनैव सिद्धय उपतिष्ठन्ते। मनोदेहात्मतत्त्वानि सम्यग् ज्ञात्वा स्वरूपप्रतिष्ठो राजयोगी अन्तरिन्द्रिये

वहिरिन्द्रिये शरीरे चाधिकार प्राप्य भगवदिच्छापूर्तौ सर्वाणि यन्त्राणि नियोज्य मुक्तराग इव विराजते। राजयोगस्य साधनाया उद्देश्यमात्मनो रहस्योद्घाटनम्, तथान्त प्रच्छन्नाया शक्तेरुद्बोधश्च। राजयोग-सिद्धान्तानुसार येन मनो जित तेन सर्व कर्तु शक्यते।

उपासनामूर्लभक्तिरूपम्य योगस्य चतसृणामप्येतासा पद्धतीना पृथक् पृथगङ्गानि ध्यानान्यधिकाराश्च पुराणेतिहासतन्त्रादिग्रन्थेषु सम्यङ्-निर्णीता सन्ति। नामरूपावलम्बनेन निर्णीता साधनपद्धतिर्मन्त्रयोगनाम्ना समाम्नाता, तस्या अङ्गानि षोडशधा विभक्तानि, तदीय ध्यान स्थूल-मित्युच्यते। स्थूलशरीरसाहाय्येन चित्तवृत्तिनिरोधप्रकारो हठयोग, स च सप्तधाऽस्ति विभक्त.। तदीय ध्यान ज्योतिर्ध्यानमभिधीयये। सम्पूर्ण शरीरे व्याप्नुवन्त्या कुलकुण्डलिन्या गुरूपदेशद्वारोब्दोधन विधाय षट्चक्र-भेदनपुरस्सर सहस्रारे विलयेन चित्तवृत्तिनिरोधप्रकारो लय इति कथ्यते, स च नवधा विभक्त, एतदीय ध्यान बिन्दुध्याननाम्ना प्रसिद्धमस्ति। राजयोगस्तु सर्वाभ्यर्हितः। अत्र केवलया विचारशक्त्यैव चित्तवृत्ति-निरोध क्रियते, अय षोडशभिरङ्गैरस्ति विभक्त, अस्य च ध्यानं ब्रह्मध्यान निगद्यते। चतुर्विधानामप्यासा पद्धतीनामङ्गापाङ्गानि वेदो-पनिषत्पुराणतन्त्राद्यार्षग्रन्थेषु सुचारुरूपत सविस्तर समुपवर्णितानि सन्ति। तद्विवेचन तत एव विस्तृतो द्रष्टव्यम्।

## षट्चक्रनिरूपणम्

शरीरेऽस्मिन्ननेकेषा तत्त्वाना सद्भावेऽपि योगसाधनेऽत्यावश्यक-ज्ञातव्यावयवादीना स्वरूपाणि तत्र कर्तव्यध्यानादिक विज्ञाय कैवल्योप-लब्धये चक्रज्ञान परमोपयोगीति तद्विचार आरभ्यते। योगिनो मानव-शरीर सप्तप्रासाद भवन मन्यन्ते। तत्र मूलाधार-स्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्ध-आज्ञा-सहस्रारचक्राणीति सप्त प्रासादा सन्ति।

यदि विश्वस्मिन् सर्वेभ्यो वस्तुभ्योऽद्भुत किमपि वस्तु विद्यते, तदिद मानवशरीरमेवास्ति। एतद्वारैव भौतिकाध्यात्मिकजगतोऽनेके चमत्कारा उपलभ्यन्ते। अतो मानवशरीरमाश्चर्याणामाश्चर्यमुच्यते। अनेनैव निर्वाणसुखम्, निर्विकल्पकसमाधि, भगवत्प्राप्तिश्चावाप्यते। शरीर व्यवहारस्य परमार्थस्य च मुख्यमस्ति साधनम्। एतद्द्वारैवाभीष्टस्य

वस्तुन उपलब्धिसम्भव । जनकल्याणभावनया प्रयतमाना अपि मानवा अस्वस्थे शरीरे नात्मनो नापि समाजस्य देशस्य राष्ट्रस्य वा वास्तविकं कल्याण कर्तुं प्रभवन्ति । अतो योगसाधनद्वारा शरीरारोग्यसम्पादनमत्यावश्यकमस्ति, समेषामात्मपरकल्याणकमिना पुरुषाणामपि ।

यथा भूमण्डलस्याधारो मेरुरस्ति, तथैव मानवशरीरस्याधारोऽस्ति मेरुदण्ड: । मेरुदण्डो हि पृष्ठमाससलग्नस्त्रयस्त्रिशदस्थिखण्डै सम्बद्ध· आभ्यन्तरेऽवकाशवान् वर्तते । अस्याधस्तनो भागोऽतितीक्ष्ण, सूक्ष्मश्चास्ति । तत्समीपवर्ती भाग कन्द इति नाम्ना व्यवह्रियते । अत्रैव जगदाधारमहाशक्ते प्रतिमूर्ति कुण्डलिनी विराजते । मेरुदण्डाद्बहिर्वामभागे इडानाम्नी चन्द्रनाडी, दक्षिणभागे च पिङ्गलाख्या सूर्यनाडी सम्बद्धाऽस्ति । तयोर्मध्ये तेजोरूपा सुषुम्णानाडी तु मेरुदण्डस्याभ्यन्तरे मूलाधारकन्दभागादारभ्य कपालस्थितब्रह्मरन्ध्रसहस्रारपर्यन्त गच्छति । यथा कदलीस्तम्भे दलानि भवन्ति, तथैव सुषुम्णाया अभ्यन्तरे क्रमशो वज्रा-चित्रणी ब्रह्मनाड्य सन्ति । योगक्रियाद्वारा जागृता कुण्डलिनी ब्रह्मनाडीद्वारा कपालस्थितब्रह्मरन्ध्रपर्यन्त गत्वा शिवेन सह सयुज्यते । मेरुदण्डस्याभ्यन्तरे ब्रह्मनाड्या ग्रथितानि षट् कमलानि सन्ति, यानि षट्चक्राण्युच्यन्ते । प्रत्येक कमल विभिन्नवर्ण विभिन्नसख्याकदल च विद्यते । इमानि षट्चक्राणि येषामवयवाना सम्मुखे मेरुदण्डस्याभ्यन्तरे विद्यन्ते, तेषा नामानि प्रसिद्धानि सन्ति । तथाहि गरुडपुराणे—

मूलाधार स्वाधिष्ठान मणिपूरकमेव च ।
अनाहत विशुद्धाख्यमाज्ञा षट्चक्रमुच्यते ।। १५।८३

( १ ) तत्र मूलाधारचक्र यथा—

अथाधारपद्म सुषुम्णाख्यलग्न ध्वजाधो गुदोर्ध्व चतु शोणपत्रम् ।
अधोवक्त्रमुद्यत्सुवर्णाभवर्णै र्वकारादिसान्तै र्युत वेदवर्णैः ।।

मूलस्य शरीरकारणस्य विन्दोराश्रयत्वेनेद चक्र मूलाधार इत्युच्यते । मेरुदण्डस्याधस्तात् कन्दप्रदेशसम्बद्धपायूपस्थयोर्मध्ये विद्यमानमेतच्चक्रकमल द्रुतसुवर्णवर्णं वर्तते । तत्र चत्वारि दलानि सन्ति, तेषु चतुर्षु दलेषु क्रमश सानुस्वारा व-श-ष-सेति चत्वारो वर्णा विद्यन्ते । इद चक्र चतुष्कोणमस्ति, अस्य बीज कामबीज 'लँ' इति विद्यते । एतन्मध्ये स्वयम्भूलिङ्गमस्ति । यस्य चतुर्षु दिक्षु सार्द्धत्रयावर्तसर्पाकारा स्वमुखे पुच्छ

दधाना सुप्ता कुण्डलिनीशक्तिर्विराजते। प्राणायामै प्रबुद्धा इय कुण्डलिनीशक्तिर्विद्युल्लतावद् मेरुदण्डस्याभ्यन्तरे ब्रह्मनाड्या प्रविष्टा सती ऊर्ध्वं सहस्रारे गच्छति। तथा चोक्तं हठयोगप्रदीपिकायाम्—

विद्युद्विलासवपुष श्रियमावहन्ती
यान्ती स्ववासभवनाच्छिवराजधानीम्।
सौषुम्णमार्गकमलानि विकासयन्ती
देवी भजे हृदि परामृतसिक्तगात्राम्॥

इद चक्रं कामफलप्रद कामरूपाख्य पीठमप्युच्यते। अत्रोपासकाना सकलकामनासिद्धिर्भवति। एतत्समोपे किञ्चिदूर्ध्व मूलकन्द पक्ष्यण्डस्वरूपोऽस्ति, यत सर्वा नाड्यो नि·सरन्ति। तदुक्त ध्यानबिन्दूपनिषदि—

ऊर्ध्व मेढ्रादधो नाभे कन्दो योऽस्ति खगाण्डवत्।
ततो नाड्य समुत्पन्ना सहस्राणि द्विसप्तति·॥

( २ ) स्वाधिष्ठानचक्रं यथा—

सिन्दूर-पूर-रुचिरारुणपद्ममन्यत्
सौषुम्णमध्यघटित ध्वजमूलदेशे।
अङ्गच्छदै परिवृतं तडिदाभवर्णै
र्वाद्यै सबिन्दुलसितैश्च पुरन्दरान्तै॥

उपस्थसमीपे सुषुम्णानाड्या हीरकप्रभ सिन्दूरवर्णमिद चक्र विद्यते। अत्र षड्दलानि सन्ति, तेषु क्रमश सानुस्वाराणा ब-भ-म-य-र-लेति षण्णा वर्णाना स्थितिर्वर्तते। अस्य बीज वरुणबीज 'वँ' इति वर्तते। कमलकर्णिकाया राकिणोशक्तिरस्ति। अत्रोपासनेनाकर्षणशक्तिः सिध्यति।

( ३ ) मणिपूरकचक्र यथा—

तस्योर्ध्वे नाभिमूले दशदललसिते पूर्णमेघप्रकाशे
नीलाम्भोजप्रकाशैरुपहितजठरे डादिफान्तै सचन्द्रै·।
ध्यायेद् वैश्वानरस्याऽरुणमिहिरसम मण्डल तत् त्रिकोण
तद्बाह्ये स्वस्तिकाख्यैस्त्रिभिरभिलसितं तत्र वह्ने स्वबीजम्॥

मेघसदृश महाप्रभ विद्युदाभ च चक्रमिद नाभिप्रदेशे मेरुदण्डस्याभ्यन्तरे सुषुम्णाया स्थितमस्ति। एतत् कमल नीलवर्णं विद्यते। अत्र

दशदलानि सन्ति, तेषु क्रमश सानुस्वारा ड-ढ-ण-त-थ-द-ध-न-प-फेति दश वर्णा सन्ति। अस्य बीज वह्निबीजं 'रँ' इति विद्यते। कर्णिकाया लाकिनीशक्तिर्वर्तते। एतस्य क्वचन नाभिचक्रमित्यपि नाम श्रूयते।

(४) अनाहतचक्र यथा—

तस्योर्ध्वे हृदि पङ्कजं सुललित बन्धूककान्त्युज्ज्वल
काद्यैर्द्वादशवर्णकैरुपहित सिन्दूररागान्वितैः।
नाम्नाऽनाहतसञ्ज्ञक सुरतरु वाञ्छातिरिक्तप्रद
वायोर्मण्डलमत्र धूमसदृश षट्कोणशोभान्वितम्॥

उद्यदादित्यसन्निभस्यस्यास्य चक्रस्य स्थितिर्हृदयसन्निहितायां सुषुम्णायामस्ति। चक्रमिदमरुणवर्णैर्द्वादशभिर्दलैर्युत वर्तते। द्वादशनु दलेषु क्रमश क-ख-ग-घ-ङ-च-छ-ज-झ-ञ-ट-ठेति द्वादश वर्णा सानुस्वाराः स्थिता सन्ति। अस्य बीज वायुबीज 'यँ' इति वर्तते। कर्णिकाया काकिनीशक्तिः। एतच्चक्र पूर्णगिर्याख्यं पीठमप्युच्यते। अत्रोपासनेन सर्वाणीन्द्रियाणि वश्यानि भवन्ति।

(५) विशुद्धचक्रं यथा—

विशुद्धाख्य कण्ठे सरसिजममल धूमधूम्रावभास
स्वरैः सर्वैः शोणैर्दलपरिलसितैर्दीपित दीप्तबुद्धे।
समास्ते पूर्णेन्दुप्रथिततमनभोमण्डल वृत्तरूप
हिमच्छायानागोपरिलसिततनोः शुक्लवर्णाम्बरस्य॥

अस्य चक्रस्य स्थितिः कण्ठप्रदेशे मूले विद्यते। एतत्कमल धूम्रवर्णं षोडशदलैर्युतमस्ति। तत्र षोडशसु दलेषु अ-आ-इ-ई-उ-ऊ-ऋ-ॠ-लृ-ॡ-ए-ऐ-ओ-औ-अं-अः इत्येते षोडश स्वरा विराजन्ते। अस्य बीज नभोबीज 'हँ' इत्यस्ति। कर्णिकाया शाकिनीशक्तिरस्ति। अत्रोपासनेन सङ्कल्पसिद्धिर्भवति। अस्य ज्ञानाधारपीठमित्यपि नामान्तर विद्यते। एतल्लक्षण च—

विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात्।
विशुद्ध पद्ममाख्यातमाकाशाख्य महत्परम्॥

(६) आज्ञाचक्र यथा—

आज्ञानामाम्बुज तद्धिमकरसदृश ध्यानधामप्रकाश
हक्षाभ्यां वै कलाभ्यां परिलसितवपुर्नेत्रपत्रं सुशुभ्रम्।

तन्मध्ये हाकिनी सा शशिसमधवला वक्त्रषट्क दधाना
विद्या मुद्रा कपाल डमरुजपवटी विभ्रती शुद्धचित्ता ॥

चक्रमिद भ्रुवोर्मध्ये मेरुदण्डस्याभ्यन्तरे ब्रह्मनाड्या स्थितमस्ति। कमलमेतत् श्वेतवर्ण द्विदलञ्च विद्यते। तत्र तयोदलयो स्वानुस्वारौ हक्षौ इत्येतौ द्वौ वर्णौ विद्येते कर्णिकाया हाकिनी शक्ति । अस्य बीज प्रणवोऽस्ति, एतदुड्यानाख्य पीठमपि प्रोच्यते, अत्रोपासनेन वाक्सिद्धिर्भवति। विश्वमारतन्त्रे चक्राधिष्ठात्र्य षड् देव्य एवमुक्ता. सन्ति—

डाकिनी राकिणी चैव लाकिनी काकिनी तथा।
शाकिनी हाकिनी चैव क्रमात् षट् पङ्कजाधिपा ॥

एव तत्तद्ग्रन्थेषु षट्चक्राणि तेषा दलानि तद्गतरागा देवता तद्वाहनानि बीजानि च निर्दिष्टानि सन्ति। सद्गुरो साहाय्येनैव साधने साफल्य निश्चितम् नान्यथा।

## अजपाजपविधि:

सुषुम्ना हि गदनिकटे मेरूदण्डाभ्यन्तरे मस्तिष्कपर्यन्तमूर्ध्व गच्छति। इयं सर्वप्रधाना सत्त्वमयी प्रकाशशीलाऽद्भुतशक्तिशालिनी अस्ति। इयमेव सूक्ष्म शरीर-प्राणशक्तीना स्थानम्। अत्र वहूना सूक्ष्मशक्तीना विद्यते यत्रान्या सूक्ष्मा नाड्यो मिलन्ति। आसा शक्तिाना केन्द्र पद्म, कमल चक्रं च प्रोच्यते। सप्त मुख्यानि चक्राणि तेष्वपि महत्त्व पूर्णानि सन्ति—मणिपूरकमनाहताज्ञासहस्रचक्राणि।

मानवशरीराद् दिवारात्र षट्शतोत्तरैकविशतिसहस्राणि श्वासोच्छ्वासा निःसरन्ति। अतोऽय जीव सतत प्रतिश्वासोच्छ्वास हसमिति मन्त्र जपति। अत इयमेवाजपानाम्नी गायत्री प्रोच्यते। यतोऽन्य मन्त्रा वाणीव्यापारेण जप्यन्ते, किन्त्वस्या स्वत एव जपो जायते। अजपा गायत्री योगिना मोक्षदायिन्यस्ति, अस्या सङ्कल्पमात्रेणैव साधक सर्वपापविनिर्मुक्तो भवति; तर्हि किमु वक्तव्य विधिपूर्वकेनानुष्ठानेन—

हकारेण बहिर्याति सकारेण विशेत् पुन ।
हस-हसेत्यमु मन्त्र जीवो जपति सर्वदा ॥
षट् शतानि दिवारात्रौ सहस्राण्येकविशति ।
एतत्सख्यान्वित मन्त्र जीवो जपति सर्वदा ॥

अजपानाम गायत्री योगिना मोक्षदा सदा ।
अस्या सङ्कल्पमात्रेण सर्वपापै प्रमुच्यते ॥
( यो० चू० उ० ३१।३३ )

अस्या सङ्कल्पविधिस्तु—

प्रात काले उत्थाय साधक·—"अद्य प्रातःकालमारभ्य भाविप्रात-कालपर्यन्त नि श्वासोच्छ्वासात्मकषट्शताधिकैकविंशतिसहस्रसख्याकमज-पागायत्रीजपमह करिष्ये" इति सङ्कल्पयेत् ।

ततो द्वितीयदिने—"अद्येह पूर्वेद्युरहोरात्रचरितनासापुटनि सृतोछ्वास-निच्छवासात्मकषट्शताधिकैकविंशतिसहस्रसख्याकाजपागायत्रीजपं मूला-धारस्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्ध-आज्ञाचक्र-सहस्रारस्थितेभ्यो गण पति-ब्रह्म-विष्णु-रुद्र-जीव-गुरु-परमात्मभ्य ऋद्धि-सिद्धि-सरस्वती-लक्ष्मी-गौरी-प्राणशक्ति-ज्ञानशक्ति-चिच्छक्तिसमेतेभ्यो यथासख्य पट्शत पट्सहस्र षट्सहस्र षट्सहस्रं सहस्रमेक सहस्रमेकं सहस्रमेकमजपागायत्रीजप प्रत्येक निवेदयामि" इत्युक्त्वा जप मूलाधारचक्रस्थाय ऋद्धिसिद्धिसहितगणेशाय षट्शत स्वाधिष्ठानचक्रस्थाय सरस्वतीसहितब्रह्मणे षट्सहस्रम्, मणिपूरक-चक्रस्थाय लक्ष्मीसहितविष्णवे षट्सहस्रम्, अनाहतचक्रस्थाय गौरीसहित-शिवाय षट्सहस्रम्, विशुद्धचक्रस्थाय जीवात्मने सहस्रंकम्, आज्ञाचक्रस्थाय विद्यासहितगुरवे सहस्रैकम्, सहस्रारस्थाय स्वशक्तिसहितपरमात्मने एकसहस्रसख्या· च जप निवेद्य पुनरद्य प्रात·कालमारभ्य द्वितीयप्रात काल-पर्यन्त नासापुटनि सृतोच्छ्वासनि श्वासात्मक षट्शताधिकैकविंशति-सख्याकमजपागायत्रीजपमहोरात्रेण करिष्य इति जपसङ्कल्प कृत्वा साधक स्व कृत्य समाचरेत् ।

**अजपाजपनिवेदनम् ।**

| चक्रम् | देवता | जपसख्या |
|---|---|---|
| मूलाधारचक्रम् | गणपति | ६०० |
| स्वाधिष्ठानचक्रम् | ब्रह्मा | ६००० |
| मणिपूरचक्रम् | विष्णु | ६००० |
| अनाहतचक्रम् | रुद्र | ६००० |
| विशुद्धचक्रम् | जीवात्मा | १००० |
| आज्ञाचक्रचक्रम् | गुरु : | १००० |
| सहस्रारचक्रम् | परमात्मा | १००० |
| | | २१६०० |

सहस्रारचक्रम्—आद्याना षण्णा चक्राणामुपरि सहस्रार नामक चक्र विद्यते, तत्स्वरूपमुक्त कङ्कालमालिनीतन्त्रे—

सहस्रार महापद्मं शुक्लवर्णमधोमुखम् ।
अकारादिक्षकारान्तै स्फुरद्वर्णैर्विराजितम् ॥

गरुडपुराणे च—

तस्मादूर्ध्वंगत प्रभासितमिद पद्म सहस्रच्छदम् ।
सत्यानन्दमय सदाशिवमय ज्योतिर्मय शाश्वतम् ॥ १५।७५

तथा च सुषुम्णानाड्यूर्ध्वभागे शुक्लवर्णमधोमुख रक्तकिञ्जल्कशोभितमकारादिक्षकारान्तपञ्चाशद्वर्णैर्विंशतयावर्तनेन सहस्रारसख्याकैर्युक्त सहस्रारचक्र विद्यते । एतत्कर्णिकाया हस. तत· परमशिवरूपगुरु, ततः सूर्यमण्डल चन्द्रमण्डलम्, ततो ब्रह्मरन्ध्रम्, चन्द्रमण्डले विद्युदाकारत्रिकोणम्, तन्मध्ये मृणालसूत्रशतभागैकभागरूपसूक्ष्मा चन्द्रस्य षोडशी कला, तत्क्रोडे केशाग्रसहस्रभागैकभागसूक्ष्मा निर्वाणकला, तदधोऽव्यक्तनादात्मकनिवोधिकाख्या वह्नि, तदुपरि निर्वाणकलाक्रोडे पर बिन्दु शिवशक्त्यात्मक । अस्य सूक्ष्मतेजा हंसरूपा निर्वाणशक्ति· । अस्या हसो जीव । बिन्दोर्मध्ये शून्य ब्रह्मपद विद्यते । एतत्पद केचित् परब्रह्माभिधानमिति वदन्ति, अन्ये सुधियो वैष्णवपदमालपन्ति, केचित्तु मोक्षस्वरूप हंसाख्यमिति कथयन्ति, एतेन ब्रह्मविष्णुशिवशक्तिस्वरूप तत्पदमित्यायातम् । तदुक्त ज्ञानार्णवे—

हकारे बिन्दुरूपेण ब्रह्मा विद्धि पार्वति ।
सकारे सर्गबिन्दुभ्या हरिश्चाह महेश्वरि ॥
अविनाभावसम्बन्धाल्लोके हरिहराविति ।

शैवा एतत्पद्म शिवस्थानमिति लपन्ति, बैष्णवा विष्णो. स्थानमिति वदन्ति, साख्याः प्रकृतिपुरुषस्थान निगदन्ति, देवीचरणयुगलानन्दरसिकास्तु देव्या पद ब्रुवते । एव नानाप्रकारभावनयैको निरञ्जन एव निर्वाच्योऽस्ति । अत एव "ऋजुकुटिलनानापथजुषा नृणामेको गम्यः" इति पुष्पदन्ताचार्योक्त सङ्गच्छते । अत एव च परब्रह्मध्याने कुलार्णवे प्रोक्तम्—

बिन्दुरूपं परं ब्रह्म सहस्रदलसस्थितम् ।
निर्गुणो बिन्दुरूपश्च सिद्धिकारणमेव हि ॥

केचिद्वदन्ति स ब्रह्मा कैश्चिद्विष्णु प्रकल्प्यते।
कैश्चिद्रुद्रो महापूर्ण एको देवो निरञ्जन ॥

अपि च—

बहुधा ह्यागमैर्भिन्ना पन्थानः सन्ति भूतले ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥

योगशिखोपनिषदि प्रथमाध्याये तत्तच्चक्राणा स्थान स्वरूपञ्चैव निर्दिष्टमस्ति—

गुदमेढ्रान्तरालस्थ मूलाधार त्रिकोणकम् ।
स्वाधिष्ठानाह्वय चक्र लिङ्गमूले षडस्रकम् ॥
नाभिदेशे स्थित चक्र दशार मणिपूरकम् ।
द्वादशारं महाचक्र हृदये चाप्यनाहतम् ॥
कण्ठकूपे विशुद्धाख्य यच्चक्र षोडशास्रकम् ।
आज्ञानाम भ्रुवोर्मध्ये द्विदल चक्रमुत्तमम् ॥

तथा च पायूपस्थयोर्मध्ये वादिसान्तैश्चतुर्भिर्वर्णैरङ्कित चतुर्दल वह्निसमानवर्णमाधारचक्रमस्ति। उपस्थोपरि गुह्यदेशे वादिलान्तैः षड्भिरक्षरैश्चिह्नित षड्दल सूर्यसमानवर्ण स्वाधिष्ठानचक्रमस्ति। नाभिप्रदेशे डादिफान्तैर्दशभिरक्षरैरङ्कित दशदल रक्तवर्ण मणिपूरकचक्रमस्ति। हृदयदेशे कादिठान्तैर्द्वादशभिर्वर्णैरङ्कित द्वादशदल सुवर्णवर्णमनाहतचक्रमस्ति। कण्ठप्रदेशेऽकाराद् अ पर्यन्त षोडशभिः स्वरैरङ्कितं षोडशदल चन्द्रसमानवर्ण विशुद्धचक्रमस्ति। भ्रुवोमध्ये द्वाभ्या हकारक्षकाराभ्यार्माङ्कितं द्विदल रक्तवर्णमाज्ञाचक्रमस्ति। एतदुपरि दशमद्वारे सच्चिदानन्दज्योति स्वरूप शक्तिवाहनसहित सहस्रदल शुद्धस्फटिकसमानवर्ण सहस्राचक्र ब्रह्मरन्ध्रेऽस्ति। एतेषा चक्राणा मध्ये प्रथमे चक्रे गणेशम्, द्वितीये ब्रह्माणम्, तृतीये विष्णुम्, चतुर्थे महादेवम्, पञ्चमे जीवात्मानम्, षष्ठे गुरुम्, सप्तमे ब्रह्मरन्ध्रे च व्यापक ब्रह्म पुष्पचन्दनसमर्पणपूर्वकमेकाग्रचेता साधको ध्यायेत् ।

एषा चक्राणा तथा पादाङ्गुष्ठ-मूलाधार-गुदाधार-मेढ्र-ओड्याण-नाभि-हृदय-कण्ठ-घण्टिका-तालु-जिह्वा-भ्रूमध्य-नासिका-नासिकामूल-ललाट-ब्रह्मरन्ध्राणा षोडशानामाधाराणां ज्ञानं परमावश्यकम् ।

| | | |
|---|---|---|
| १—पायूपस्थयोर्मध्ये | चतुर्दल | मूलाधारचक्रम् |
| २—उपस्थोपरि गुह्यदेशे | षड्दल | स्वाधिष्ठानचक्रम् |
| ३—नाभिप्रदेशे | दशदल | मणिपूरकचक्रम् |
| ४—हृदयप्रदेशे | द्वादशदलम् | अनाहतचक्रम् |
| ५—कण्ठप्रदेशे | षोडशदल | विशुद्धचक्रम् |
| ६—भ्रुवोर्मध्ये | द्विदलम् | आज्ञाचक्रम् |
| ७—शिर कपाले | सहस्रदल | सहस्रारचक्र च विद्यते । |

यो योगी स्वकीये शरीरे एतानि चक्राणि सम्यक् न जानाति, स केवल नाम्ना योगी वर्तते । तस्यासिद्धिर्नभवतितदुक्त योगचूडामण्युपनिषदि—

षट्चक्र षोडशाधारं त्रिलक्ष्य व्योमपञ्चकम् ।
स्वदेहे यो न जानाति तस्य सिद्धि कथ भवेत् ॥ ३ ॥

## पुराणेषु षट्चक्रप्रसङ्ग

गरुडपुराणे उ० ख० सारोद्धारे मुक्ताचरणनिरूपणप्रसङ्गे गरुडेन सादर पृष्टा भगवान् विष्णु प्रोवाच—तार्क्ष्य ! शरीरस्य पारमार्थिक स्वरूप कथयामि, यद् ब्रह्माण्डस्य गुणै सम्पन्न योगिभिश्च धार्यमस्ति । योगिनो यस्मिन् षट्चक्रचिन्तन कुर्वन्ति, यथा वा ब्रह्मरन्ध्रे चिदानन्दस्वरूप ध्यायन्ति, तत् सावधानतया श्रृणु—मानवशरीरस्य रूपद्वय विद्यते; एक व्यावहारिक द्वितीय च पारमार्थिकम् । तत्र पारमार्थिके शरीरे षट्चक्राणि सन्ति । मूलाधार, स्वाधिष्ठानम्, मणिपूरकम्, अनाहतम्, विशुद्धम्, आज्ञाचक्रञ्च । तत्र—

मूलाधारे लिङ्गदेशे नाभ्या हृदि च कण्ठगे ।
भ्रुवोर्मध्ये ब्रह्मरन्ध्रे क्रमाच्चक्राणि चिन्तयेत् ॥ ( १५।७३ )

इत्यनुसार मूलाधारे मूलाधारम्, लिङ्गदेशे स्वाधिष्ठानचक्रम्, नाभौ मणिपूरकम्, हृदयेऽनाहतचक्रम्, कण्ठप्रदेशे विशुद्ध चक्रम्, भ्रुवोर्मध्ये आज्ञाचक्रम्, ब्रह्मरन्ध्रे सहस्रार च विद्यते । मूलाधारचक्र चतुर्दलम्, अग्निसमानवर्ण वादिसान्तवर्णाश्रय विद्यते । स्वाधिष्ठानचक्र षट्पत्रकं सूर्यसमानवर्ण वादिलान्तवर्णाश्रय विद्यते । मणिपूरक दशदलं रक्ताभ डादिफान्तवर्णाश्रयं वर्तते । अनाहतचक्र द्वादशपत्रक सुवर्णवर्ण कादिठान्तवर्णाश्रयं विद्यते । विशुद्धचक्रं षोडशदलं चन्द्रवर्णं षोडशस्वरसयुक्त भवति । आज्ञाचक्रञ्च द्विदल रक्ताम्बुजाभ हसेत्यक्षरयुग्मकं भवति ।

तस्मादूर्ध्वं देदीप्यमान सहस्रदलं कमलं विद्यते, यत्सत्यानन्दमय शिवमय ज्योतिर्मय शाश्वतं चास्ति। सप्तस्वेषु चक्रेषु क्रमशो गणेशस्य ब्रह्मणो विष्णोः शिवस्य जीवस्य गुरोर्व्यापकब्रह्मणश्च चिन्तन कुर्यात्।

एकस्मिन्नहोरात्रे षट्शतोत्तरैकविंशतिसहस्राणि श्वासस्य गतिर्भवति। हंस हसेति मन्त्र जपन् जीवो हकारेण बहिर्याति, सकारेण पुन प्रविशति। तत्र गणेशाय षट्शतानि, ब्रह्मणे षट्सहस्राणि, विष्णवे षट्सहस्राणि, जीवाय सहस्रं गुरवे सहस्रं चिदात्मने च सहस्रमिति जपसंख्या निवेदयेत्। सत्सम्प्रदायवेत्तारोऽरुणादयो मुनीश्वराश्चक्रस्थितब्रह्मकिरणेषु देवान् चिन्तयन्ति। शुकादयो मुनयोऽपि शिष्यानुपदिशन्ति। अतः साधक एतां महता प्रवृत्ति ध्यात्वा सतत ब्रह्म ध्यायेत्। एकाग्रचेता योगाभ्यासो सर्वेषु चक्रेषु मानसी पूजा विधाय ततो गुरूपदेशेनाजपा गायत्री जपेत्। नित्य प्रभाते बद्धासनो योगी षट्चक्रं चिन्तयन्नजपाक्रमस्य मनन कुर्यात्। अजपानाम्नी गायत्री मुनीना मोक्षदायिनी अस्ति, अस्या सङ्कल्पमात्रेण साधक सर्वेभ्यः पापेभ्यो विमुच्यते। अधोमुखे सहस्रदलपङ्कजे हससमारूढ वराभयकराम्बुज श्रीगुरुं ध्यायेत्। तच्चरणामृतधारया स्वदेह क्षालयेत्। ततः षट्चक्रसचारिणी सार्द्धत्रिवलयाम् आरोहावरोहक्रमेण स्थिता कुण्डलिनी ध्यायेत्। ततो ब्रह्मरन्ध्राद्बहिर्गत सुषुम्णाख्य धाम ध्यायेत्। तेन सुषुम्णामार्गेण गता जीवा विष्णो परम पद प्राप्नुवन्ति। ततो ब्राह्मे मुहूर्ते स्वयज्योतिः सनातन सच्चिदानन्दस्वरूप पर ब्रह्म ध्यायेत्, यदह सर्वदा चिन्तयामि। स्वप्रयत्नमपहाय गुरूपदेशेन विना पतन सम्भवति। एवमन्तर्योग विधाय बहिर्योग समाचरेत्। स्नानध्यानादिक कृत्वा हरिहरार्चन कुर्यात्। देहाभिमानिना पुसा यौगिकी अन्तर्वृत्तिर्न जायते। अतः भगवद्भक्तिस्तेषा सरलतापूर्वकं मोक्षप्रदायिनी अस्ति।

(ग० पु० १५।७१-९१)

शिवपुराणे वा० स० उ० ख० ३८ अध्याये--षट्चक्राणामेवमुल्लेखो विद्यते। द्विदलस्य चतुर्दलस्य दशदलस्य द्वादशदलस्य षोडशदलस्य च कमलस्यासने विराजमान शिव सस्मरेत्। भ्रुवोरन्तरे तडिदुज्ज्वल द्विदलं यत्पद्म विद्यते तस्य भ्रूमध्यस्थस्यारविन्दस्य दक्षिणे उत्तरे च विद्युत्समानवर्णे द्वे वर्णे स्तः, यत्र हक्ष इत्यन्तिमौ द्वौ वर्णौ अङ्कितौ स्तः। षोडशदलस्य कमलस्य षोडश स्वरा एव षोडश वर्णानि कल्पनीयानि। कमलमूलकन्दतः पूर्वादिक्रमेण द्वादशदलानि प्रस्फुटितानि सन्ति, यत्र कादि-

ठान्तद्वादश वर्णा अङ्किताः सन्ति। सूर्यसमानवर्णस्य तस्य पद्मस्य तानि द्वादशदलानि स्वहृदये ध्यायेत्। नाभिप्रदेशे गोधूमक्षीरधवलस्य दशारस्य कमलस्य दश दलानि चिन्तयेत्। यत्र यथाक्रम डादिफान्ता दशवर्णा अङ्किता सन्ति। विधूमाङ्गारवर्णस्याभ्गोदलस्याम्बुजस्य षड्दलानि सन्ति, यत्र वाद्या लान्तिमाश्च षड्वर्णा विराजन्ते। सुवर्णवर्णस्य मूलाधारारविन्दस्य यथाक्रमं वकारादिसकारपर्यन्त पर्णमयाश्चत्वारो वर्णा स्थिता सन्ति। एषु षट्स्वरविन्देषु ( षट्चक्रेषु ) यत्र मनोऽभिरत स्यात्तत्रैव महादेवी महादेवं च धीरया धिया चिन्तयेत्। ( शि० पु० ३८।६३।७० )

स्कन्दपुराणे वै० ख० वासुदेवमाहात्म्ये ३० अध्याये--षट्चक्रमुद्दिश्य लिखितमस्ति यद् योगी पार्ष्णिभ्या गुदमापीड्य पादद्वयस्थित वायु शनैः शनै समाकृष्य मृत्युस्थान नयन् मनसा केशव ध्यायन् षडक्षर मन्त्र जपन् प्रजापते स्थानमुपस्थापयेत्। ततो नाभौ हृदये कण्ठे उरसि भृकुटौ च नयेत्। वासुदेवपरायणो योगी एतेषु षट्सु स्थानेष्वेकैकस्मिन् पृथक् पृथग् निरोधं विसर्जन च कुर्वन् तावदभ्यसेद् यावत् स्वतन्त्रता न भवेत्। जित जित स्थान विहाय पर पर यायात्। स्थानषट्क प्राप्तस्य तदभ्यासे श्रमो न भवति। सर्वाच्छिद्राण्यवरुध्य सेन्द्रिय प्राण तालु ब्रह्मरन्ध्र च प्रपद्य मायामयपदार्थाना वासना हित्वा वासुदेवैकमना कलेवर त्यजन् योगविद् भगवत. श्रीकृष्णस्य पर धामोपेत्य दिव्यविग्रह सन् तं सेवमानो नितरामानन्दं लभते। ( स्क० पु० ३०।२४-३१ )

एवमग्निपुराणे ५९ अध्याये देवताधिवासविधिप्रसङ्गे ४१-४७ श्लोकपर्यन्त सक्षेपतः षट्चक्रस्य विवेचनं कृतमस्ति।

देवीभागवते सप्तमस्कन्धे पञ्चत्रिंशदध्याये कुण्डलिनीबहिर्भागे सुवर्णवर्णं चतुर्दलं कमल कल्पयित्वा तस्य चतुर्षु दलेषु व-श-ष-स इति चतुरो वर्णान् चिन्तयेत्। तदूर्ध्वं हीरकप्रभमनलप्रख्य बादिलान्तैः षड्भिर्वर्णैः समन्वितं षड्दलं स्वाधिष्ठानचक्रं विद्यते। चतुर्दल पद्मं षट्कोणकमलस्य मूलमाधारमस्तीत्यतो मूलाधारमुच्यते। द्वितीये स्वाधिष्ठानचक्रे स्वशब्दस्यार्थ. पर लिङ्गमस्ति, तस्याधिष्ठानत्वात् स्वाधिष्ठानमुच्यते। तदूर्ध्वं नाभिप्रदेशे विद्युदाभं तजोमय महाप्रभ दशदलं मणिपूरकचक्रमस्ति। मणिवन्नीलप्रभावत्वात् पद्ममिद मणिपूरकचक्रमुच्यते। अस्य दशसु दलेषु डादिफान्तान् दशवर्णान् चिन्तयेत्। पद्ममिदं विष्णुनाऽधिष्ठितमतोऽस्य ध्यानेन भगवतो विष्णोः साक्षात्कारो जायते।

तदूर्ध्वमुद्यदादित्यसन्निभं द्वादशदलमनाहतचक्रमस्ति। तस्य द्वादशदलेषु कादिठान्तान् द्वादशवर्णान् चिन्तयेत्। तन्मध्ये दशसहस्रसूर्यसमप्रभं बाणलिङ्गं विद्यते। तत्र ताडनमन्तरापि ततः शब्दब्रह्मण उत्पत्तिर्भवतीति हेतोर्योगवेत्तारो महर्षय एतदनाहतचक्रं कथयन्ति। एतत्पद्ममानन्दसदनमस्ति। अत्र परमः पुरुष ईशानो विराजते। एतदूर्ध्वं षोडशदलं धूम्रवर्णं महाप्रभं विशुद्धाख्यं पद्मं विद्यते। यस्य षोडशदलेषु षोडशस्वरास्तिष्ठन्ति। अत्र हंसस्वरूपस्य परमात्मनो दर्शनाद् जीवो विशुद्धमात्मस्वरूपं प्राप्नोति। अत इदं विशुद्धं पद्ममुच्यते। महदाश्चर्यकरमिदं पद्ममाकाशमिति नाम्नापि व्यवह्रियते। तदूर्ध्वं भ्रुवोर्मध्ये आत्मनोऽधिष्ठानमाज्ञाचक्रं विद्यते। अतीव सुन्दरमिदं पद्मं ह-क्षसयुक्तं द्विदलमस्ति। अत्र चित्तस्य स्थैर्यात् सर्वेषां पदार्थानां साक्षात्कारो भवति। त्रिषु कालेषु त्वयेदं कर्तव्यमित्येवं परमेश्वरस्याज्ञाया सङ्क्रमणादिदमाज्ञाचक्रमुच्यते। अत्र सहस्रदलानि भवन्ति। ( दे० भा० ७।३५।३४-४७ )

## योगार्थं ब्रह्मचर्यमावश्यकम्

यस्याः कस्या अपि यौगिकसाधनापद्धतेः सफलतायै ब्रह्मचर्यस्य पालनमस्त्यत्यावश्यकम्। वैदिके तान्त्रिके बौद्धे जैने च धर्मे तत्तद्देशीयविभिन्नसम्प्रदायेषु चास्यात्यावश्यकत्वमङ्गीकृतमस्ति। ब्रह्मचर्यपालनं विना आध्यात्मिकं शारीरिकं मानसिकं वा बलं सङ्ग्रहीतुं न शक्यते। बलसञ्चयमन्तरा चात्मन उपलब्धिर्गगनकुसुमायिता, कमठपीठायिता, शशशृङ्गायिता, वन्ध्यापुत्रायिता च भवति। अत एवोक्तम्—"नायमात्मा बलहीनेन लभ्यः।" हठयोगिनां सिद्धान्तानुसारं बिन्दोः संसरणात् संसारो बिन्दोः स्थैर्ये च मोक्षः। बिन्दौ स्थिरे प्राणोऽपि स्थिरायते, प्राणे च सुस्थिरे बिन्दुर्न कदाप्यस्थिरस्तिष्ठति। एवमेव बिन्दुना सह मनसो मनसा च प्राणस्यास्ति सम्बन्धः। अत एवोक्तं योगतत्त्वोपनिषदि—

> वर्जयित्वा स्त्रियाः सङ्गं कुर्यादभ्यासमादरात्।
> योगिनोऽङ्गे सुगन्धिश्च जायते बिन्दुधारणात्॥ ( ४२ )

वैदिक्या तान्त्रिक्या च साधनापद्धतौ बिन्दुशोधनस्यानेके उपायाः प्रदर्शिताः सन्ति। महायानसाम्प्रदायिकेषु बौद्धेष्वपि वज्रयान-मन्त्रयान-सहजयानसम्प्रदायेष्वेतदर्थं सूक्ष्मा उपाया उपदिष्टाः सन्ति। हठयोगे विशेषाधिकारप्राप्तये बिन्दोः स्थैर्यसाधकानामुपायानामवलम्बनमन्तरा न

कार्यं सिध्यति । बिन्दौ शुद्धे सत्येव स्वभावतः स्थैर्यं जायते । स्थिरो बिन्दुः कयाचन यौगिकप्रक्रियया विक्षुब्धमूर्ध्वं सञ्चरन् स्थूलभावं परित्यज्य क्रमशः सूक्ष्मं सूक्ष्मतरं सूक्ष्मतमावस्था अवाप्नुवन्नन्ते सहस्रदलकमलकर्णिकाया स्थितेन महाबिन्दुना सह सम्मिलति । अयमेव चिच्चन्द्रमसः षोडशीकलारूपोऽमृतबिन्दुः । ब्रह्मचर्यसाधनया बिन्दुं विषयजगद्भ्यो व्यावृत्य तं च पाचयित्वा ब्रह्ममार्गे नियोजनमेव संसारान्मुक्तिप्राप्तेरेकमात्रमुपाय ।

मत्स्यपुराणेऽप्युक्तमस्ति यत्तपोयोगधैर्ययशःसिद्धयो ब्रह्मचर्यमन्तरा न सफलीभूता भवन्ति । अतो योगसिद्धये ब्रह्मचर्यमत्यन्तमावश्यकमस्ति—

ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं तपः ।
ये स्थिता ब्रह्मचर्येषु ब्राह्मणा दिवि संस्थिताः ॥
नास्ति योगं विना सिद्धिर्न वा सिद्धिं विना यशः ।
नास्ति लोके यशो मूलं ब्रह्मचर्यात् परं तपः ॥
(१७४।३८,३९)

ब्रह्मचर्यपालनस्य समेषां पुंसामावश्यकत्वेऽपि योगपरायणस्य कृते तु ब्रह्मचर्यव्रतविधानमनिवार्यतयोपदिष्टमस्ति । जीवात्मपरमात्मनोः संयोगस्य सर्वोत्कृष्टं साधनं योग एवास्ति । श्रूयते व्याससूनुः श्रीशुकदेवमुनिर्वृक्षशाखायां निलीय भगवतः सदाशिवस्य मुखाम्भोजान्निर्गतं योगोपदेशं श्रुत्वा पक्षियोनितो विमुक्तो भूत्वा जन्मान्तरेऽमलात्मा महान् योगी बभूव ।

भारतीय-तन्त्र-मन्त्र-पूजापद्धति-भक्त्यादयो योगमूलका एव सन्ति । योगाभ्यासद्वारा चित्तस्यैकाग्रतया ज्ञानमुत्पद्यते, ततो मुक्तिर्जायते । वास्तविकं ज्ञानं योगाभ्यासं विना नोत्पद्यते । अत एव ज्ञानसङ्कलनीतन्त्रे लिखितमस्ति यद् वेदचतुष्टयं सर्वाणि च शास्त्राणि मथित्वा सारभागं नवनीतं योगिभिः पीतम्, परन्त्वसारभागं तक्रं तु पण्डिताः पिबन्ति—

मथित्वा चतुरो वेदान् सर्वशास्त्राणि चैव हि ।
सारस्तु योगिभिः पीतः तक्रमश्नन्ति पण्डिताः ॥ (५१)

अतएवयोगीश्वरो भगवान् महादेवः पार्वतीं प्रति स्वमुखेनोक्तवान्—

ज्ञाननिष्ठो विरक्तोऽपि धर्मज्ञोऽपि जितेन्द्रियः ।
विना योगेन देवोऽपि न मुक्तिं लभते प्रिये ॥ (३१)

तस्मात् शिवशक्तिसामरस्यात्मकस्य मोक्षस्योपलब्धये योगानुष्ठान-सिद्ध्यर्थं पुराणानुसारमपि षट्चक्रचिन्तनमत्यावश्यकम् ॥

## जीवस्य क्रमिकविकासविमर्श.

जीवस्य क्रमिकविकासे विवेचनीये तत्कारणमपि समालोचनीयता-मर्हतीत्यभिप्रेत्य तत्सम्बन्धेऽपि किञ्चिदनुसन्धीयते। शक्तिशक्तिमतोर-भेदनियमाद् ब्रह्मणि तदीयशक्तौ चाभेदो लक्ष्यते। अतएव ब्रह्मणि तदीय-शक्तिरूपिण्या मूलप्रकृतौ च शास्त्रेषु अभिन्नता प्रतिपादिताऽस्ति। यथा गानपरायणस्य पुंसो गानशक्तिः गानमकुर्वति तस्मिन् अव्यक्तदशायां तिष्ठति। तदानीं न कश्चिदपि अवधारयितुमर्हति यदयं गायकोऽस्ति, किन्तु गानसमये सर्वोऽपि विजानाति यदस्मिन् गानशक्तिर्विद्यते, तथैव ब्रह्मशक्तिः प्रकृतिर्यदा ब्रह्मण्यव्यक्तावस्थायां तिष्ठति तदा जागतिक-प्रपञ्चानां विलयः, किन्तु यदा सा सृष्टिकाले व्यक्तावस्थामापद्यते, तदा सूक्ष्मस्थूलभावपरिपूर्णं सृष्टिवैचित्र्यमभिलक्ष्यते।

यद्वा यथा गानपरायणं पुमांसमदृष्ट्वापि श्रोता तद्गानेन विमुग्धो भवति तथैव ब्रह्मस्वरूपानभिज्ञोऽपि जीवो महामायाया ब्रह्मशक्तौ ग्रस्तो मोमुह्यमानो दरीदृश्यते। अत एव शक्तिमता पुरुषेण सह शक्तिस्वरू-पिण्याः प्रकृतेः नाणीयानपि अस्ति भेदः, अग्नौ दाहिकाशक्तिरिव भगवति शक्तिस्वरूपिणी प्रकृतिर्निहिता तिष्ठति। सर्गादौ समष्टिजीवप्रारब्धानु-सारेण परमेश्वरे यदा जगतः सिसृक्षा समुत्पद्यते तदा शक्तेरेतस्या विकासो जायते। तथा चोक्तम्—

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥
योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव ह।
पुमांश्च दक्षिणार्द्धांशो वामार्द्धा प्रकृतिः स्मृता॥
सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी।
यथात्मा च तथा शक्तिर्यथाग्नौ दाहिका स्थिता॥
(कालिकापुराणे ७। २. ४. ५)

देवीभागवते तु—

स्वयं पुमांश्च प्रकृतिस्तावभिन्नौ परस्परम्।
यथावह्नेस्तस्य शक्तिर्न भिन्नाऽस्त्येव कुत्रचित्॥

सेयं शक्तिर्महामाया सच्चिदानन्दरूपिणी ।
रूपं बिभर्त्यरूपा च भक्तानुग्रहहेतवे ॥
( देवीभागवते-९।३८।२८-२९ )

श्रीमद्भागवते च प्रोक्तमस्ति यत् सृष्टेः पूर्वं दृश्यमानमिदं समस्तं प्रपञ्चं यदा जले निमग्नमासीत् तदैकमात्रः श्रीमन्नारायणः शेषशय्यायां शयानो योगनिद्रामाश्रित्य निमीलितनयनः आनन्दमनुभवति स्म । यथानलः स्वां दाहिकां शक्तिं स्वस्मिन्नन्तर्भाव्य काष्ठे व्यापकरूपेणावतिष्ठते तथैव नारायणोऽपि निखिलजीवानां सूक्ष्मशरीराणि स्वस्मिन्यन्तर्भाव्य जले शयानः तिष्ठति, सृष्टिकाले च पुनः स्वां कालशक्तिं प्रेरयति—

उदाप्लुतं विश्वमिदं तदासीद्
यन्निद्रया मीलितदृङ् न्यमीलयत् ।
अहीन्द्रतल्पेऽधिशयान एकः
कृतक्षणः स्वात्मरतौ निरीहः ॥
सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः
कालात्मिकां शक्तिमुदीरयाणः ।
उवास तस्मिन् सलिले पदे स्वे
यथाऽनलो दारुणिरुद्धवीर्यः ॥
( श्री० भा०-३।८।१०-११ )

तस्या एव ईश्वरशक्तेः शास्त्रेषु विभिन्नानि नामानि श्रूयन्ते । ते ते आचार्याः स्वस्वकृतिषु तामीश्वरशक्तिं विभिन्नैर्नामभिर्व्यवहरन्ति, यया स दृश्यमानमिदं समस्तं विश्वं विरचयति । तत्र केचनाचार्यास्तां तप इति ब्रुवते, केचित्तम इति कथयन्ति, अन्ये जड इत्यभिदधति, इतरे अज्ञानमिति ज्ञापयन्ति, अपरे प्रकृतिमिति प्रख्यापयन्ति, एके प्रधानमिति निगदन्ति, भिन्ना अजामिति बोधयन्ति, शाक्ता शक्तिमिति सम्बोधयन्ति, अद्वैता अविद्यामिति उच्चारयन्ति, पौराणिकाश्च मायामिति व्यपदिशन्ति—

केचित्तां तप इत्याहुस्तमः केचिज्जडं परे ।
ज्ञानं माया प्रधानञ्च प्रकृतिं शक्तिमप्यजाम् ॥
( देवीपुराणे ५।२७ )

अपि च—

सावित्र्येत्यभिधीयते श्रुतिपथे
शक्ति सदाद्या परा।
सर्वज्ञा भववन्ध-छित्ति-निपुणा
सर्वाश्रये सस्थिता ॥
( आ० वि० ५१ )

या वा एतस्य सस्रष्टु. शक्ति सदसदात्मिका।
माया नाम महाभागा ययेद निर्ममे विभु ॥
( कालिकापुराणे ९।२१ )

देवीभगवतेऽपि—

मूलप्रकृतिरेवैषा सदा पुरुषसङ्गता।
ब्रह्माण्डं दर्शयत्येषा कृत्वा वै परमात्मने ॥
( दे० भा० ३।६।६९ )

यथा दृश्या अनुभवगम्याश्च सर्वे पदार्था· त्रिप्रकारा भवन्ति तथैव विश्वसृष्टिरपीयम् आध्यात्मिको, आधिदैविकी, आधिभौतिकी चेति भेदात् त्रिधा विभक्ता परिदृश्यते—

वस्तुमात्रं तु यद् दृश्यं संसारे त्रिगुणं हि तत्।
दृश्य च निर्गुणं लोके न भूत न भविष्यति ॥
( श्री० भा० ६।२६।१० )

कारणे ब्रह्मणि भावत्रयसत्वात् कार्यब्रह्मस्वरूपसर्गेऽप्यत्र सर्वत्रैव त्रयो भावा भवन्ति। अतः परम-पुरुषोऽसौ आध्यात्मिकाधिदैविकाधिभौतिक-त्रिविधरूपेण साधकाना दृष्टिगोचरतामापद्यते। तस्य ब्रह्मण. आध्यात्मिकं रूपं मायातीत निर्गुणपरब्रह्मपदवाच्यम्, आधिदैविक सगुण-परमेश्वरनाम्ना अभिधीयते, आधिभौतिकञ्च अनाद्यनन्तविराट्-पुरुषसंज्ञया स्वीकृतमास्ते। अत. त्रिगुणात्मिकां स्वा प्रकृति मायामधिष्ठाय स्ववीर्यं त्रिधा विभज्य त्रिविधा सृष्टिमसौ विधत्ते—

योऽध्यात्मिकोऽयं पुरुष. सोऽसावेवाधिदैवकः।
यस्तत्रोभयविच्छेद. पुरुषो ह्याधिभौतिकः ॥

एकमेकतराभावे यदा नोपलभामहे ।
त्रितय तत्र यो वेद स आत्मा स्वाश्रयाश्रय. ॥
अधिदैवतमध्यात्ममधिभूतमिति प्रभु ।
अथैक पौरुप वीर्य त्रिधमित्यथ तच्छृणु ॥

( त० वि० ४२, ४३, ४४ )

श्रीमद्भागवतेऽपि—

एष ह्यशेषसत्त्वानामात्माश परमात्मनः ।
अद्योऽवतारो यत्राऽसौ भूतग्रामो विभाव्यते ॥
साध्यात्म साधिदैवश्च साधिभूत इति त्रिधा ।

( श्री० भा० ३।६।८९ )

कूर्मपुराणस्य पूर्वार्द्धे तु—

इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी ।
माया मम प्रियानन्ता ययेद धार्यते जगत् ॥
अनयेव जगत् सर्व सदेवासुरमानुषम् ।
मोहयामि द्विजश्रेष्ठा ग्रसामि विसृजामि च ॥
सैपा सर्वजगत्सूति प्रकृतिस्त्रिगुणात्मिका ।
प्रागेव मत्तः सञ्जाता श्रीकल्पे पद्मवासिनी ॥

( कू० पु० पू० १।३४.३५ ३८ )

प्रकृतेः त्रैविध्यात्तत् सम्बन्धेनैव भगवत. त्रिविधमिद स्वरूप समुपवर्ण्यते, न वास्तविकम् । अन्यथा "एकमेवाद्वितीयं ब्रह्म" इति श्रुतिप्रतिज्ञा व्याहन्येत । देवीभागवते च—

एकमेवाद्वितीय वै ब्रह्म नित्य सनातनम् ।
द्वैतभाव पुनर्याति काले उत्पित्सुसज्ञके ॥

( दे० भा० ३।६।४ )

सृष्टिस्तावत्त्रिविधा—आध्यात्मिकी, आधिदैविकी, आधिभौतिकी च । तत्र भगवतः स्थूलशरीरस्वरूप. विराटसृष्टिप्रवाह· आध्यात्मिकसृष्टिसंज्ञया शास्त्रेष्वभिधीयते, आधिदैविकी सृष्टिः ब्रह्माण्डसृष्टिः कथ्यते,

आधिभौतिकी च पिण्डसृष्टिर्निगद्यते। तत्राद्या अनाद्यनन्ता, द्वितीया तृतीया वा सादी सान्ते च विज्ञातव्ये।

आध्यात्मिक्याः सृष्टेः अनाद्यनन्तत्वाद् ब्रह्मसत्तावत् प्रकृतिरपि अनाद्यनन्ता, यतो हि सा ब्रह्मस्वरूपिणी, अतः तस्या अनाद्यनन्तता स्वतः सिद्धा। प्रकृतेरव्यक्तावस्थया परमात्मा ब्रह्मनाम्ना अभिधीयते, व्यक्त-दशायां सगुणत्वाद् ईश्वरनाम्ना व्यवह्रियते, सृष्टेरनाद्यनन्तधारासम्बन्धेन च विराट्-पुरुषसंज्ञया व्यपदिश्यते। आध्यात्मिक्याः सृष्टेः अनाद्यनन्तत्वात् यस्याः महाप्रकृतेः गर्भे आध्यात्मिकी सृष्टिर्बोभवीति तस्याः किल अनाद्य-नन्तत्वे का सशीतिः। तथा चोक्तम्—

"त्वं सर्वादिरनादिस्त्वं कर्त्री हन्त्री च पालिका।"

(कालिकापुराणे २।११)

वस्तुतः अनन्तानि ब्रह्माण्डानि सन्ति। तत्र प्रत्येकब्रह्माण्डे पृथक्-पृथक् ब्रह्म-विष्णु-महेश्वराः सन्ति। तदीयाः कार्यविभागा अपि स्वतन्त्रा भिन्ना भिन्ना भवन्ति, अतएव विभिन्नानां ब्रह्माण्डानां सृष्टि-स्थिति-प्रलया अपि विभिन्नतामुपयन्ति—

संख्या चेद्रजसामस्ति विश्वाना न कदाचन।
ब्रह्म-विष्णु-शिवादीना तथा संख्या न विद्यते॥
प्रतिविश्वेषु सन्त्येव ब्रह्मविष्णुशिवादयः।
पातालाद्ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम्॥
प्रत्येकं लोमकूपेषु ब्रह्माण्डं परिनिश्चितम्।
प्रत्येकं प्रतिब्रह्माण्डं ब्रह्मविष्णुशिवादयः॥

(देवीभागवते ९।७,८,१७)

यथा स्थूलशरीरस्य जरारोगमृत्यवो भवन्ति तथैव प्रत्येकब्रह्माण्डे ब्रह्मणो दिवसावसाने खण्डप्रलयो रुद्रस्यायुषोऽन्ते च महाप्रलयो बोभवीति। तदा त्रिमूर्तौ ब्रह्मविलीनायां ब्रह्माण्डस्यैकस्य महाप्रलयः सम्पद्यते। अखिलब्रह्माण्डनायकस्य योगमायाया अक्षिपक्ष्मसञ्चालन-मात्रेणापि समस्तं विश्वमुत्पद्यते, अपि च तस्या एव प्रभावेण ब्रह्मविष्णु-महेश्वराणामपि सृष्टिस्थितिप्रलया बोभवन्तीति—

तथा चोक्तं देवीभागवते—

या नेत्रपक्ष्मसञ्चलनेन सम्यग्
विश्व सृजत्यवति हन्ति निगूढभावा ।
सैषा करोति सततं द्रुहिणाच्युतेशान्
नानावतारकलने परिभूयमानान् ॥

( देवीभागवते ५।१।२९ )

अपिच—

जानीहि त्वं महाराज! योगमायावशे जगत् ।
ब्रह्मादिस्तम्बपर्यन्तं देवमानुषतिर्यगम् ॥
मायातन्त्रीनिबद्धा ये ब्रह्म-विष्णु-हरादय ।
भ्रमन्ति बन्धमायान्ति लीलया चोर्णनाभवत् ॥

( तत्रैव ५।१।५३-५४ )

अनाद्यनन्तसृष्टिप्रलयप्रवाहे प्राणिनामुत्पत्तिमुक्तिविषये एवं प्रमाण-मुपलभ्यते—

निखिला एव सस्कारा साद्यन्ता सम्प्रकीर्तिता ।
अतो जीवप्रवाहेऽस्मिन् अनाद्यन्तेऽपि जन्तव ॥
मुक्तिशीलास्तथोत्पत्तिशालिन सन्ति सर्वथा ।
नैवात्र विस्मयो कार्यो भवद्भिरमृतान्धसः ॥

( देवीपुराणे ३।१७ )

एवमेकब्रह्माण्डीयजीवाना स्थूलानि सूक्ष्माणि वा शरीराणि नून प्रणाशमापद्यन्ते। तस्माद् ब्रह्माण्ड पिण्ड ( जीवदेह ) चोभे विनश्वरे भवतः। त्रिगुणात्मिकाया प्रकृतेः वैभवस्वरूपे ब्रह्माण्डपिण्डे द्वे अपि त्रिगुणविलासपार्थक्यात् सृष्टि-स्थिति-प्रलयाधीने भवत —

यदा सिसृक्षु. परमात्मनो परो
रज सृजत्येष पृथक् स्वमायया ।
सत्त्व विचित्रासु रिरंसुरीश्वर.
शयिष्यमाणस्तम ईरयत्यसौ ॥

( श्रीमद्भागवते ७।१।७० )

अनन्तब्रह्माण्डमयी आध्यात्मिकी सृष्टिधारा अनाद्यनन्ता, किन्तु प्रकृते त्रिगुणमयत्वात् प्रत्येक ब्रह्माण्ड नश्वरमभ्युपगन्तव्यम्। भगवतो रुद्रस्यायुपा सह ब्रह्माण्डस्यैकस्यायु निर्णीतम्। रुद्रायुषोऽन्ते यश्च विष्णु यो वा ब्रह्मा स्त ताभ्या सहैव ब्रह्माण्डं विलीयते। अतो व्यष्टिरूपेण प्रत्येक ब्रह्माण्डस्य सृष्टि-स्थिति-विलया भवन्ति। अस्मादेव कारणात् प्रति ब्रह्माण्ड सृष्टिकर्ता ब्रह्मा स्थितिकर्ता विष्णु सहारकर्ता च रुद्र. पृथक् पृथक् विद्यन्ते। ब्रह्माण्डवत् जीवदेहात्मक पिण्डोऽपि नश्वर।

जीवोऽत्र ससारे कमश. उद्भिज्जस्वेदजाण्डजजरायुजयोनिषु उत्पन्नो भूत्वा नैज प्रारब्ध भुञ्जानोऽन्ते निधन प्रपद्यते। एव च सर्वेऽपि जीवा स्वस्वकर्मफलभोगानन्तर विलयमुपगच्छन्तीति अत्र कश्चनास्ति सन्देह।

स्मर्यते चात्र—

यदिद दृश्यते किञ्चिज्जगत् स्थावरजङ्गमम्।
पुन सक्षिप्यते सर्वं जगत् प्राप्ते युगक्षये॥
(कालिकापुराणे ५।७)

पुराणानुसार निर्विकार, अजन्मा पुराणपुरुष, पुरुषोत्तमो यदा सत्त्वादिगुणाना जन्मादिकर्मणाञ्च कारणभूताया मायाशक्तौ प्रकृतौ चिदाभास रूप वीर्यं निधत्ते तदा प्रपञ्च एष समुत्पद्यते। तथाचोक्तमिन्द्रियाधिष्ठात्रीभिः देवताभिः—

त्व न सुराणामसि सान्वयाना
कूटस्थ आद्यः पुरुप पुराणः।
त्व देवशक्त्या गुणकर्मयोनौ
रेतस्त्वजायां कविरादधेऽज.॥
(श्री० भा० ३।५।४९)

अपिच—

स आदि स मध्य स चान्त प्रजाना
स धाता स धेय स कर्ता च कार्यम्।
युगान्ते प्रसुत सुसक्षिप्य लोकान्
युगादौ प्रबुद्धो जगद् व्युत्ससर्ज॥
(म० भा० शा० प० मो० ध० ३४०।१००)

ईश्वरः किल सृष्टिकर्मणि बीजदाता पितृस्थानीयः क्षेत्रस्वरूपा च प्रकृतिः जननी निर्धारिता। यथाऽङ्कुरोत्पत्तये क्षेत्रे बीजमुप्यते तथैव प्रकृतिक्षेत्रे परमपुरुषस्य बीजवपनेन सृष्टिविस्तारो जायते। मानवजगति यथा सृष्टिविस्तारहेतवे मातुः क्षेत्रे पितुर्वीर्याधानप्रयोजनीयता तथैव प्रकृतिमातुः क्षेत्रे परमेश्वरस्य वीर्याधानेन अनन्तकोटिब्रह्माण्डरूपिण्या विराट्सृष्टेः समुद्भवो भवति। यथाचोक्तं गीतायाम्—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत।
तेषां ब्रह्म महद् योनिरहं बीजप्रदः पिता॥

(गीतायाम् १४।३-४)

मनुस्मृतावपि विज्ञानमेतद् भगवता मनुना समर्थितमास्ते—

द्विधा कृत्वाऽऽत्मनो देहमर्द्धेन पुरुषोऽभवत्।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः॥

(मनुस्मृतौ १।३२)

श्रुतिश्च "ततो विराडजायत"। इयमेव मातृस्थानीया ब्रह्मशक्तिस्वरूपिणी प्रकृतिः शास्त्रेषु सस्त्यानशक्तिः सलिलस्वरूपा प्रोक्ता। इमामेव विश्वस्य संस्थानशक्तिमभिलक्ष्य भगवता पतञ्जलिना महाभाष्ये "संस्त्यानरूपा स्त्री प्रवृत्तिरूपः पुरुषः" इति सोपष्टम्भं प्रोक्तम्। संस्त्यान-संहनन-सम्मिलन-शक्तिसद्भावात् अप एव प्रकृतेर्नाम। यतोऽप्सु मेलन-शक्तिर्वर्तते। महाप्रलयकाले समस्तब्रह्माण्डोपादानभूतं सर्वमपि प्रच्छन्न-रूपेण प्रकृतेरङ्के विलीनं तिष्ठति। तदा सदसत् किमपि नासीत्, केवलमम्भ एवाभवत्। अस्यामेवानन्तजीवसंस्कारसम्बलितायामव्याकृत-प्रकृतौ सर्वतः प्रथमं परमपुरुषेण वीर्यदानपूर्वकं गर्भाधानं क्रियते। एवं त्रिगुणमय्या प्रकृत्या साकं लीलापूर्वकगर्भाधानद्वारा अनन्तकोटि-जीवोत्पत्तिप्रकारोऽवसेयः। परमपुरुषवीर्याधानेनैव क्रमशो महत्तत्त्वादयः समुत्पन्ना सृष्टिविकासं समेधयन्ति। एतदेव मनुसंहितायां प्रकारान्तरेण उक्तं समुपलभ्यते—

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत्॥

(मनुस्मृतौ १।८)

एवञ्च प्रलयदशाया सदसतोरभावात् कस्यापि वस्तुनः सत्ता नासीत्। केवलमव्याकृतप्रकृतिगर्भे विलीना सस्कारसमूहास्तदवबोधकोऽद्वितीयचैतन्यमय परमात्मैवाविद्यत। स एव सृष्टिप्रारम्भसमये एकत्वाद् बहुत्वकामनया प्रलयगर्भविलीनजीवसस्कारानुसारेण कल्पसृष्टि प्रकाशयति। एकभावापन्न परमात्मैव स्व शरीर द्विधा विभज्य प्रकृति विकाशयति। तस्या एव गर्भे विराड् विश्वमुत्पादयति। अतो दर्शनशास्त्रे सत्यस्वरूपस्य ब्रह्मण शक्तिसमुत्पन्नाया सत्यस्वरूपिण्या· प्रकृतिमातुर्लीलावैभवरूपं जगदपि सत्यमेव प्रतिभातीति सिद्धान्तितम्। अस्या जडचेतनात्मकप्रकृतिपुरुषशृङ्गारसमुत्पन्नसृष्टिलीलाया प्रवाहद्वयमभ्युपगम्यते। एक ऊर्ध्वगामी चेतनप्रवाह, द्वितीयाश्चाधोगामी जडप्रवाह। तत्र जीवा नानायोनिषु परिभ्राम्यन् ऊर्ध्वगामिनो चेतनधारामवलम्बमान क्रमश समुन्नमन् अन्ते तदुन्नतिपराकाष्ठा मुक्ति लभते। ततस्तदन्तर्गतो जडाश प्रकृतिधाराया निलायते। चेतनधाराया पराकाष्ठा ब्रह्मसद्भावो यत्र प्रकृते पृथक् सत्ता विलीयते। एव च चेतनप्रवाह प्राकृतिक रजस्तमामय राज्यमतिक्रम्य सत्त्वे समुपस्थित समुन्नतेः पराया काष्ठाया व्यापिकाया चेतनधाराया विलीयते। तदीया देह. मृत्योरनन्तर चैतन्याभावात् प्रणाशमुपगच्छति। यया प्राणशक्त्या देहान्तर्गता परमाणव· परस्पर विच्छिन्ना सन्त जडाया प्रकृतेरधोगतिरूप तमोऽभिमुख प्रयान्ति।

प्रकृतिः परिणामिनी चञ्चला चेति हेतोः चेतनप्रवाह क्रमशः समुन्नतो भवन् सत्त्वराज्यमतिक्रामन् त्रिगुणमय्याः प्रकृते स्वभाविकी धारां निस्तीर्य परिणामरहित सन् स्थिरो जायते, किन्तु जडप्रवाह· नियतपरिणामशीलाया प्रकृते· नित्यमन्तर्गतत्वात् परिणामशून्य स्थिरो भवितुं नार्हति। जडायाः प्रकृते. अन्तिमा सीमा प्रस्तरादय स्थावरपदार्था सन्ति। इयमेव तमोगुणस्य परा काष्ठा।

यथा किल सामुद्रिकास्तरङ्गा घातप्रतिघाताभ्या तीरमायाताः अग्रे गतिनिरोधसत्त्वात् पुन· समुद्राभिमुख प्रयान्ति तथैव प्राकृतिको निम्नगामी प्रवाह क्रमशो निम्नत्वमुपढौकमान. तमोगुणस्य परा काष्ठा प्राप्तोऽग्रे स्थानमनवाप्य पुनरपि तमोगुणाद् रजोगुणाभिमुख ( जडतश्चैतन्याभिमुखम् ) स्वभावत एवाग्रेसरति। तदानी तमोगुणतो रजो-

गुणाभिमुख प्रतिष्ठमानस्य प्रकृतिप्रवाहस्य किञ्चित् समुन्नत्या तमोगुण-मालिन्यापसृत्या तत्र ईषत् स्वच्छताया आविर्भावो जायते। यथा भगवतो सूर्यस्य किरणच्छायाया सर्वत्र विद्यमानत्वेऽपि मलिनो दर्पणः प्रतिबिम्बग्रहणासमर्थः, किन्तु स एव यदि निर्मलीकृतो भवेत्तदा तत्र व्यापकस्य सूर्यस्य प्रतिबिम्ब प्रतिफलत्येव तथैव सर्वव्यापकस्यात्मनः चित्सत्ताया सर्वत्र सत्त्वेऽपि सा तामसिकप्रवाहमालिन्यात् तत्र नैव विकासमापद्यते, किन्तु प्रकृतिक प्रवाहः तमोगुणस्यान्तिमकाष्ठातः किञ्चित् समुन्नतता प्रपद्यते। तदा तत्र स्वच्छीभूते सूक्ष्मप्रकृतिकेन्द्रे व्यापकस्य परमात्मनो यः प्रतिबिम्बो निपतति स एव ब्राह्मणः प्रतिबिम्बो जीवसंज्ञा धत्ते। तथाहि—

अविद्याया च यत् किञ्चित् प्रतिबिम्ब नगाधिप ।
तदेव जीवसंज्ञ स्यात् सर्वं दुखाश्रयं पुन ॥

(देवीभागवते ३।७।४५)

श्रीमद्भगवद्गीतायामपि भगवान् श्रीकृष्ण. स्पष्ट प्रोवाच—

ममैवांशो जीवलोके जीवभूत; सनातनः ।
मन षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥
अपरेयमितस्त्वन्या प्रकृतिं विद्धि मे पराम् ।
अपिच—जीवभूता महाबाहो ! ययेद धार्यते जगत् ॥

(१५।७,७।५)

महाभारतस्य शान्तिपर्वणि मोक्षधर्मेऽपि जीवात्मा परमात्मनोऽशः स्वीकृतोऽस्ति—

जीवमात्मगुण विद्यादात्मान परमात्मनः ।

(महाभारते शा० प० १४१।१९)

एव हि अंशशब्देन कल्पितस्य जीवात्मन प्रथमविकाससमये अविद्याया प्रबलेनान्धकारेण समाच्छन्ने तमोमयान्त करणो एतावत्तारल्यभावमासन्नमात्मज्योतिः प्रतिफलति यत् तत् चिदाभासतः चित्प्रतिबिम्बाद् वा अन्यत् किमपि अभिधातु न शक्यते। तदेव ज्योतिः प्रकृतिराज्ये समुन्नमद् यथा-यथा अविद्यान्धकारतो विमुच्यते तथा-तथा तत् स्वीयां तां ज्ञानमयीं प्रभां प्रदर्शयति यया व्यापकेन चिन्मयस्वरूपेण

सह तस्य अंशांशिभावसम्बन्धो ज्ञानराज्यविचरणशीलैः साधकै सदैवानुभूयते। विषयमिमं स्पष्टयितु भगवान् महर्षिवेदव्यासः स्वकीये वेदान्तदर्शने सूत्रयाञ्चकार—

"अंशो नाना व्यपदेशात्" ॥

( ब्रह्मसूत्रे २।३।४३ )

यथा एक एव आकाशो घटाकाश-मठाकाशादिना भिद्यते तथैव अन्तःकारणोपाधिभेदेन एकमेव ब्रह्म संख्यातीतरूपेण परिव्याप्तं विलोक्यते। तस्मादेक एव विभु परमात्मा उपाधियुक्त सन् अंशस्वरूपतो नानात्वं भजते। अत एवोक्तम्—

वालाग्रशतभागस्य शतधा कल्पितस्य च।
जीवो भाग स विज्ञेयः सचानन्त्याय कल्पते ॥

( कौ० उ० ५।३ )

यथा वा एक एव निराकारोऽग्नि साकाररूपेण प्रज्वलित सन् आधारभेदाद्भिन्नः प्रतीयते तथैव जीवमात्रेऽन्तर्यामितया सर्वत्र स्थितः एक एव परमात्मा विभिन्नप्राणिषु तदनुरूपतया विभिन्नरूपोऽनुभूयते। वस्तुत एक एवेश्वर आधारभूतस्य वस्तुन शरीरादेरनुरूपतया विश्वस्मिन् जीवरूपेण अनेक. प्रतीयते। तथाहि—

अग्निर्यथैको भुवन प्रविष्टो
रूप रूप प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा
रूप रूप प्रतिरूपो बभूव ॥

( क० उ० २।२९ )

प्रकृतेः अतिसूक्ष्मोऽशो यत्र चैतन्यं प्रतिविम्बितं भवति स एव कारणशरीरनाम्ना निगद्यते। तत प्रकृत्या सम्बन्धनिबन्धनस्य जीवस्य इच्छया सूक्ष्मशरीरमुत्पद्यते। तद्गतसस्कारसमूहतीव्रवेगानुसारेण च दृश्यमानं स्थूलं शरीरमुद्भवति। एव शरीरत्रयेण भोगादिना बद्धो जीव, उद्भिज्ज-स्वेदज-अण्डज-जरायुजाना योनीरतिक्रमन् मानवयोनिमुपढौकते।

मनुष्ययोनौ असख्याकविभिन्नगतिलाभान् मानवयोनिसंख्या निर्द्धारयितुमशक्या. केवलमुद्भिजादिचतुर्विधभूतसघस्य संख्या शम्भु-

गीताया निर्धारिता विलोक्यते। तदनुसार विशतिलक्षसख्याका स्थावरयोनय. सन्ति, क्रुमियोनय एकादशलक्षसख्याका, जलचरयोनयो नवलक्षसंख्याका, पक्षियोनयो दशलक्षसख्याकाः, पशुयोनयः त्रिशल्लक्षप्रकारा', वानरयोनयश्च चतुर्लक्षविधा भवन्ति। तथाचोक्तम्--

स्थावरे लक्षविशत्यो कृमिज रुद्रलक्षकम्।
जलज नवलक्ष च पक्षिज दशलक्षकम्॥
पश्वादीना लक्षत्रिशच्चतुर्लक्ष च वानरे।
ततो हि मानवाजाताः कुत्सितादेर्विलक्षकम्॥

(शभुगीतायाम् १७, ९८)

तथा चोद्भिज्जस्वेदजाण्डजरायुजात्मकस्य चतुर्विधस्य भूतसघस्य।

सङ्कलनया (२० + ११ + ९ + १० + ३० + ४ = ८४) चतुरशीति-लक्षप्रकारा योनयो भवन्ति। 'चतुरशीतिलक्षान्ते मानव.' इति वचनानुसारं जीव पूर्व प्रोक्तचतुरशीतिलक्षसख्याकासु विविधासु योनिपु जन्म गृहीत्वा मनुष्ययोनौ जन्म गृह्णाति। तत्र सत्कर्मणा समुन्नतिम् असत्कर्मणा चावनतिं लभमान तत्फले सुखदु खे अनुभवति।

तत्त्वनिरूपणप्रसङ्गे देवर्पिनारदमुपदिश्ता ब्रह्मणा देवीभागवतेऽपि चतुरशीतिलक्षसख्याका जीवयोनय' प्रोक्ता तथाहि—

सर्वे जीवा मिलित्वैव ब्रह्माण्डाशसमुद्भवाः।
चतुरशीतिलक्षाश्च प्रोक्ता वै जीवजातय.॥

मानवेतरचतुर्धिभूतसघस्य योनिपु स्वाभाविकसस्काराश्रयेण तद्गता जीवा क्रमोर्ध्वगामिनो भवन्ति, किन्तु मानवयोनौ जीव' स्वतन्त्र. सन् संस्काराधीनो जायते। अतोऽसौ क्रमोन्नतिमप्राप्तौ निजकर्मानुसारेण कदाचिदुन्नत' कदापि चावनतो भिन्ना भिन्ना गतिमासादयति।

उद्भिज्जयोनिमारभ्य जरायुजयोनिपर्यन्त जीवो निर्बाध क्रमोन्नतिमासादयति, यतो हि तासु योनिषु बुद्धेर्मालिन्येन जीव स्वकर्मणा स्वतन्त्रसस्कारार्जन न कर्तुं पारयति, केवल प्रकृतिरेव माता शिशुमिव स्वाभाविकसंस्कारानसृत्य क्रमशो जीवान् सम्वर्द्धयति। यथा नद्या प्रवहमाण' काष्ठखण्डोऽपवेगेनैव समुद्राभिमुखमानीयते तथैव मानवभिन्ना जीवा, प्रकृतेरूर्ध्वगामिना प्रवाहेण उद्भिज्ज-स्वेदज-अण्डज-जरायुजान्त

क्रमश समुन्नता योनिं नीयन्ते। तदानी प्रकृतिमातुरधोनत्वात् जीवानां क्रमोन्नतिर्निर्वाध जायते, परन्तु मानवयोनिमधिगते जीवे पूर्णरूपेण पञ्च-कोषा विकाशं प्राप्नुवन्ति, तत्राहङ्कारबुद्ध्योरपि विकासो जायते। तदानी मानव प्रकृतौ स्वामित्व स्थापयति, प्रकृतिमातुरधोनता च परित्यजति। अतः प्रागेव प्रकृतिदायित्वस्य तिरोधाने स्वय मानव स्वकृताना कर्मणा दायित्व भजते। अतो मानवयोनौ धर्माधर्मयोरधिकार समाम्नात.। तथाचोक्तम्—

मानुषेषु महाराज! धर्माधर्मौ प्रवर्तत।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह॥
इय हि प्रथमा योनि या प्राप्य जगतीपते।
आत्मा वै शक्यते त्रातु कर्मभि शुभलक्षणै॥

मनुष्ययोनौ कर्मानुष्ठानाधोनत्वात् स्वीयपुरुषार्थैर्मानव· स्वोया समुन्नतिमनुष्ठातुमर्हति, स्वकीयेन पापकर्मणा च नीचामपि पापयोनिम् आदयितु शक्नोति। अत· शास्त्रेषु सर्वापेक्षया मानवजन्मनोऽभ्यर्हितत्वमुपपादितम्। अहङ्काराक्रान्तचित्तो मानव प्रकृतेरूर्ध्वगामिन प्रवाह परित्यजन् स्वेच्छाचारी सन् विपरीतगतिस्वरूपामवनति लभते। तस्मिन् समये धर्मो हि मानवसाहाय्यमाचरन् शास्त्रीयविधानद्वारा तस्यावनतिं निरुध्य क्रमोन्नतिमार्गे त परिचालयति। तथाचोक्त शम्भुगीता—

सन्नति निखिला जीवा धर्मेणैव क्रमादिह।
विदधाना सावधाना लभन्तेऽन्ते पर पदम्॥

पुराणानुसार धर्मद्वारैव सर्वे मनोरथा· पुरुषार्थाश्च सिध्यन्ति। अतो धर्मानुष्ठानमवश्य कर्तव्यम्। तथालोक्त कूर्मपुराणस्य पूर्वार्द्धे—

धर्मात् सञ्जायते ह्यर्थो धर्मात् कामोऽभिजायते।
धर्म एवापवर्गाय तस्माद् धर्म समाश्रयेत्॥ २।५५

धर्मोहि स्थावरजङ्गमात्मकस्य समस्तस्य पदार्थस्य धारकोऽस्ति, तत्प्राप्तिश्च कर्मणा ज्ञानेन च जायते। यदि मानवो ज्ञानकर्मभ्या रहितो भवेत्तर्हि जगद्धारणार्थमपेक्षिताया शक्तेराविर्भावको न प्रभवेत्। अतो जगतो धारणमय्या . धर्माख्यायाः शक्तेः प्रादुर्भावाय कर्मणो ज्ञानस्य चावलम्बनमवश्य विधेयम्—

धर्मात् सजायते सर्वमित्याहु ब्रह्मवादिन।
धर्मेण धार्यते सर्वं जगत् स्थावरजङ्गमम्॥

कर्मणा प्राप्यते धर्मो ज्ञानेन च न सशय ।
तस्माज् ज्ञानेन सहितं कर्मयोगं समाश्रयेत् ।।
( कू० पु० पूर्वार्द्धे २।६२ ६३ )

एवमैहिकी पारलौकिकी वा समुन्नति साधयितुं समुद्यतेन पुंसा धर्मोऽवश्यमनुसर्तव्यः। धर्मो हि द्विविध देशधर्मः, विश्वधर्मश्च। तत्र देशधर्मः स उच्यते यस्तत्तद्देशस्य सस्कृत्यनुसारं तत्तदेशमात्रस्य मनुष्यैरनुष्ठेयो भवति। यथा भारतवर्णस्य देशधर्मो वर्णाश्रमधर्मः। विश्वधर्मश्च स एव भवितुमर्हति यो विश्वकल्याणभावनया समस्तस्य विश्वस्य मनुष्यैरनुष्ठेयो भवति। विश्वधर्माश्रयणेनैव विश्वबन्धुत्वस्योद्बोधन सर्वत्र सौहार्दपूर्णाया भावनायाश्च सम्पर्कस्य स्थापन भवितुमर्हति। इममेव धर्ममाश्रित्य भारतस्य 'वसुधैव कुटुम्बकम्' इति सर्वजनहितकारिणी भावना जागर्ति।

आनन्द एव जीवस्य जीवनशक्तेरखिलपुरुषार्थानाञ्च मौलिकोऽस्ति आधार। आनन्दप्रवासी जीव आनन्दकन्दसच्चिदानन्दचरणसरसीरुहमाश्रयन् क्रमश आनन्ददायिनी समुन्नतिकक्षामतिक्रमन् कृतकृत्यतामधिगच्छति। ये भगवद्गुणानुरक्तमात्मनो मनः एकवारमपि भगवच्चरणकमलयो निवेशयन्ति न, तेषा कदाचिदपि यमाद् यमपाशहस्तेभ्यो यमदूतेभ्यो वा किञ्चिद्भय जायते। भगवति मनोनिवेशमात्रेणैव ते निर्धूतपापा भवन्ति, तथाचोक्त श्रीमद्भागवते भगवता शुकदेवेन राजानं परीक्षित प्रति—

सकृन्मन. कृष्णपदारविन्दयोर्निवेशित तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृता ।। ६।१।१९

अत एव सारग्राहिणो गुणज्ञा सकलदोषदुष्टस्यापि कलेः एवं प्रशंसा कुर्वन्ति, यतस्तत्र भगवतो गुणनामकीर्तनेनैव मानव. सत्ययुगे ध्यानस्य, त्रेताया यज्ञस्य, द्वपरे भगवत्सेवायाश्च फल लब्ध्वा सर्वविधं पुरुषार्थं प्राप्य कृतार्थो जायते—

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुण.।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ।।
कृते यद्ध्यायतो विष्णुं त्रेताया यजतो मखै.।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ।।
(श्री० भा० १२।३।१५।५२)

इदमेव जीवभावविकासक्रमाभिव्यक्तिविज्ञानस्य सारभूत तत्त्वम्, एतदेव च चिज्जडग्रन्थिस्वरूपजीवविज्ञानस्य संक्षेपतो रहस्यमवगन्तव्यम्।

## षष्ठ. परिच्छेद.

## पुराणेतिहासयोः सांख्यदर्शनदिग्दर्शनम्

तत्तत्पुराणेष्वाख्यानोपाख्यानगाथादिभिर्वेदार्थनिरूपणपूर्वकं वेदाङ्गाना विवेचनं तत्तद्दार्शनिकविषयाणा च दिग्दर्शनं विद्यते। तत्रापि विशेषतो वेदान्तदर्शनस्य साख्ययोगयोश्च मौलिकसिद्धान्ताना प्रचुर निरूपणं दरीदृश्यते।

### पुराणेतिहासयो

यथा तत्त्वज्ञानम्, मोक्षप्राप्ति, सत्कार्यवाद, पुरुषबहुत्व साख्यदर्शनस्यास्ति मुख्यो विषय., तथैव पुराणेतिहासयोरपि यत्र तत्र तत्त्वज्ञाननिरूपणम्, सत्कार्यवादस्योल्लेख, मोक्षप्राप्त्युपायश्च प्रदर्शितो विद्यते। पुराणेतिहासयो प्रधानतया मोक्षप्राप्तिर्भक्तिं पुरस्कृत्य जायते, साख्यदर्शने तु प्रकृतिपुरुषविवेकद्वारा अपवर्गप्राप्ति प्रतिपादिताऽस्ति। आदिनारायणस्य भगवता महापुरुषस्यावतारो जगदनुजिघृक्षया प्रजापते कर्दमस्य पुत्रः स्वायम्भुवस्य मनोर्दुहितरि देवहूत्यामवतीर्णो धर्मज्ञानवैराग्यैश्वर्यसम्पन्नो भगवान् कपिलो महामुनिरज्ञानान्धकारे मज्जज्जगदवलोक्य सजातकारुण्यो जिज्ञासमानायाऽऽसुरिसगोत्राय ब्राह्मणाय स्वप्रधानशिष्याय गुणपुरुषान्यतोपलब्धिरूपेण ज्ञानेन ससारपारावारपारदिदर्शयिषया पञ्चविंशतितत्त्वान्युपदिदेश, येषा ज्ञानात् त्रिविधतापनिवृत्तिपूर्वकं नून मोक्षो जायते। अत एव तत्त्वज्ञानाय प्रयतन्ते साख्या योगाश्च। तथा चोक्तम्—

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसन्।
जटी मुण्डी शिखी वापि मुच्यते नात्र सशय॥

### तत्र तत्त्वविकासक्रमः

त्रिगुणात्मिकायाः प्रकृतेर्महानुपद्यते, महतोऽहङ्कारो जायते, तस्मात् शब्द-स्पर्श रूप-रस-गन्धतन्मात्राणि, एकादशेन्द्रियाणि चाविर्भवन्ति। पञ्चतन्मात्रेभ्यश्च पञ्चभ्यः क्रमश. आकाश-वायु-तेजोऽनिल-पृथिवीनामकानि पञ्च महाभूतान्युत्पद्यन्ते।

तत्र शब्दतन्मात्रादाकाश शब्दगुणकमुत्पद्यते। शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात् शब्दस्पर्शोभयगुणको वायुरुत्पद्यते। शब्दस्पर्शतन्मात्र-

सहिताद् रूपतन्मात्रात् शब्दस्पर्शरूपगुणक तेज उत्पद्यते। शब्दस्पर्शरूपतन्मात्रसहितरसतन्मात्रात् तद्गुणिका शब्दस्पर्शरूपरसवत्य आप उत्पद्यन्ते। शब्दस्पर्शरूपरसतन्मात्रसहितगन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धवती पृथिव्युत्पद्यते। एव क्रमेण पूर्वपूर्वानुप्रवेशेनकाद्वित्रिचतुष्पञ्चगुणकान्याकाशादीनि पृथ्वीपर्यन्तानि पञ्चमहाभूतानि जायन्ते। तथा चोक्त साख्यकारिकायाम्—

प्रकृतेर्महास्ततोऽहङ्कारस्तस्मात् गणश्च षोडशकः।
तस्मादपि च षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥२२॥

देवीभागवतस्य तृतीयस्कन्धे सप्तमेऽध्यायेऽपि—

आकाशस्य गुणश्चैक शब्द एव न चाऽपर।
शब्दस्पर्शौ च वायोश्च द्वौ गुणौ परिकीर्तितौ॥
अग्ने शब्दश्च स्पर्शश्च रूपमेते त्रयो गुणा।
शब्द-स्पर्श-रूप-रसाश्चत्वारो वै जलस्य च।
स्पर्श-शब्द-रसा रूप गन्धश्च पृथिवीगुणा।
एव मिलितयोगैश्च ब्रह्माण्डोत्पत्तिरुच्यते॥ ३।७।४९-५१॥

नारदीयपुराणे च—

वियदेकगुण प्रोक्त द्वौ गुणौ मातरिश्वन।
त्रयस्तेजसि चत्वारि सलिले पञ्च भूमिगा.॥

साख्यदर्शनानुसार सृष्टिक्रमतो लयक्रमो विपरीत उपलभ्यते। सृष्टिसमये यत्तत्त्व यस्मात्तत्त्वादुत्पद्यते लयसमये तत्तत्त्व तस्मिन्नेव स्वकारणे विलीयते। यथा पञ्चमहाभूतानि स्वकारणेषु पञ्चतन्मात्रेषु लीयन्ते। पञ्चतन्मात्राणि एकादशेन्द्रियाणि च स्वकारणेऽहङ्कारे लीयन्ते। स च स्वकारणे महत्तत्त्वे, महाश्च स्वकारणे प्रकृतौ लीयते। प्रकृतिश्च न कुत्रापि लीयते। तथा चोक्त शिवपुराणस्य वायवीयसंहितायाम्—

कूर्मोऽङ्गानि यथा पूर्वं प्रसार्य विनियच्छति।
अव्यक्तप्रभवं सर्वमानुलोम्येन जायते॥
विकाराश्च तथाव्यक्त सृष्ट्वा भूयो नियच्छति।
प्राप्ते प्रलयकाले तु प्रतिलोम्येऽनुलीयते॥
गुणा कालवशादेव भवन्ति विषमा समा।
गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते॥ १०।३८-४०

वायुपुराणे च—

अव्यक्तान् ग्रसते व्यक्त प्रत्याहारे च कृत्स्नश ।५
महदादेर्विकारस्य विशेषान्तस्य सक्षये ॥
स्वयमाचरिते तस्मिन् प्रवृत्ते प्रतिमचरे ।६
आपो ग्रसन्ति वै पूर्व भूमेर्गन्धात्मक गुणाम् ॥
आत्तगन्धा ततो भूमि प्रलयत्वाय कल्पते ।७

**संख्यसृष्टिक्रमचक्रम्**

(१) पुरुष (उदासीन)
(२) प्रकृति:
(३) महान्
(४) अहङ्कार




महाभारतस्य शान्तिपर्वण्यपि स्पष्टतया प्रतिपादितमस्ति यद् अनुलोमक्रमेण तत्त्वानामुत्पत्तिर्भवति । यथा—प्रकृतितो महत्तत्त्व, महतोऽहङ्कार, अहङ्काराञ्च सूक्ष्मभूता तन्मात्रा , ताभ्यश्च पञ्चभूतान्युत्पद्यन्ते, परन्तु तेषा सहार विलोमक्रमणे जायते, यथा पृथिव्या जले, जलस्य तेजसि, तेजसो वायौ, वायोश्चाकाशे लयो भवति । एव सर्वाण्यपि तत्त्वानि स्वस्वकारणेषु लीयन्ते । यथा सागरादुत्थितानि तरङ्गाणि पुनः तत्रैव

शाम्यन्ति तथैव समस्तानि तत्त्वानि अनुलोमक्रमेण उत्पद्यन्ते प्रतिलोम-क्रमेण च स्वकारणभूतेषु तत्त्वेषु लीयन्ते—

यस्माद् यदभिजायेत तत् तत्रैव प्रलीयते ।
लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ॥
अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः ।
गुणा गुणेषु सतत सागरस्योर्मयो यथा ॥
(म० भा० १२।३०६।३१-३२)

सृष्टिप्रलयविचारणायामादावन्ते चैका प्रकृतिरेवावशिष्यते । साख्य-दर्शनानुसार पुरुषस्य न किमपि कार्यं विद्यते, किन्तु तन्मते प्रकृतिरेव कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेप । तच्छायापत्त्या जडाया प्रकृतौ चेतनताऽऽगच्छति, यया सा चेतनवज्जगन्निर्माणकार्यं प्रवृत्ता भवति ।

## पुराणेषु साख्यदर्शनम्

स्वस्वामिनि कर्दमे तपस्तप्तुमरण्यमुपगते देवहूतिर्ब्रह्मणो वचन स्मरन्ती पितुरादेशेन मातु प्रियचिकीर्षया बिन्दुसरे वसन्त तत्त्वग्रामविशेषज्ञ स्वतनय महामुनि कपिल ज्ञानोपदेशार्थं प्रार्थयत् । तत स मातुरभिप्राय विदित्वा पुंसामपवर्गसाधन धिया अभिनन्द्य सजातकारुण्यो भक्ति पुरस्कृत्य साख्य-तत्त्व सविस्तरमुपदिदेश । तदुक्त श्रीमद्भागवते तृतीयस्कन्धे पञ्चविशति-तमेऽध्याये—

पितरि प्रस्थितेऽरण्य मातु प्रियचिकीर्षया ।
तस्मिन् बिन्दुसरेऽवात्सीद्भगवान् कपिल किल ॥५
तमासीनमकर्माण तत्त्वमार्गाग्रदर्शनम् ।
स्वसुत देवहूत्याह धातु सस्मरती वच. ॥
त त्वा गताह शरण शरण्यं स्वभृत्यससारतरो कुठारम् ।
जिज्ञासयाऽह प्रकृतेः पूरुषस्य नमामि सद्धर्मविदा वरिष्ठम् ॥११॥
विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाभिजात ।
तत्त्वाम्नायं यत् प्रवदन्ति साख्य प्रोवाच वै भक्तिवितानयोगम् ॥३१॥

ननु—"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्याऽऽत्मज्ञानादेव मुक्ति प्रतिपाद्यते, न तु तत्त्वज्ञानादिति सांख्योक्त तत्त्वज्ञानं कथ मुक्तिसाधकं भवितुमर्हतीति चेदत्रोच्यते—

आत्मदर्शनरूपज्ञानमेव हृदयग्रन्थिभेदकमहङ्कारनिवर्तकं च निःश्रेयसाय कल्पते। तत्त्वज्ञानादेव विविक्तात्मज्ञान जायते। तत्त्वानि च साङ्ख्यशास्त्र एव समीचीनतया प्रतिपादितानि। तथा च सांख्योक्ततत्त्वज्ञान मुक्तौ परमप्रयोजकम्।

श्रीमद्भागवते तृतीयस्कन्धे षड्विंशतितमेऽध्याये सप्तमश्लोकादारभ्य पञ्चदशश्लोकपर्यन्त साख्यदर्शनपद्धतिमनुसृत्यैव प्रकृतिपुरुषादीनां सम्यग् विवेचन कृत विद्यते। तथा हि—

प्रकृतेः पुरुषस्यापि लक्षण पुरुषोत्तम।
ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥१॥

इति देवहूतिप्रश्ने भगवान् कपिलो ब्रवीति—

यत्तत्त्रिगुणमव्यक्त नित्य सदसदात्मकम्।
प्रधान प्रकृति प्राहुरविशेष विशेषवत् ॥
पञ्चभि पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।
एतच्चतुर्विंशतिक गण प्राधानिकं विदुः ॥
महाभूतानि पञ्चैव भूरापोऽग्निमरुन्नभ।
तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥
इन्द्रियाणि दश श्रोत्र त्वग्दृग्रसननासिका।
वाक्करौ चरणौ मेढ्र पायुर्दशम उच्चते ॥
मनो बुद्धिरहङ्करश्चित्तमित्यन्तरात्मकम्।
चतुर्धा लक्ष्यते भेदो वृत्या लक्षणरूपया।
एतावानेव सङ्ख्यातो ब्रह्मण सगुणस्य ह ॥ ३।१०–१५

सांख्ये यथा सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, महान्, अहङ्कारः, एकादशेन्द्रियाणि, पञ्चतन्मात्राणि, पञ्चमहाभूतानि चेति तत्त्वानि स्वीकृतानि, तद्वत् श्रीमद्भागवतेऽपि चतुर्विंशतितत्त्वानि प्रतिपादितानि—

प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैकादशेन्द्रियम्।
भूतानि चेति सामान्यं चतुर्विंशतिरेव च ॥

साख्यसूत्रे--"अथ त्रिविधदु·खात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ." [१।१] इत्यनेन यथा मोक्षस्वरूप प्रदर्शितम्, तथैव श्रीमद्भागवते तृतीयस्कन्धस्य सप्तविशतितमेऽध्याये प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतै र्गुणै (१) इति प्रथमश्लोकादारभ्य त्रिशच्छ्लोकपर्यन्त मोक्षस्य विवेचन कृतम्। श्रीमद्भागवतस्य चतुर्थस्कन्धे एकत्रिशदध्याये च नारदोक्तमोक्षकथनं साख्यानुसारमेवास्ति यथा—

यथा नमस्यभ्रतम प्रकाशा भवन्ति भूपा न भवन्त्यनुक्रमात्।
एव परे ब्रह्मणि शक्तयस्त्वमू रजस्तम सत्त्वमिति प्रवाह ॥४।३१।७॥

दशमस्कन्धे सप्तचत्वारिंशत्तमेऽध्यायेऽपि साख्यदर्शनानुसारमेव तत्त्वोपदेशः कृतो विद्यते 'एतदन्त. समाम्नायो योगः साख्य मनीषिणाम्' (३२) एकादशस्कन्धस्यैकादशेऽध्याये बद्धमुक्तयोर्विषये साख्यमतमेव प्रचुरमवलम्बितमस्ति। एवमनेकत्र ब्रह्मस्तुतौ च साख्यमतमेवावलम्ब्य देवैर्भगवत· स्तुतिः कृता। तथा हि—

योगिनो य हृदाकाशप्रणिधानेन निश्चला।
ज्योतीरूप प्रपश्यन्ति तस्मै श्रीब्रह्मणे नम ॥
कालात्पराय कालाय स्वेच्छया पुरुषाय च।
गुणत्रयस्वरूपाय नमः प्रकृतिरूपिणे ॥
विष्णवे सत्त्वरूपाय रजोरूपाय वेधसे।
तमसे रुद्ररूपाय स्थितिसर्गान्तकारिणे ॥
नमो बुद्धिस्वरूपाय त्रिधाऽहङ्कृतये नम।
पञ्चतन्मात्ररूपाय पञ्चकर्मेन्द्रियात्मने ॥
नमो नमःस्वरूपाय पञ्चबुद्धीन्द्रियात्मने।
क्षित्यादिपञ्चरूपाय नमस्ते विषयात्मने ॥ ब्र० पु० ७।५

साख्ये यथा पुप्रकृत्योर्विवेकेन मोक्षप्राप्तिः, तथैव श्रीमद्भागवतस्यैकादशस्कन्धे चतुर्विंशतितमेऽध्यायेऽपि भगवता श्रीकृष्णेनोद्धवं प्रति सृष्टिप्रक्रिया, प्रलयप्रकारवर्णनपूर्वक मोक्षस्वरूप च प्रदर्शितम्। तथा हि--

अथ ते सप्रवक्ष्यामि साख्य पूर्वैर्विनिश्चितम्।
यद्विज्ञाय पुमान् सद्यो जह्याद्वैकल्पिक भ्रमम् ॥ १ ॥
तमो रज सत्त्वमिति प्रकृतेरभवन् गुणा·।
मया प्रक्षोभ्यमाणाया· पुरुषानुमतेन च ॥ ५ ॥

एव साख्यविधि' प्रोक्त' संशयग्रन्थिभेदनः ।
प्रतिलोमानुलोभाभ्यां परावरदशा मया ॥२९॥

साख्यसूत्रे यथा—"न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते" [ १।१९ ] इति, साख्यसारे च—

नित्यशुद्धो नित्यमुक्तो नित्यबुद्धो निरञ्जन ।
स्वप्रकाशो निराधारः प्रदीप' सर्ववस्तुषु ॥

इति पद्येनात्मनो नित्यशुद्धबुद्धमुक्तस्वभाव. प्रतिपादित, तद्वत् श्रीमद्भागवतेऽपि— एकादशस्कन्धस्यैकादशेऽध्याये—

वद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुन ।
गुणस्य मायाभूतत्वान्न मे मोक्षो न बन्धनम् ॥२॥
शोकमोहौ सुखं दु.ख देहोत्पत्तिश्च मायया ॥
स्वप्नोऽयमात्मन ख्यातिः ससृतिर्न तु वास्तवी ॥२॥

श्रीमद्भागवतस्य द्वादशस्कन्धे सप्तमाध्याये दशमश्लोकादारभ्य विंशतिश्लोकपर्यन्त साख्यरीत्यैव तत्त्वानां वर्णन कृतमस्ति —

अव्याकृतगुणक्षोभाद् महतस्त्रिवृतोऽहमः ।
भूतसूक्ष्मेन्द्रियार्थाना सभव सर्ग उच्यते ॥११॥

सांख्ये यथा पुप्रकृत्योर्विवेकेन मुक्तिस्तथा श्रीमद्भागवतेऽपि तृतीयस्कन्धस्य सप्तविशतितमेऽध्याये प्रकृतिपुरुषविवेकान्मोक्षप्राप्ति प्रतिपादिता—

भुक्तभोगा परित्यक्ता इष्टदोषा च नित्यश. ।
नेश्वरस्याशुभ धत्ते स्वे महिम्नि स्थितस्य च ॥२४॥

साख्ये यथा प्रकृते. सर्गकारणत्व स्वीक्रियते तथौ श्रीमद्भागवतेऽपि तृतीयस्कन्धस्य षड्विशेऽध्यायेऽपि प्रोक्तमस्ति—

कार्यकारणकर्तृत्वे कारण प्रकृतिं विदु ।
भोक्तृत्वे सुखदु खाना पुरुप प्रकृते परम् ॥८॥

विष्णुपुराणे प्रथमेऽशे द्वितीयेऽध्याये एकोनविंशतिश्लोकादारभ्य पञ्चाशच्छ्लोकपर्यन्त साख्यानुसारमेव सृष्टिक्रम प्रतिपादितोऽस्ति—

अव्यक्त कारण यत्तत्प्रधानमृषिसत्तमै' ।
प्रोच्यते प्रकृति सूक्ष्मा नित्य सदसदात्मकम् ॥१९॥

त्रिगुण तज्जगद्योनिरनादिप्रभवाप्ययम् ।
तेनाग्रे सर्वमेवासीद् व्याप्त वै प्रलयादनु ॥२१॥

अपि च प्रलयसमये प्रकृति-पुरुषयो वियोगे सति समस्त विश्वं प्रकृतौ लीयते । अतो विश्वस्य प्रकृतौ विलयात् प्राकृत प्रलय प्रोच्यते इत्यपि-तत्रैवोक्तम्—

प्रकृतौ सस्थित व्यक्तमतीतप्रलये तु यत् ।
तस्मात् प्राकृति सज्ञोऽयमुच्यते प्रतिसचर ॥२५॥

किञ्च साख्ये यथा गुत्रत्रयसाम्यावस्थापन्नात् प्रधानात् सर्वमुत्पद्यते तथैव विष्णुपुराणेऽपि महदादिक्रमेण व्यक्ताख्यप्रपञ्चस्य सृष्टिः प्रोक्ताऽस्ति—

गुणसाम्यात्ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने ।
गुणव्यञ्जनसम्भूति सर्गकाले द्विजोत्तमः ॥
प्रधानतत्त्वमुद्भूतं महान्त तत् समावृणोत् ॥३३॥

साख्ये यथा पञ्चविंशतितत्त्वानि स्वीकृतानि तथैवात्रापि । ध्रुवो हि तत्र सांख्यतत्त्ववर्णनपुर सरमेव भगवतो विष्णो स्तुति चकार—

भूमिरापोऽनलो वायु खं मनो बुद्धिरेव च ।
भूतादिरादिप्रकृतिर्यस्य रूप नतोऽस्मि तम् ॥
शुद्ध सूक्ष्मोऽखिलव्यापी प्रधानात्परत. पुमान् ।
यस्य रूप नमस्तस्मै पुरुषाय गुणाशिने ॥
( वि० पु० १।१२।५३ ५४ )

मार्कण्डेयपुराणे चतुर्थेऽध्याये पञ्चचत्वारिंच्छ्लोकादारभ्य त्रिपञ्चाशच्छ्लोकपर्यन्त सृष्टि साख्यानुसारमेव प्रतिपादिता—

एका मूर्तिरनिर्देश्या शुक्ला पश्यन्ति ता बुधा ।
ज्वालामालोपरुद्धाङ्गी निष्ठा सा योगिना परा ॥४५॥
सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसस्थानकारिणी ॥४९॥

वायुपुराणे तृतीयचतुर्थाध्याययो. साख्यानुसारमेव सृष्टिः प्रतिपादिता—

यत्तत् स्मृत कारणमप्रमेय ब्रह्म प्रधान प्रकृति प्रसूति. ।
आत्मा गुहो योनिरथापि चक्षु' क्षेत्रं तथैवामृतमक्षर च ॥३।९॥
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च ।
महदादयो विशेषान्ता अण्डमुत्पादयन्ति ते ॥४।६३।

नारदीयपुराणस्य द्विचत्वारिंशत्तमेऽध्याये त्रयोदशश्लोकादारभ्य षट्त्रिंशच्छ्लोकपर्यन्त साख्यरीतिमनुसृत्यैव सृष्टिक्रम. प्रतिपादित:—

अनादिनिधनो देवस्तथा तेभ्योऽजरामर ।
अव्यक्त इति व्याख्यात शाश्वतोऽथाक्षयोऽव्यय. ॥
यत सृष्टानि भूतानि जायन्ते च म्रियन्ति च ।
सोऽसृजत्प्रथम देव महान्त नाम नामत' ॥

मत्स्यपुराणस्य चतुर्थाध्याये तृतीयश्लोकतो द्वात्रिंशच्छ्लोकपर्यन्तं सृष्टिक्रमः साख्यरीत्यैव वर्णित —

दिव्येयमादिसृष्टिस्तु रजोगुणसमुद्भवा ।
अतीन्द्रियेन्द्रिया तद्वदतीन्द्रियशरीरका ॥३॥
दिव्यतेजोमयी भूप ! दिव्यज्ञानसमुद्भवा ।
न मर्त्यैरभित शक्या वक्तु वै मासचक्षुषा ॥४॥
यथा भुजङ्गा सर्पाणामाकाश विश्वपक्षिणाम् ।
विदन्ति मार्ग दिव्याना दिव्या एव न मानवाः ॥५॥

देवीभागवते सप्तमस्कन्धे द्वात्रिंशदध्याये प्रकृतितत्त्वनिरूपण साख्यानुसारमेव कृतम्, ज्ञानस्य चमोक्षार्थत्व साख्यरीत्यैव प्रतिपादितम्—

केचित्ता तप इत्याहुस्तम केचिज्जड परे ।
ज्ञान माया प्रधान च प्रकृति शक्तिमप्यजाम् ।
विमर्श इति ता प्राहु शैवशास्त्रविशारदाः ।
अविद्यमितरे प्राहु वेंदतत्त्वार्थ चिन्तका' ॥७।३२।९-१०॥

स्कन्दपुराणस्य माहेश्वरखण्डे सप्तविंशतितमेऽध्याये साख्यदर्शनानुसारमेव प्रथमेन सृष्टि, द्वितीयेन च प्रलयप्रकारो दर्शित ।

वाराहपुराणस्य द्वितीयेऽध्याये षष्ठश्लोकात् पञ्चविंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सृष्टिक्रम प्रतिपादित —

आदावहं व्योम महत्ततोऽणुरेकैव मत्त. प्रबभूव बुद्धि ।
त्रिधानु सा सत्त्वरजस्तमोऽभि पृथक् पृथक् सत्त्वरूपैरूपेता ॥
तस्मिंस्त्रिकेऽह तमसो महान् स सदोच्यते सर्वविदा प्रधानम् ।
तस्मादपि क्षेत्रविवर्जितो यो बभूव बुद्धिस्तु ततो बभूव ॥

एव द्विपञ्चाशत्तमेऽध्याये च प्रथमश्लोकादारभ्य पञ्चविंशतिश्लोकपर्यन्त मोक्षस्य निरूपण साख्यरीतिमनुसृत्यैव प्रतिपादितम् ।

ब्रह्मवैवर्तपुराणस्य ब्रह्मखण्डे तृतीयेऽध्याये चतुर्थपञ्चमश्लोकयोरपि सृष्टिक्रमः—

आविर्बभूव सर्गादौ पुंसो दक्षिणपार्श्वतः ।
भवकारणरूपाश्च मूर्तिमन्तस्त्रयो गुणाः ॥४॥
ततो महानहङ्कारः पञ्चतन्मात्र एव च ।
रूपरसगन्धस्पर्शशब्दाश्चैतेति सञ्ज्ञकाः ॥५॥

प्रकृतिखण्डस्य च प्रथमाध्याये सप्तमश्लोकपर्यन्तं प्रकृतेः पञ्चविधत्वं प्रतिपाद्य प्रकृतिशब्दार्थः एवमभिहितः—

गणेशजननी दुर्गा राधा लक्ष्मी सरस्वती ।
सावित्री च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता ॥
प्रकृतेर्लक्षणं वत्स ! को वा वक्तुं क्षमो भवेत् ।
किञ्चित्तथापि वक्ष्यामि यच्छ्रुतं धर्मवक्त्रतः ॥
प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता ॥
गुणे प्रकृष्टसत्त्वे च प्रकासो वर्तते श्रुतौ ॥
मध्यमे कृश्च रजसि तिशब्दस्तमसि स्थितः ॥
त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता ।
प्रधानसृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥१७॥

कूर्मपुराणस्य चतुर्थेऽध्याये पञ्चदशश्लोकतश्चतुःपञ्चाशच्छ्लोकपर्यन्तं सृष्टिक्रम एवं प्रतिपादितोऽस्ति—

महेश्वरः परो व्यक्तः चतुर्व्यूहः सनातनः ।
अनन्तश्चाप्रमेयश्च नियन्ता सर्वतो मुखः ॥५॥
अव्यक्तं कारणं यत्तत् नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिश्चेति यमाहुस्तत्त्वचिन्तकाः ॥६॥
प्रधानाच्चोद्यमानाच्च तथा पुंसः पुरातनात् ।
प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम् ॥१६॥
वैकारिकस्तैजसश्च भूतादिश्चैव मानसः ।
त्रिविधोऽयमहङ्कारो महतः संबभूव ह ॥१८॥
पञ्चभूतान्यहङ्कारात्तन्मात्राणि च जज्ञिरे ॥२०॥

प्रधान पुरुपो ह्यात्मा महद्भूतादिरेव च ॥
तन्मात्राणि मनो भूतानीन्द्रियाणि जज्ञिरे ।

एवमेव द्वितीयाध्याये गुणत्रयविशिष्टाना ब्रह्मविष्णुमहेश्वराणा स्वरूपविवेचनं साख्यरीतिमनुसृत्यैव कृतम् ।

तिस्रस्तु मूर्तय. प्रोक्ता ब्रह्मविष्णुमहेश्वरा ।
रजः सत्त्वतमोयोगात् परस्य परमात्मन ॥९१॥
अन्योऽन्यमनुरक्तास्ते ह्यन्योन्यमुपजीविन ।
अन्योऽन्यप्रणताश्चैव लीलया परमेश्वराः ॥९२॥

भविष्यपुराणे ब्राह्मपर्वणो द्वितीयाध्याये त्रिशच्छ्लोकतो द्वात्रिशच्छ्लोकपर्यन्तं सर्गक्रम. साख्यानुसारमव प्रतिपादित —

प्रकृति' सूयते तद्वदानन्त्यान्नापचीयते ।
अव्यक्तात् कर्मजा बुद्धिरहकार' प्रसूयते ॥
आकाशश्चाप्यहकाराद् वायुराकाशसभव ।
वायुस्तेजस्ततश्चाप. अद्भ्योऽथ वसुधोद्गता ॥
मूलप्रकृतयो ह्यष्टौ जगदेतास्ववस्थितम् ।

लिङ्गपुराणस्य तृतीयाध्याये द्वितीयश्लोकतस्त्रयस्त्रिशच्छ्लोकपर्यन्तं सांख्यरीत्यैव सृष्टिक्रमो दर्शित'—

प्रधान प्रकृतिश्चेति यदाहुर्लिङ्गमुत्तमम् ।
गन्धवर्णरसै र्हीन शब्दस्पर्शादिवर्जितम् ॥२॥
सर्गादौ सा गुणैर्युक्ता पुरा व्यक्ता स्वभावत' ।
तामजा लोहिता शुक्ला कृष्णमेका बहुप्रजाम् ॥१३॥
जनयित्रीमनुशेते स्म जुषमाण स्वरूपिणीम् ।
तामेवाजमजोऽन्यस्तु भुक्तभोगा जहाति च ॥१४॥

शिवपुराणे वायवीयसहिताया नवमेऽध्याये षष्ठश्लोकतश्चतुर्विशतिश्लोकपर्यन्त साख्यानुसारमेव सर्गक्रमः प्रतिपादित —

अव्यक्त कारण तत्तदात्मना समनुष्ठितम् ।
महदादिविशेषान्त सृजतीत्यपि समतम् ॥
किन्तु तत्रापि कर्तृत्व नाव्यक्तस्य न चात्मनः ।
अचेतनत्वात् प्रकृतेरज्ञत्वात्पुरुषस्य च ॥७-८॥

परिणामः प्रधानस्य प्रवृत्ति पुरुषस्य च ।
सर्वं सत्यव्रतस्यैव शासनेन प्रवर्तते ॥१३॥

अनादिनिधनो धाता त्वनन्त. पुरुषोत्तमः ।
नस्माद्भवति चाव्यक्त तस्मादात्मापि जायते ।
तस्माद् बुद्धिर्मनस्तस्मात्ततः ख पवनस्ततः ।
तस्मात्तेजस्ततस्त्वापस्ततो भूमिस्ततोऽभवत् ॥

ब्रह्मपुराणस्य वसिष्ठकरालजनसम्वादप्रसङ्गे महाभारतवदेव चत्वारिंशदधिकशततमेऽध्याये च महदादानामुत्पत्तिक्रम चतुर्विंशतितत्त्वानां निरूपणा च कृतमस्ति—

एष वै विक्रियापन्न सृजत्यात्मानमात्मना ।
प्रधान तस्य सयोगादुत्पन्न सुमहत् परम् ॥१९॥
अहङ्कारो महातेजा. प्रजापतिनमस्कृतम् ।
अव्यक्ताद् व्यक्तिमापन्न त्रिद्यासर्ग वदन्ति तम् ॥२०॥

अग्निपुराणे सप्तदशाध्याये द्वितायश्लाकादारभ्य द्वादशश्लोकपर्यन्त साख्यतत्त्वमवलम्ब्य सर्गक्रमा दर्शित.--

व्यक्ताव्यक्त सदग्रेऽभून्न ख रात्रिर्दिनादिकम् ।
प्रकृति पुरुष विष्णु प्रविश्य क्षोभयत्तत. ॥
सर्गकाले महत्तत्वमहङ्कारस्ततोऽभवत् ।
वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥
अहकाराच्छब्दमात्रमाकाशमभवत्तत ।
स्पर्शमात्रोऽनिलस्तस्माद् रूपमात्रोऽनलस्त. ॥
रसमात्रा आप इतो गन्धमात्रा मही स्मृता ।
अहकारात्तामसात्तु तैजसानीन्द्रियाणि च ॥
वैकारिका दश देवा मन एकादशेन्द्रियम् ।२-७॥

पुनरग्रेऽग्निपुराणे विंशतितमेऽध्याये सर्गविषयकवर्णनप्रसङ्गे प्राकृतं र्ग सांख्यानुसारमेव वर्णितम् । तथा हि—

प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ।
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृत. ॥

वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियक. स्मृत' ।
इत्येष प्राकृत. सर्ग' समूतो बुद्धिपूर्वक ॥१-२॥

तत्रेव दशमेऽध्याये च—

प्रधानात् प्रथमं जज्ञे बुद्धि ख्यातिर्मतिर्महान् ।
महत्तत्त्वस्य सक्षोभादहङ्कारस्त्रिधा भवत् ॥
अहङ्कारश्च भूतानि तन्मात्राणीन्द्रियाणि च ।
वैकारिकादहकारात् सत्त्वोद्रिक्तात्तु सात्त्विक. ॥
वैकारिक. स सर्गस्तु युगपत् सप्रवर्तते ।
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ॥
एकादश मनस्तत्र स्वगुणेनोभयात्मकम् ॥
तमोयुक्तादहङ्काराद् भूतनन्मात्रसम्भव ॥१३-१६॥

ब्रह्माण्डपुराणे प्रकृतिखण्डे चतुर्थाध्याये प्रथमश्लोकतो विंशतिश्लोकपर्यन्तं सांख्यानुसारमेव सर्गक्रमो दर्शित:—

आत्मन्यवस्थिते व्यक्ते विकारे प्रतिसहृते ।
साधर्म्येणातितिष्ठेते प्रधानपुरुषौ तदा ॥१॥
तमस्तत्त्वगुणावेतौ समत्वेन व्यवस्थितौ ।
अनुद्रितावनुचरौ तेन प्रोक्तौ परस्परम् ॥२॥
गुणसाम्ये लयो ज्ञेय आधिक्ये सृष्टिरुच्यते ।
सत्त्ववृद्धौ स्थितिरभूद् ध्रुव पञ्चशिखास्थितम् ॥३॥
यदा तमसि सत्वे तु च रजोऽप्यनुगत स्थितम् ॥
रज: प्रवर्तक तच्च बीजेष्वेव यथा जलम् ॥४॥
गुणा वैषम्यमासाद्य प्रसङ्गेन प्रतिष्ठिता ।
गुणेभ्य क्षोभ्यमाणेभ्यस्त्रयो ज्ञेयापि सादरे ॥५॥

पद्मपुराणे सृष्टिखण्डस्य द्वितोयेऽध्याये सर्गक्रम' सांख्यरीत्यैव प्रतिपादित:—

पूर्वं तु पद्मशयनादुत्थाय जगत प्रभु ॥८९॥
गुणव्यञ्जनसंभूत: स्पर्शकाले नराधिप ।

सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ।९०॥
प्रधानतत्त्वेन सम तथा वीर्यादिभिर्वृत ।
वैकारिकस्तैजसश्च भूतादिश्चैव तामस ।।९१।।
त्रिविधोऽयमहकारो महत्तत्त्वादजायत ।
भूतेन्द्रियाणा पञ्चाना तथा कर्मेन्द्रियै सह ।।९२।।
पृथिव्यापस्तथातेजो वायुराकाशमेव च ।।९३।।

वामनपुराणे सारोमाहात्म्ये द्वाविशेऽध्याये साख्यरीतिमनुसृत्यैव सर्गक्रमो वर्णित·—

सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्य लोकमपश्यत ।
सृष्टि चिन्तयतस्तस्य रजसा मोहितस्य च ।।१९।।
रजः सृष्टिगुण प्रोक्त सत्त्व स्थितिगुण विदु ।
उपसहारकाले च प्रवर्तते तमोगुण ।।२०।।

गरुडपुराणस्योनत्रिशदुत्तरद्विशततमेऽध्याये साख्यदर्शनतत्त्वलय-क्रमानुसारमेव न्यासोऽभिहितोऽस्ति । यथा—चतुर्थाध्याये च सर्गक्रमः सांख्यानुसारमेव प्रतिपादितो विद्यते—

इन्द्रियग्राममखिल मनसाभिनिवेश्य च ।
मनश्चैवाप्यहङ्कारे प्रतिष्ठाप्य च पाण्डव ।९॥
अहङ्कार तथा बुद्धौ बुद्धिश्च प्रकृतावपि ।
प्रकृति पुरुषे स्थाप्य पुरुष ब्रह्माणि न्यसेत् ॥१०॥
पञ्चैते वैकृताः सर्गा प्राकृताश्च त्रय स्मृता, ॥६॥
ब्रह्मणो नव सर्गास्तु जगतो मूलहेतव ॥६॥

## इतिहासे साख्यदर्शनम्

महाभारतस्य उद्योगपर्वणि चत्वारिशदध्ययादारभ्य षट्चत्वारिं-शदध्यायपर्यन्तं सनत्सुजातेन धृतराष्ट्र प्रति साख्यमतमवलम्ब्य तत्त्वा-नामुपदेशः कृत· । साख्ये यथा—"अजामेका लोहितशुक्लकृष्णा बह्वीः प्रजाः सृजमाना सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येना भुक्त-भोगामजोऽन्यः ॥" (४।५) इति श्वेताश्वतरश्रुत्यनुसारं प्रकृतेर्लोहित-

कृष्णश्वेतरूपाणि प्रतिपादितानि, तथैव महाभारतस्योद्योगपर्वणि सनत्सुजातीये त्रयश्चत्वारिंशदध्याये प्रकृतेस्त्रिरूपत्वं प्रतिपादितम् । तथा हि—

आभाति शुक्लमिव लोहितमिवाथो कृष्णमथार्जुन काद्रव वा ।
यद् ब्राह्मण पश्यति यत्र विद्वान् क्थ रूप तदमृतमक्षर परम् ॥

महाभारतस्य शान्तिपर्वणि मोक्षधर्मप्रकरणे त्रिशततमेऽध्याये—

साख्ये योगे च मे तात विशेष वक्तुमर्हसि ।
तव धर्मज्ञ ! सर्वं हि विदितं कुरूत्तम ॥ ३००।१

इत्येव साख्य-योगयोर्विशेषजिज्ञासया युधिष्ठिरद्वारा प्रश्ने कृते भीष्मपितामह आह-धर्मराज ! साख्यज्ञा विद्वास साख्यस्य योगमर्मज्ञाश्च योगस्य प्रशसा कुर्वन्ति, उभावपि स्वस्वपक्षोत्कृष्टता साधयितुमुत्तमोत्तमायुक्तीः प्रददति योगमनीषिणो निजपक्षपुष्टये स्वमतश्रेष्ठता प्रतिपादयन्तो ब्रुवते यदीश्वरसत्तास्वीकारमन्तरा न कस्यापि मुक्तिः सम्भवति । अतो मोक्षदातुरीश्वरस्य सत्ताऽवश्य स्वीकार्या—

साख्या साख्य प्रशंसन्ति योगा योग द्विजातय ।
वदन्ति कारणं श्रेष्ठ स्वपक्षोद्भावनाय वै ॥
अनीश्वरः कथं मुच्येदित्येव शत्रुसूदन !
वदन्ति कारण श्रेष्ठ योगा सम्यग् मनीषिण. ॥

एवमध्यायसमाप्तिपर्यन्त सविस्तरं योगविषयं प्रतिपाद्य भीष्मपितामहेन एकाधिकत्रिशततमेऽध्याये सांख्यदर्शनस्य सर्वोत्कृष्टत्व प्रतिपादितम् । तथा हि—

शृणु मे त्वमिद कृत्स्न साख्याना विदितात्मनाम् ।
विदित यतिभिः सर्वै. कपिलादिभिरीश्वरै ॥ ३०१।३
साख्या राजन् ! महाप्राज्ञा गच्छन्ति परमा गतिम् ।
ज्ञानेनानेन कौन्तेय ! तुल्य ज्ञान न विद्यते ॥ ३०१।१००
ज्ञान महद् यद्धि महत्सु राजन् ! वेदेषु शास्त्रेषु तथैव योगे ।
यच्चापि दृष्ट विविधं पुराणे साख्यागत तन्निखिल नरेन्द्र ॥ ३०१।१०८
यच्चेतिहासेषु महत्सु दृष्ट यच्चार्थशास्त्रे नृप ! शिष्टजुष्टे ।
ज्ञान च लोके यदिहास्ति किञ्चित् साख्यागतं तच्च महन्महात्मन् ॥
। ३०१।१०९ ।

हित्वा च देहं प्रविशन्ति मोक्ष दिवौकसो द्यामिव पार्थ साख्याः ।
अतोऽधिकं तेऽभिरता महार्थे साख्ये द्विजा पार्थिव,शिष्टजुष्टे ॥
। ३०१।१११ ।

सांख्ये यथा पञ्चविंशतितत्त्वानि स्वीकृतानि, तथैव महाभारतस्य शान्तिपर्वणि मोक्षधर्मे षडधिकत्रिशततमेऽध्याये तानि तथैव स्वीकृतानि। साख्यविदो विद्वास तत्त्वाना गणना कुर्वन्ति तथा प्रकृति जगत्कारणं कथयन्ति। ते साख्यतत्त्ववेत्तार. प्रकृतिसहितानि चतुर्विंशतितत्त्वानि गणयित्वा पुरुष तेभ्यो जडतत्वेभ्यो भिन्नं पञ्चविंशक तत्त्व निश्चिन्वन्तीति वसिष्ठकरालजनकसवादे प्रोक्तमस्ति तथा हि—

सांख्यदर्शनमेतावत् परिसख्यानुदर्शनम् ।
सख्या प्रकुर्वते चैव प्रकृति च प्रचक्षते ॥ ४२ ॥
तत्त्वानि च चतुर्विंशत् परिसख्याय सत्त्वत ।
साख्या सह प्रकृत्या तु निस्तत्त्व पञ्चविंशकम् ॥
एषा तत्त्वचतुर्विंशत् सर्वाकृतिषु वर्तते ।
यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिन. ॥ ३०२।२९
पञ्चविंशतितमो विष्णु निस्तत्त्वस्तत्त्वसज्ञित ।
तत्त्वसश्रयणादेन तत्त्वमाहु र्मनीषिण ॥ ३०२।३८

साख्ये यथा—सत्त्वरजस्तमसा साम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कार॰, अहङ्कारात् पञ्चतन्मात्राण्येकादशेन्द्रियाणि च, तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गण॰ स्वीकृत., तथैव महाभारतेऽपि-शान्तिपर्वणिदशाधिकत्रिशततमेऽध्याये तत्त्वोत्पत्तिक्रमो वर्णित॰। परं तत्र नवविधः सर्गः स्वीकृतोऽस्ति (१) प्राधानिक. (२) बुद्ध्यात्मकः (३) आहङ्कारिकः (४) मानसः (५) मौलिकः (६) बहुचिन्तात्मकः (७) ऐन्द्रियक. (८) आर्जवक. (९) आर्जवकसर्गश्च। तथा हि—

अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव !
प्रथमं सर्गमित्येतदाहुः प्राधानिक वुधा ॥ १६
महतश्चाप्यहंकार उत्पद्यति नराधिप !
द्वितीयं सर्गमित्याहुरेतद् बुद्ध्यात्मकं स्मृतम् ॥ १७

अहङ्काराच्च सम्भूतं मनोभूतगुणात्मकम् ।
तृतीयः सर्ग इत्येष आहङ्कारिक उच्यते ॥ १८
मनस्तु समुद्भूता महाभूता नराधिप ।
चतुर्थं सर्गमित्येतं मानस विद्धि मे मतम् ॥ १९

अवशिष्टास्तत्रैव २०-२४ पद्येषु द्रष्टव्या ।

साङ्ख्ये यथाऽचेतनापि प्रकृतिर्जगज्जनयति संहरति च, तथैव महाभारतस्य शान्तिपर्वणि मोक्षधर्मपर्वणि चतुर्दशेत्यधिकत्रिशततमेऽध्यायेऽपि–

अचेतना चैव मता प्रकृतिश्चापि पार्थिव ।
एतेनाधिष्ठिता चैव सृजते संहरत्यपि ॥ ३१४।१२

प्रकृतिवादिनो विद्वासः प्रकृतिमव्यक्त कथयन्ति । ततो द्वितीयं महत्तत्त्वमुत्पद्यते, ततस्तृतीयमहङ्कारतत्त्व तत सूक्ष्माः पञ्चतन्मात्र उत्पद्यन्ते । एता अष्टौ प्रकृतय सन्ति । एताभ्योऽष्टभ्य प्रकृतिभ्य षोडश तत्त्वानि उत्पद्यन्ते, यानि विकारा इत्यभिधीयन्ते । यथा पञ्चज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, एकं मन, तथा पञ्चस्थूलपञ्चभूतानिच । एषु आकाशादय. पञ्च, पञ्च ज्ञानेन्द्रियाणि च विशेषा इति प्रोच्यन्ते । एवं साङ्ख्यशास्त्रीयविधिविधानवेत्तार साङ्ख्यमार्गानुरक्ता मनीषिण पुरुषाः एतानि तत्त्वानि वर्णयन्ति –

अव्यक्तमाहु. प्रकृतिं परा प्रकृतिवादिनः ।
तस्मान्महत् समुत्पन्न द्वितीय राजसत्तम ॥
अहङ्कारस्तु महत स्तृतीयमिति न. श्रुतम् ।
पञ्चभूतन्यहङ्कारादाहु साङ्ख्यात्मदर्शिनः ॥
एता प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ।
पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च ॥
एतावदेव तत्त्वाना साङ्ख्यमाहु र्मनीषिणः ।
साङ्ख्ये विधिविधानज्ञा नित्य साङ्ख्यपथे रता ॥

। ३०६।२७-३० ।

साङ्ख्ये यथा जन्मादिव्यवस्थात. पुरुषबहुत्वं स्वीक्रियते, तथैव महाभारतस्य शान्तिपर्वणि मोक्षधर्मप्रकरणे पुरुषबहुत्वप्रतिपादनमुपलभ्यते । तथा हि—

बहव. पुरुपा राजन् ! साख्ययोगविचारिणाम् ।
नैवमिच्छन्ति पुरुषमेक कुरुकुलोद्वह ॥
अव्यक्तैकत्वमित्याहुर्नानात्व पुरुषेस्तथा ।
सर्वभूतदयावन्त केवल ज्ञानमास्थिता. ॥ ३१५।११ ।

साख्ये यथा प्रकृतिपुरुषसयोगात् सर्ग उत्पद्यत इति स्वीक्रियते, तथैव महाभारतेऽपि शान्तिपर्वणि पञ्चाधिकत्रिशततमेऽध्याये प्रकृतिपुरुषयोः सम्बन्ध , स्त्रीपुरुपदाम्पत्यसम्बन्ध इव प्रोक्तोऽस्ति यथा पुरुष विना स्त्री गर्भं धारयितु समर्था न भवति तथैव स्त्रिय विना पुरुषोऽपि किमपि शरीरं निर्मातु न शक्नोति । अत उभयो पारस्परिकेण सम्बन्धेन परस्पर गुणाश्रयणात् कस्यचित् कायस्य निर्माण भवति । प्राय सर्वासु योनिषु एपैव स्थितिरस्ति । यदा स्त्री ऋतुमती भवति तदा रत्यर्थं पुरुषेण तस्याः सम्बन्धे सति उभयो गुणमिश्रणेन शरीरोत्पत्ति जायते तथाहि—

क्षराक्षरयोरेप द्वयो सम्बन्ध इष्यते ।
स्त्री पुसो वापि भगवन् सम्बन्ध स्तद्वदुच्यते ॥
ऋते तु पुरुष नेह स्त्री गर्भ धारयत्युत ।
ऋते स्त्रिय न पुरुषो रूप निर्वतयेत्तथा ॥
अन्योन्यस्याभिसबन्धादन्योऽन्यगुणसश्रयात् ।
रूप निवर्तयत्येतदेव सर्वासु योनिषु ॥
रत्यर्थमभिसबन्धाद् ओन्यगुणसश्रयात् ।
ऋतौ निवर्त्यते रूप तद्वक्ष्यामि निदर्शनम् ॥ ३०५।१-४ ।

शान्तिपर्वणि मोक्षधर्मे षट्त्रिशदधिकद्विशततमेऽध्याये एकोनत्रिशच्छ्लोकादारभ्यैकचत्वारिशच्छ्लोकपर्यन्त साख्ययोगयोर्वैलक्षण्यस्य विवेचनं कृतमस्ति, भीष्मपर्वणि च पञ्चविशत्यध्यायादारभ्य द्विचत्वारिंशद्ध्यायपर्यन्तं श्रीमद्भगवद्गीताया साख्यसिद्धान्तवर्णनं विस्तरत. कृतम् ।

साख्ये यथा त्रिविध दु ख हेयम्, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषसयोगद्वारा चाविवेको हेयहेतु, विवेकख्यातिस्तु हानोपायः, त्रिविधदु खात्यन्तनिवृत्ति पुरुषार्थो वर्णित.; तद्वदत्रापि शोकाक्रान्तस्यार्जुनस्य मोहमपाकर्तुं प्रवृत्तो भगवान् श्रीकृष्णोऽपि गीताया प्रोक्तवान्—

अशोच्यानन्वशोचस्त्व प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिता. ॥२।११

अपि च सांख्ये यथाऽऽत्मनो नित्यत्व विभुत्वं निर्गुणत्व च प्रदर्शितम्, तथैवात्रापि—

न त्वेवाहं जातु नासं न त्व नेमे जनाधिपा ।
न चैव न भविष्याम: सर्वे वयमत: परम् ॥ २।१२

साख्ये यथा पुम कूटस्थत्वेन सत्त्वरजस्तमस्त्रिगुणात्मिकाया: प्रकृतेरेव जगदाकारेण परिणामित्व जगत सुखदु खमोहात्मकत्वेन चानुमतानि प्रकृत्यादितत्त्वानि पुरुषादतिरिच्यन्ते, तथैव गीतायामपि पुरुषस्य प्रतिपादनम् । महाभारतस्य शान्तिपर्वण्यपि—

कूटस्थोऽक्षर अव्यक्तोनिर्लेपो व्यापक: प्रभु ।
प्रकृते परतो नित्यमिन्द्रियैरप्यगोचर ॥ १८२।११

शान्तिपर्वणि मोक्षधर्मे च द्व्यशीत्यधिकशततमेऽध्याये त्रयोदशश्लोकत एकोनविंशतिश्लोकपर्यन्तं साख्यरीत्यैव सृष्टिप्रकारो वर्णित॰ ।

एवप्रकारेण पुराणेतिहासयो॰ साख्यदर्शनस्य तत्सिद्धान्तस्य च यत्र तत्र सप्रपञ्च दिग्दर्शन विद्यते ।

त्रिगुणात्मकेऽस्मिन् ससार आध्यात्मिकाधिभौतिकाधिदैविकदु खदु.खिनाना मानवानां शाश्वतशान्तये भगवान् कपिलस्तत्त्वज्ञानाधिकारिणे स्वप्रियशिष्याय आसुरये परमपुरुषार्थसाधकाना प्रकृतिपुरुषविवेकप्रयोजकाना पञ्चविंशतितत्त्वानामुपदेश कृतवान् । स च पञ्चशिखाचार्याय तानि तत्वान्यादिदेश । तेन च षष्टितन्त्रनामक महाग्रन्थ निर्माय साख्यदर्शनस्य महान् विस्तार कृत । पर कालविपर्ययवशादद्यत्वे स ग्रन्थो नोपलभ्यते । ईश्वरकृष्णेन तु पञ्चशिखाचार्यस्य षष्टितन्त्रस्य सार गृहीत्वा तच्छिष्येभ्यश्च तद्रहस्य विज्ञाय पञ्चविंशतितत्त्वजिज्ञासूना मुमुक्षूणा कृते त्रिविधदु खनिवर्तक तत्त्वज्ञान साख्यशास्त्ररूपेणावतारित साख्यकारिकायाम् । तदुक्त तेनैव स्वयम् साख्यकारिकाया अन्ते—

एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृत तन्त्रम्॥

शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभि, ।
सक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥

यद्यपीश्वरकृष्णः साख्यकारिकायामात्मान कपिलशिष्यपरम्पराया गणितवान्, किन्तु महाभारते कपिलेश्वरकृष्णयोर्मध्ये गार्ग्योलूकप्रभृतीनामपि नाम निर्दिष्ट वर्तते ।

प्रथत उपनिपत्सु च साख्यदर्शनस्य यत्स्वरूपमुपलभ्यते, तत् सेश्वरमेव साख्य प्रतीयते, यतो हि तत्र प्रकृतिपुरुषाभ्या परमपि ब्रह्मण सत्ता स्वीकृताऽस्ति। एवमितिहासे पुराणेपु च सर्वत्र सेश्वरस्यैव साख्यस्य निरूपणं विद्यते। महाभारते श्रीमद्भागवतादिपुराणेष्वपि प्रकृतिपुरुषयोरुपरि ईश्वरस्य सत्ता स्वीक्रियते। तथा हि—

प्रधानपुरुषौ चापि प्रविश्यात्मेच्छया हरि ।
क्षोभयामास सप्राप्ते सर्गकाले व्ययाव्ययौ ॥
यथा सन्निधिमात्रेण गन्ध क्षोमाय कल्पते ।
मनसो नोपकर्तृत्वात् तथासौ परमेश्वर ॥
(वि० पु० १।२।२९,३०)

अथ भाव प्रलयकाले-परमात्मा आत्मनि । तुष्णी स्थितौ स्वाशभूतौ परिणम्य परिणामिनौ उपादानका निमित्तभूतौ प्रकृतिपुरुषौ स्वकालशक्त्या उद्बुद्धेच्छाशक्त्या सयोज्य सृष्ट्युन्मुखौ चकार। सन्निधिमात्रेण गन्धो मनसः क्षोमाय जायते, नपूपकर्तृत्वान्नापि तदमुकूलक्रियाकारित्वादित्यर्थ ।

प्रभाताया तु शर्वर्या प्रधानपुरुषावुभौ ।
प्रविश्य क्षोभयामास मायायोगान्महेश्वर ॥
ततः पुनरशेषाणा भूताना प्रभवाप्ययात् ।
अव्यक्तादभवत् सृष्टिराज्ञया परमेष्ठिनः ॥
(शिवपुराणे वायवीयसहितायाम् ।१०।२२,२३)

इत्यादिना यद्यपि पुराणेतिहासयो परमेष्ठिन आज्ञया प्रधानात् सृष्टि प्रतिपादिता, किन्तु ब्रह्मसूत्रनिर्दिष्टं साख्यकारिकाया च वर्णितं साख्यं निरीश्वरमेवास्ति। एतन्नये सृष्टिकार्ये नेश्वरस्य काप्यावश्यकताऽस्ति। यथा मानवशीरे स्वभावतो लोमान्युत्पद्यन्ते, तथैव प्रकृते समस्तं

जगज्जायते। यतो हि साङ्ख्यानुसारं प्रधाना प्रकृतिरेव समस्तं प्रपञ्चं निर्माति। तस्यै कस्यापि प्रेरणाया नास्त्यावश्यकता।

वस्तुतो महामुने कपिलादारभ्य वार्षगण्यपर्यन्त सांख्यदर्शनस्य सर्वे आचार्या ईश्वरवादिन एवासन्, किन्तु निरीश्वरस्य साख्यस्य परम्परा ईश्वरकृष्णकृतसांख्यकारिकात एवोपलभ्यते।

कियन्त आलोचका कथयन्ति यदीश्वरकृष्णो वसुबन्धुप्रभृतीना बौद्धविदुषा निरीश्वरवादेन प्रभावितो भूत्वा प्राचीन सेश्वरं साख्यमभिनव-रूपेण परिवर्त्य निरीश्वरवादाय प्रश्रय दत्तवान्। अत एव तेन साख्य-कारिकाया प्रकृतिपुरुषावन्तिमे तत्त्वे मत्वा तत्त्वाना विवेचन कृतम्, नतु तयोरुपरि परमेश्वरसत्ता स्वीकृता।

परमैतिहासिक पौराणिक च सेश्वरं साख्य प्रकृतिपुरुषयो सयोगार्थ-मीश्वरस्यावश्यकतामनुभवति। तन्मते पुष्करपलाशवन्निर्लेपस्य निरीहस्य पुरुषस्याचेतनायाश्च प्रकृते स्वय सयोगो न भवितुमर्हति। अतस्तयोरुपरि ईश्वरसत्तास्वीकार आवश्यक, यत्प्रेरणया तयो सयोगो जायेत।

यस्य गुणै साकं सम्पर्को भवति स गुणवानुच्यते, यश्च गुणसंसर्ग-रहित स निर्गुण कथ्यते। प्रकृति स्वभावाद् गुणवती ज्ञानरहिता चास्ति न तस्या कस्यचिद्वस्तुतो ज्ञान विद्यते, तद्विपरीत पुरुषस्तु स्वभावत एव ज्ञानी निर्गुणश्चास्ति। स सतत जानाति यन्मत्त पर किमप्युत्कृष्ट तत्त्वं नास्ति। अत पुराणादौ प्रकृतिरचेतनाभिमता किन्तु, पुरुषो नित्यत्वाद-क्षरत्वादविनाशित्वात् सर्वज्ञत्वाच्च चेतन स्वीक्रियते—

अव्यक्तस्तु न जानीते पुरुषो ज्ञ स्वभावत।
न मत्त परमोऽस्तीति नित्यमेवाभिमन्यते॥३१५।४
अनेन कारणेनैतदव्यक्त स्यादचेतनम्।
नित्यत्वादक्षरत्वाच्चाक्षयत्वान्न तदन्यथा॥३१५।४५

यथाऽयस्कान्तस्य समुखे जडेऽपि लौहे गतिरुत्पद्यते, तथैवेश्वरसन्नि-धानमात्रेणैवाचेतनायां प्रकृतौ चैतन्यमुपजायते। तेन सचेतनेव सा जगतः सृष्टौ प्रवर्तते।

## उपसहार :

महाभारतानुसारं साख्येन समान किञ्चिद् ज्ञान नास्ति, योगेन सदश किमपि वल नास्ति, यतोहि उभयोरेकमेवास्ति लक्ष्यम्, तौ द्वावपि साख्य-योगौ मृत्युनिवारकौ स्तः—

नास्ति साख्यसमं ज्ञान नास्ति योग समं वलम् ।
तावुभावेकचर्यौ हि तावुभावनिधनौ स्मृतो ॥
( म. भा. शा. प. ३१६।२ )

योगिनो हि यत्तत्त्व साक्षात्कुर्वन्ति तदेव तत्त्वं साख्यज्ञानिनोऽपि प्राप्नुवन्ति । अतय· साख्ययोगौ फलदष्ट्या एक मनुते स एवास्ति बुद्धिमान्—

यदेव योगा पश्यन्ति साख्यैस्तदनुगम्यते ।
एकं साख्या च योगं च य पश्यति स बुद्धिमान् ॥ १०५।१९

योगिनो हि योगसाधनया यत्तत्त्व साक्षात्कुर्वन्ति तदेव परमात्मतत्त्वं सांख्यैरपि दृश्यते । अतो य· साख्य योग च एक पश्यति स एवास्ति तत्त्वज्ञानी—

यदेव योगा पश्यन्ति तत् साख्यैरपि दृश्यते ।
एकं साख्य च योग च य पश्यति स तत्त्ववित् ॥ ३१६।४॥

एव साख्यदर्शनस्य मूलभूता सिद्धान्ता वेदे, उपनिषत्सु, महाभारते, पुराणेषु चोपलभ्यन्ते । सर्वप्रथम साख्यदर्शनस्य दर्शनमृग्वेदस्य नासदीय-सूक्ते भवति । श्वेताश्वतरोपनिषदि तु साख्यतत्त्वाना ज्ञानं सर्वोत्कृष्टं साधन स्वीकृतमस्ति । कठोपनिषदि साख्यस्य तत्त्वाना तारतम्येनोल्लेखो वर्तते । छान्दोग्योपनिषदि च साख्यदर्शनानुसारमेव सत्त्वरजस्तमसा सुन्दरं वर्णनं विद्यते । महाभारतस्य शान्तिपर्वणि जनकपञ्चशिखसवादे, युधिष्ठिरभीष्मपितामहप्रश्नोत्तरे, वसिष्ठकरालजनकसंवादे याज्ञवल्यजनक-सम्वादे च साख्यदर्शनस्य प्रमुखाणा सिद्धान्तानां सयुक्तिक निरूपणं विद्यते । श्रीमद्भागवतस्य तृतीयस्कन्धे कपिलदेवहूतिप्रश्नोत्तरे एकादशे स्कन्धे च श्रीकृष्णोद्धवसवादेऽपि साख्यतत्त्वाना सविस्तर विवेचन कृतमस्ति । एव तत्तत्पुराणेषु साख्यसिद्धान्ता यत्र तत्रोल्लेख उपलभ्यते, येन तस्य प्राचीनता, महत्त्वोपयोगिता, उपादेयता च प्रतीयते ।

## सप्तम परिच्छेदः

## व्रतोत्सवविमर्शः

समस्ते संसारे व्रतान्युत्सवाः पर्वाणि च कस्मिंश्चिन्नियतसमये एव भवन्ति। अतस्तत्तद्देशीयव्रतोत्सवादीना ज्ञानाय तत्र तत्र प्रचलितानां कालविभागानां ज्ञानमत्यावश्यकमस्ति। एतन्नियमानुसार यावद् भारतीय-कालविभागस्य सम्यग् ज्ञान न भवेत् तावद् भारतीयव्रतोत्सवादीनां विज्ञानरहस्यं न स्फुटीभवितुमर्हति।

भारतीयव्रतोत्सवादिषु सवत्सर-अयन-ऋतु-मास-पक्ष-तिथि-वार-नक्षत्रात्मकः, अष्टप्रकारक काल उपयुज्यते। एकस्मिन् सवत्सरे षण्णाम् ऋतूना परिवर्तो भवति।

तथा चोक्तं क्षीरस्वामिना अमरकोषव्याख्यायाम्—"सर्वर्तुपरिवर्तस्तु स्मृतः सवत्सरो बुधै" (कालवर्गः २०) इति। निरुक्ते यास्काचार्यस्तु—"संवत्सरः वसन्तेऽस्मिन् भूतानि (४।४।२७) सर्वेषामृतूनामेकवारं परिवर्तने यावान् समयो व्यत्येति तावान् कालः सवत्सरो ज्ञेय" इत्युक्तवान्।

यद्यपि सवत्सरः सावन-सौर-चान्द्र-नाक्षत्र-बार्हस्पत्यभेदेन पञ्चधा भवति। तथापि भारतीयव्रतोत्सवेषु चान्द्रसवत्सरस्यैव प्राय उपयोगो भवति। वङ्ग-नेपाल-पञ्जावप्रान्तेषु सौर वर्षमधिकं व्यवह्रियते। सवत्सरः सूर्यस्य परिभ्रमणेन सम्बद्धोऽस्ति। अतो भगवान् सूर्यः संवत्सरात्मकस्य कालस्य अधिदेवताऽस्ति। यदि सूर्यो नोदियात् तदा सवत्सरो न सम्भवेत्, नापि कालज्ञान जायेत। अत एवोक्तम् ऋग्वेदे—

> सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
> त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः ॥ (२।३।१४।)

सूर्यस्य गतिरयनं कथ्यते। एकस्मिन् सवत्सरेऽयनद्वयं भवति, दक्षिणायनमुत्तरायणञ्च। सूर्यस्य कर्कसङ्क्रान्तितो धनसंक्रान्तिपर्यन्तं दक्षिणायनं भवति, तत्र श्रावण-भाद्रपद-आश्विन-कार्तिक-मार्गशीर्ष-पौषाख्याः षण्मासा व्यतियन्ति। मकरसंक्रान्तितो मिथुनसङ्क्रान्तिं यावद् उत्तरायणमुच्यते,

अत्र माघ-फाल्गुन-चैत्र-वैशाख-ज्येष्ठाषाढाख्या षण्मासा भवन्ति। उत्तरायणे दिनानि वृहन्ति भवन्ति। अतोऽत्रप्रकाशाधिक्य जायते। दक्षिणायने च रात्रिर्वर्द्धतेऽहश्चापचीयते। तत्र रात्रेर्महतीत्वाद् अन्धकाराधिक्यं भवति। प्रकाशो देवस्वरूपोऽन्धकारश्चासुररूपो मन्यते। अत एवोत्तरायणं देवाना दिन दक्षिणायनञ्च रात्रिरभिमताऽस्ति। प्रकाशप्राधान्येन देवानां दिनत्वादुत्तरायण शुभकृत्येषु प्रशस्नतर मन्यते। हिन्दूना समस्तानि शुभकृत्यानि उत्तरायणे एव प्रशस्तानि भवन्ति।

चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि।
शुक्लपक्षे समग्र तु तदा सूर्योदये सति ॥ १।२५ ॥

इति ब्रह्मपुराणवचनानुसार ब्रह्मदेवश्चैत्रमासस्य शुक्लपक्षे प्रतिपदि तिथौ सूर्योदयसमये दृश्यमानस्यास्य प्रपञ्चस्य सृष्टि समारब्धवान्। अत इयं तिथिर्वत्सरारम्भस्य प्रथम दिन मन्यते।

यद्यपि वत्सरारम्भदिवसविषयेऽनेकानि मतानि प्रचलन्ति। केचन मार्गशीर्षमासमेव वत्सरारम्भं मन्यन्ते। अत एव अग्रे हायनमस्येति व्युत्पत्त्या मार्गशीर्षस्याग्रहायणमप्येक नाम प्रचलितमस्ति। केचिच्च शरदृतौ वर्षर्तौ वा वत्सरारम्भ स्वीकुर्वन्ति। अत एव तेषा मते संवत्सरस्य शरद् वर्षं वा नामान्तरमुपलभ्यते। तथापि पूर्वोक्तपुराणवचनप्रामाण्यात् चैत्रमास एवाधिकृता यवर्षारम्भोऽभिमत' शास्त्रविदा समाजे।

अपि च, चैत्राद्वर्षारम्भो वैज्ञानिकोऽप्यस्ति। यतो हि चैत्र-वैशाखौ वसन्तर्तुरुच्यते। वसन्तश्च नवीनपत्रपुष्पादिद्वारा प्रकृतेर्नवशृङ्गारसामग्रीसमुपस्थापक सुरभितसुमनसमूहसुशोभितमधुरतामयमधुमासप्रवर्तकश्चारुचन्द्रिकाचमत्कृतिकारक ऋतुराजोऽस्ति। वसन्ते हि वृक्षलतादयो जीर्णशीर्णानि पर्णानि विमुच्य नवीनैरङ्कुरपुष्पफलोद्गमैरानन्दयन्ति समस्तं ससारम्। अतो वसन्ते एव वर्षारम्भ समुचितः प्रतिभाति।

फाल्गुनशुक्लपूर्णिमाया होलिकादाह कृत्वा चैत्रकृष्णप्रतिपदि होलिकामहोत्सवः क्रियते। शीते व्यतीते वसन्तकालस्योपस्थितौ चन्दनेन सह आम्रमञ्जरीप्राशनेन मानवो वर्षपर्यन्त सुखी भवति। यथा वैशाखेऽक्षयतृतीयायां सत्ययुगस्यारम्भात् तद्दिनस्याधिकं महत्त्वमस्ति, तथैव चान्द्रमासानुसारं वसन्ते वर्षारम्भस्याधिको महिमा विद्यते। यथा मनुष्याः

स्वजन्मतिथीनामुत्सव कुर्वन्ति, तथैव नवीनवर्षात्मकस्य कालस्य प्रारम्भे होलिकोत्सव कुर्वन्ति, येनाग्रिम वर्षे महदानन्दस्य कारण स्यात्। अत्रोत्सवे शुभकामनया सर्वे. समानरूपेण सहर्षं मिलित्वा सर्वत्र प्रेमव्यवहारस्य प्रथा प्रचलिताऽस्ति। अस्मादेव समयाद् ऋतुराजस्य वसन्तस्यारम्भो जायतेऽतो होलिकोत्सवो महत्त्वपूर्ण पर्वास्ति। विधिपूर्वक होलिकोत्सवस्य सम्पादनेन वर्षपर्यन्तमासुखबाधाया निराकरण भवति। पुराणेषु लिखितमस्ति यदस्मिन्नेव दिने भक्तराज प्रह्लाद वह्नौ भस्मसात्कर्तुं तस्य पितृस्वसा होलिकया महान् प्रयत्न कृत आसीत्, किन्तु कर्तुमकर्तुमन्यथाकर्तुं सर्वथा समर्थस्य अघटितघटनापटीयसो भगवतो विष्णो कृपया तस्य किमप्यनिष्ट न जातम्, प्रत्युत सा दुष्टा राक्षसी स्वयमेव भस्मसादभूत्।

भविष्योत्तरपुराणे एका आख्यायिका उपलभ्यते। तदनुसार ढुण्ढा-नाम्न्या राक्षस्या दमनार्थ महोत्सवोऽय समारब्ध। कुत्रचिद् होलिकोत्स-वोऽय कामदमनमूलको महोत्सवो मन्यते। अस्मिन्नेव दिने जगत्सहर्ता भगवान् सदाशिव स्वकीयललाटस्थतृतीयनेत्रान्निर्गतेन क्रोधाग्निना जगद्विजयिन मदन भस्मसात् कृतवान्। अतो महोत्सवस्यास्य' महत्त्वमधिकमस्ति। अपि च, अस्मिन्नेव दिने विष्णो पूर्णावतारस्य भगवत श्रीकृष्णचन्द्रस्य राधया सह दोलोत्सवो मृत्युलोके प्रारब्ध', यो हि गोलोके नित्य प्रचलति। एभि कारणकलापैरेकस्य वर्षस्यान्तेऽग्रिमस्य च वर्षस्य प्रारम्भे परमानन्दजनकोऽय महोत्सवो महता समुल्लासेन मन्यते भारतवर्षे सर्वैं मनुष्यैः।

वेदकालत एव भारतीयसमाजो ब्राह्मण क्षत्रिय-वैश्य-शूद्रभेदेन चतुर्षु भागेषु विभक्तोऽस्ति। ये चत्वारो वर्णा कथ्यन्ते। एषु चतुर्षु वर्णेषु ब्राह्मणानां प्रधान पर्व द्विजातीना मुख्यकर्मणा वेदाध्ययनेन सह सम्बद्धं श्रावणीकर्मास्ति, रक्षाबन्धनञ्च समस्तस्य समाजस्य शुभाशसया सबद्धं प्रवर्तते। विजयदशमी क्षत्रीयाणा मुख्य पर्व विद्यते, यतो हि तत्र शस्त्रादीना प्रामुख्यमस्ति। दीपावली वैश्याना मान्य पर्व विद्यते, यतो हि तत्र लक्ष्मीपूजन वैभवप्रदर्शनञ्च मुख्यमस्ति। होलिकामहोत्सवश्च शूद्राणा प्रधान पर्व विद्यते, यतोऽत्र गालीप्रदानपूर्वकं मनोविनोदस्य पारस्परिकामोदप्रमोदयो सम्पर्कस्य च प्रामुख्यमस्ति। एव विभागे सत्यपि सर्वेषु पर्वसु समेषा भारतीयाना जनानां निश्चप्रचं समानः समादरो दृश्यते। एव चतुर्णा वर्णाना तत्तत्पर्वभि' विशेषतस्सम्बन्धस्य विद्यमानत्वेऽपि

यस्य कस्याप्येकस्य वर्णस्य कार्यं समस्तस्य समाजस्य कार्यमस्ति। अत एव सर्वे वर्णा. सर्वेषा व्रतोत्सवादीना सहर्ष समान मान कुर्वन्ति, यथासम्भवं स्वशक्त्या तदनुतिष्ठन्ति सम्यग्व्यहरन्ति च।

सर्गादौ भगवता प्रजापतिना यज्ञसहिता· प्रजा सृष्ट्वा प्रोक्त यदनेन यज्ञेन यूयमुत्तरोत्तरामभिवृद्धि लभध्वम्। एष यज्ञाख्यो धर्मो नवनवानां वस्तुनामुत्पादनद्वारा युष्माकमभिमतानि पूरयिष्यति—

सहयज्ञा प्रजा सृष्ट्वा पुरोवाच प्रजापति।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ (गीता ३।१०

"यज्ञेन यज्ञमयजन्त देवा." इति यजुर्वेदमन्त्रानुसारं मानवानां कल्याणार्थे प्रथम देवैरेव यज्ञ समारब्ध। अतो यज्ञो मानवाना मुख्यो धर्मः प्रतिपादितोऽस्ति। शास्त्रेषु दानस्यात्यतिशयमहत्वमङ्कितमस्ति। बृहदारण्यकोपनिषद्येकमतिसुन्दरमुपाख्यानमुपलभ्यते।

एकदा देवा मनुष्या असुराश्च प्रजापते समीपमुपस्थाय उपदेशार्थं प्रार्थना चक्रु। ततस्तेन प्रत्येक द० द० द० इत्युक्त्वा ते पृष्टा अवगत भवद्भि? तदनु तैरुक्तम्—ॐ अवगतमस्माभि, भवता अस्मान् प्रति क्रमश दाम्यथ, दत्त, दयध्वमित्युक्तम्। तदैव दैवी वागपि तमेवार्थमनुजगाद। "तदेतदेवैषा दैवी वागनुवदति स्तनयित्नु· द० द० द० इति दाम्यथ, दत्त, दयध्वमिति, तदेतत् त्रय शिक्षेरन् दम दान दयामिति।५।१। अस्मिन् उपाख्याने देवसदृशेभ्य उत्कृष्टपुरुषेभ्य इन्द्रियजयस्य, असुरेभ्यः क्रूरताप्रधानहिंसकपुरुषेभ्यो दयाया, साधारणपुरुषेभ्यो दानस्य चोपदेशो दत्तोऽस्ति। अत. श्रुत्यनुसार सर्वैर्यथाशक्ति दानमवश्य प्रदेयम्।

कर्मयोगे यावत्तपसोऽस्ति महत्त्व न तावदस्त्यन्यस्य कस्यापि। उपनिषत्सु स्थाने स्थाने तपसो महत्त्व प्रदर्शितमस्ति। श्रीमद्भागवते लिखितमस्ति यत् सर्गादौ लोकपितामहो भगवान् ब्रह्मा सृष्ट्यर्थ स्वमनसि चिन्तयन् त प. इत्यक्षरद्वय श्रुतवान्, यदकिञ्चनाना परम धनमुच्यते—

स चिन्तयन् द्व्यक्षरमेकदाम्भस्युपाशृणोद् द्विर्गदित वचो विभु।
स्पर्शेषु यत्षोडशमेकविंशं निष्किञ्चनाना नृप! यद्धन विदुः॥ २।९।६॥

तदनुसारं विधाना दुश्चरं तपश्चचार। परिणामे प्रसन्नो भूत्वा भगवान् आविर्भूय प्रोवाच— तप: साक्षाद् मम हृदयमस्ति। अहञ्च तपस आत्मास्मि। अहं तपसैवेदं जगत् सृजामि पालयामि संहरामि च—

तपो मे हृदयं साक्षादात्माहं तपसोऽनघ।
सृजामि तपसैवेदं ग्रसामि तपसा पुन:॥
बिभर्मि तपसा पूर्वं वीर्यं मे दुश्चरं तप:॥

तपो हि प्राचीनस्य भारतस्यामूल्यो निधिरासीत्। ऋषयस्तु तपोधना एवोच्यन्ते स्म, न केवलमृषय एव राजानोऽपि स्वजीवने तपस: प्राधान्यं स्वीकृत्य वार्द्धक्ये विषयेभ्यो मनो नियम्य पुत्रे राज्यभारं समर्प्य कायक्लेशमगणयित्वा तपस्तप्तुमरण्यं प्रविशन्ति स्म। अत एव भगवान् मनुरपि दुष्करस्य दुरापस्य च कार्यस्य तप: साध्यत्वमुक्तवान्—

यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम्।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम्॥

आर्यजातेर्जीवनं धर्ममयमस्ति। धर्मस्य यज्ञदानतपांसि त्रीणि प्रधानान्यङ्गानि आवश्यककर्तव्यत्वेन शास्त्रेषु निर्दिष्टानि सन्ति। एषां त्याग: कदापि नोचित:। यत एतानि त्रीणि मनीषिणामपि पावनानि सन्ति। अत एवोक्तं गीतायां भगवता श्रीकृष्णेनार्जुनं प्रति—

यज्ञो दानं तप: कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ १८।५॥

हिन्दुजातेर्व्रतोत्सवेष्वेषां त्रयाणामेव समावेशो दृश्यते। अतो नियमितरूपेण व्रतोत्सवानुष्ठानस्य व्यवस्था हिन्दुसमाजे प्रवर्तते। समाजविज्ञानानुसारं धर्ममयजीवनयापनस्याज्ञा पुराणादिषु शास्त्रेषु प्रदत्ताऽस्ति। चरित्रसंगठनार्थे व्रतोत्सवो महानस्ति हितकारी। व्रतेषूपवासस्य प्राधान्याद् व्रतं तपोधर्मस्य मुख्यमङ्गमस्ति। व्रतोत्सवस्य तपोधर्ममूलकत्वेऽपि तत्र दानधर्मयज्ञधर्मयोरपि समावेशो विद्यते। तत्रत्यानामादर्शचरित्राणामनुशीलनेन मनस: समुन्नतौ चरित्रसंगठने च महत् साहाय्यमवाप्यते। व्रतोत्सवानामनुष्ठानेन आयुष: आरोग्यस्य ऐश्वर्यस्य च लाभो भवति। श्रद्धापूर्वकं भारतीयव्रतोत्सवेष्वनुष्ठितेष्वन्नवस्त्रादिदानस्य, नियमसंयमोपवासादिरूपस्य तपस:, भगवत्प्रीतिसम्पादनदैवीजगत्संवर्द्धनादिरूपस्य यज्ञस्य च समावेशाद् भक्त्या तत्पालनमत्यावश्यकमस्ति।

तस्मात् समस्तस्य जगतोऽत्यन्तमुपकारित्वाद् व्रतानि उत्सवाश्च अनिवार्यतया सर्वेषां मनुष्ठानीयतामर्हन्तीति निश्चप्रचम्॥

## पुराणक्रमसंख्यादानादिमाहात्म्यम्

ब्रह्मणाऽभिर्हितं पूर्वं यावन्मात्रं मरीचये ।
लक्षार्द्धार्द्धन्तु तद् ब्राह्मं लिखित्वा सम्प्रदापयेत् ॥ १ ॥
वैशाख्यां पौर्णमास्याञ्च स्वर्गार्थी जलधेनुमत् ।
पाद्मं द्वादशसाहस्रं ज्येष्ठे दद्याच्च धेनुमत् ॥ २ ॥
वराहकल्पवृत्तान्तमधिकृत्य पराशरः ।
त्रयोविंशतिसाहस्रं वैष्णवं प्राह चार्पयेत् ॥ ३ ॥
जलधेनुमदाषाढ्यां विष्णोः पदमवाप्नुयात् ।
चतुर्दशसहस्राणि वायवीयं हरिप्रियम् ॥ ४ ॥
श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
तद्यल्लिखित्वा तद् विप्रे श्रावण्यां गुडधेनुमत् ॥ ५ ॥
यत्राधिकृत्य गायत्रीं कीर्त्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद् भागवतमुच्यते ॥ ६ ॥
सारस्वतस्य कल्पस्य प्रोष्ठपद्यान्तु तद् ददेत् ।
अष्टादश सहस्राणि हेमसिंहसमन्वितम् ॥ ७ ॥
यत्राह नारदो धर्मान् वृहत्कल्पाश्रितानिह ।
पञ्चविंशसहस्राणि नारदीयं तदुच्यते ॥ ८ ॥
सधेनुञ्चाश्विने दद्यात् सिद्धिमात्यन्तिकीं लभेत् ।
यत्राधिकृत्य शकुना धर्माधर्मविचारणा ॥ ९ ॥
कार्त्तिक्यां नवसाहस्रं मार्कण्डेयमथापयेत् ।
अग्निना यद् वशिष्ठाय प्रोक्तञ्चाग्नेयमेव तत् ॥ १० ॥
लिखित्वा पुस्तकं दद्यात् मार्गशीर्ष्यां स सर्वदः ।
द्वादशैव सहस्राणि सर्वविद्यावबोधनम् ॥ ११ ॥
चतुर्दशसहस्राणि भविष्यं सूर्य्यसम्भवम् ।
भवस्तु मनवे प्राह दद्यात् पौष्यां गुडादिमत् ॥ १२ ॥
सावर्णिना नारदाय ब्रह्मवैवर्त्तमीरितम् ।
रथान्तरस्य वृत्तान्तमष्टादशसहस्रकम् ॥ १३ ॥
माघ्यां दद्याद् वराहस्य चरितं ब्रह्मलोकभाक् ।
यत्राग्निलिङ्गमध्यस्थो धर्मान् प्राह महेश्वरः ॥ १४ ॥

कालिकायै नमस्तुभ्यमिति यो भाषते स्वयम् ।
तस्य हस्ते स्थिता मुक्तिस्त्रिवर्गस्तु वशानुगः ॥ २८ ॥
इति वः कथितं पुण्यं पुराणं कालिकाह्वयम् ।
मन्त्रयन्त्रमयं[५] शुद्धं ज्ञानदं कामदं परम् ॥ २९ ॥
इति गुह्यतमं लोके वेदेषु च तथा द्विजाः ।
देवगन्धर्वसिद्धाद्यैः स्पृहणीयमिदं सदा ॥ ३० ॥
अधीतं च श्रुतं मत्तो वसिष्ठेन महात्मना ।
इदं पुराणममृतं कालिकाह्वयमुत्तमम् ॥ ३१ ॥
तेन गुप्तमिदं सर्वं कामरूपे सुरालये ।
तमिदानीं समाख्यातं व्यक्तीकृत्य महर्षयः ॥ ३२ ॥
युष्माभिरपि नो देयं गोप्यं लोकेषु सर्वदा ।
शठाय खलचित्ताय नास्तिकायाजितात्मने ॥ ३३ ॥
भक्तिश्रद्धाविहीनाय न दातव्यं कदाचन ।
इदं सकृत् पठेद् यस्तु पुराणं कालिकाह्वयम् ॥ ३४ ॥
स कामानखिलान् प्राप्य शेषेऽमृतमवाप्नुयात् ।
मन्दिरे लिखितं यस्य पुराणमिदमुत्तमम् ॥ ३५ ॥
सदा तिष्ठति नो तस्य विघ्नः संजायते द्विजाः ।
योऽधीतेऽहन्यहन्येतद् गुह्यं तन्त्रमिदं परम् ॥ ३६ ॥
अधीताः सकला वेदास्तेनेह द्विजसत्तमाः ।
तस्मान्नैवाधिकोऽन्योऽस्ति कृतकृत्यो विचक्षणः ॥ ३७ ॥
स सुखी बल्लवाँल्लोके दीर्घायुरपि जायते ॥ ३८ ॥

[६]यो लोकमीशं सततं बिभर्ति
यः पालयत्यन्तकरस्तथान्ते ।
इदं समस्तं भ्रममभ्रमं वा
मदीयरूपं च नमोऽस्तु तस्मै ॥ ३९ ॥

प्रधानपुरुषो यस्य प्रपञ्चो योगिना हृदि ।
यः पुराणाधिपो विष्णुः प्रसीदतु स वः शिवः[७] ॥ ४० ॥

---

५. एतद् वेदमयं ।

६. यो लोक ईश. सततं बिभर्ति । यः पादपद्मान्तकरस्तथाते ॥

७. स्थितः ।

योहेतुरुग्रः पुरुषः पुराणः
सनातनः शाश्वत ईश्वरः परः ।
पुराणकृद् वेदपुराणवेद्यः
प्रस्तौमि तन्नौमि पुराणशेषे ॥ ४१ ॥

इति सकलजगद् बिभर्ति यासां
मधुरिपुमोहकरी [८]रमास्वरूपा ।
रमयति च हरं शिवास्वरूपा
वितरतु वो विभवं शुभानि माया ॥ ४२ ॥

इति श्रीकालिकापुराणे नवतितमोऽध्यायः ॥ ९० ॥

इति श्रीकालिकापुराणं समाप्तम् ।

---

८. दिव्य···· ।